वज्रपुष्पं प्रतिच्छेदं हुँ-फट्-स्वाहा ततो वदेत् ।
मूलमन्त्रं समुच्चार्य्य ङेन्तं नाम (१) नियोजयेत् ॥ ४९ ॥
ततश्च परिवाराणि पूजयेद्देवि ! कौलिकः ।
इदं द्रव्यं समुच्चार्य्य परिवारेभ्यो नमो(२)ऽन्ततः ॥ ५० ॥
प्रणवाद्येन मनुना कुलीनः पूजनञ्चरेत् ।
अक्षोभ्यं * मौलिदेशे तु प्रागाद्यष्टदलेषु च ॥ ५१ ॥
शक्तयोऽष्टौ (३) भैरवांश्च द्वारेषु चतुरः सुरान् ।
वायव्यादीशपर्य्यन्तं गुरुपङ्क्ति र्व्यवस्थिता ॥ ५२ ॥
ततो जप्त्वा स्तवैः स्तुत्वा नत्वा च विसृजेद्धृदि ।
नैवेद्यं साधकेभ्यश्च स्त्रीभ्यो दद्यान्न कुत्रचित् ॥ ५३ ॥
इति ते कथितं भद्रे ! तारायाः पूजनं महत् ।
मानसं यान्त्रिकञ्चैव नित्यं नृणामिति स्मृतम् (४) ॥५४॥
नाधिकारो यौनिके च (५) स्त्रीणां मानस-यन्त्रयोः ।
विधेयं पूजनं देवि ! न कुर्य्याद्वा निजेच्छया (६) ॥ ५५ ॥

॥ इति श्रीतारातन्त्रे द्वितीयः पटलः ॥

---

(१) नमो । ग । (२) नमस्ततः । ख ।

* अक्षोभ्योत्पत्तिविवरणं तोड़लतन्त्रे प्रथमपटले ।

"समुद्रमथने देवि ! कालकूटं समुत्थितम् ।
सर्व्वे देवाश्च देव्यश्च महाक्षोभमवाप्नुयुः ।
क्षोभादिरहितं यस्मात् पीतं हालाहलं विषम् ।
अतएव महेशानि ! अक्षोभ्यः परिकीर्त्तितः ।
तेन सार्द्धं महामाया तारिणी रमते सदा ॥

(३) दलेष्टौ भैरवाद्यष्टौ । ख । (५) यौनिकेयश्च । क ।

(४) स्थितं । क । (६) कुर्य्याद्वापि निजेच्छया । ग ।

# तृतीयः पटलः ।

श्रीभैरव उवाच ।

अथातः संप्रवक्ष्यामि शृणु त्वं पर्व्वतात्मजे !
पात्रमेकं द्वयं वापि त्रयं वा पञ्च वा प्रिये ! ॥ १ ॥
पिवेद्वीरवरश्रेष्ठो यः स रुद्र इतीरितम् ।
सच्चिदानन्दयोगेन यः कारणमदो भवेत् ॥ २ ॥
स एव परमानन्दो ब्रह्मसायुज्यदायकः ।
तस्माज्ज्ञात्वा सिद्धिमूलं साधकः कारणं पिवेत् ॥ ३ ॥
विनानन्दं सच्चिदायाः पानं यत्कारणस्य च ।
तन्न चानन्द-जनकं बौद्धदेव-वचो यथा ॥ ४ ॥
पूज्यो गुरुः सदा चात्र तद्वत्तत्तनयोपि च ।
तत्पत्नी सर्व्वभावेन सदा कौलिकपूरुषैः ॥ ५ ॥
तस्याः सन्तोषमात्रेन देवी तुष्टा भवेत् प्रिये ! ।
तस्मात् स्तोत्रै र्धनै र्वाक्यै (१) स्तोषयेत् ब्रह्मदायकम् ॥६॥
नत्वा जपविधानञ्च शृणुष्वैकमनाः प्रिये ! ।
आदौ षड़ङ्गं विन्यस्य गुरो र्ध्यानं ततःपरम् ॥ ७ ॥
मन्त्रध्यानं * ततःपश्चात् देवीध्यानं तत श्चरेत् (२) ।
सेतुरूपं तत स्तारं जप्त्वा जपमथाचरेत् ॥ ८ ॥

---

(१) तस्मात् तत्तोषयौ र्वाक्यै । ख ।   (२) परम् । ग ।

* देव्या ध्येयरूपं व्याख्यातं भगवता शङ्करेण, तत्तु ताराहस्यवृत्तिकातो लिख्यते "तस्मिन् विश्वव्यापके वारिणि आः—काराद्रक्तपङ्कजं तदुपरि टाङ्कारात्

पुनस्तारं ततो देवीध्यानं कृत्वा समर्पयेत् ।
शिवोऽहं तारिणीरूपमात्मानमिति चिन्तयेत् ॥ ९ ॥
परिवारमयश्चाहमिति ध्यायेदनारतम् (१) ।
इति ते कथितं देवि ! रहस्यं तारिणीमयम् ॥ १० ॥
न देयं पशवे तस्मात् शपथो मे त्वयि प्रिये ! ॥ ११ ॥

॥ इति श्रीतारातन्त्रे तृतीयः पटलः ॥

---

श्वेतपङ्कजं तदुपरि नीलसन्निभं हुङ्कारं ध्यात्वा तत्र हुङ्कार-बीजभूषितां कर्त्तृकां ध्यायेत् । कर्त्त्रग्रपरिगतां आत्माभेदेन देवतां ध्यायेत् । आं ह्रीं क्रों स्वाहेति एकादशवारं जपन् आत्मनः प्राणान् प्रतिष्ठाप्य ध्यायेत् ।..........................
तदुपरि नीलसन्निभं हुङ्कारं ध्यात्वा हुङ्कारभूषितां कर्त्तृकां ध्यायेत्, (तदुपरि) खर्व्वामभिनव-जलदनीलाम्, लम्बोदरीं व्याघ्रचर्म्मावृतां कटौ, पीनोन्नतपयोधरां, रक्तवर्त्तुलत्रिनेत्रां ललज्जिह्वां दंष्ट्राकरालवदनां पिङ्गोग्रैकजटाजूटां तदुपरि पार्श्वद्वये लम्बमान-नीलोत्पलमालां, अतिनीलनागबद्धजटाजूटां ललाटे श्वेतास्थि-पट्टिकासमेत-कपालपञ्चतयां जवाकुसुमसङ्काश-तक्षकनागकृतकुण्डलां अतिशुभ्र-नागकृतहारां दूर्व्वादलश्याम-नागकृतयज्ञोपवीतां चतुर्भुजां तत्रोपरि दक्षिणे सरक्तमांसखण्डमण्डित-मुष्टिनिविष्टजटाजूट-संलग्नखड्गभूषितकरां वामे रक्त-नाल-किञ्चिद्विकस्वर-नीलोत्पलकरां अधस्तात् दक्षिणे बीजभूषितहुम्लकर्त्तृक (का)-भूषितकरां अधस्तात् वामे त्रिजगज्जाड्यसमेत-शुभ्रकपालमण्डितकरां भुज-चतुष्टये शुभ्रनागकृतकेयूरां कनकाभनागकृतकङ्कनां शवारूढ़ां निर्भरयन्त्रणाभि-प्रायेण शवहृदयसङ्कुचित-दक्षिणचरणां शवपादद्वयस्थित-प्रसारितवामचरणां कुन्दाभनागकृतकटिसूत्रां ईषद्रक्तनागकृतनूपुरां सद्यःकृत्तगलद्रुधिरधारान्योन्य-केशग्रथित-श्रीयुतपादपद्मप्रलम्बि-पञ्चाशन्मुण्डमालां ज्वलदनलचितामध्यस्थां द्वीपिचर्म्मकृतोत्तरीयां योषिदखिलालङ्कारालङ्कृतां मौलावक्षोभ्य-शोभितां सावेश-स्मेरवदनां एवंभूतमात्मानं ध्यायेदिति भूतशुद्धिः ।”

(१) परिवारमतश्चाहं इति ध्यायेदनारतम् । ख ।

## चतुर्थः पटलः ।

श्रीभैरव्युवाच ।

यत् प्रसादादिदं सर्व्वं कुलाचारविधानकम् ।
तस्यैवाद्यन्त-(१)माहात्म्यं श्रोतुमिच्छामि साम्प्रतम् ॥ १ ॥

श्रीभैरव उवाच ।

गुरुः परमगुरुश्चैव परापरगुरु स्तथा ।
परमेष्टिगुरु श्चैव चत्वारो गुरवः स्मृताः ॥ २ ॥
ऋषिरेव गुरुः प्रोक्तो (२) मन्त्रदः परमो गुरुः ।
परापरगुरु श्चाहं त्वमेव (३) परमेष्टिका ॥ ३ ॥
सर्व्वेषामेव मध्ये तु प्रधानं परमो गुरुः ।
गुरो र्विना (४) महामोक्षं न काशी न च गङ्गया (?) ॥४॥
माहात्म्यं तस्य (५) वक्ष्यामि येन तुष्टा च शाम्भवी ।
गुरुमन्त्रेष्टदेवीनामेकत्वं परिकथ्यते ॥ ५ ॥
तत्पत्नी च विशेषेण परदेवीविशेषभाक् ।
सरल्या(६)ऽसरला वापि निष्ठुरा वा प्रियोदिता (७) ॥ ६ ॥

---

(१) तस्यैवात्वाद्य । ख । तस्यैवाद्यस्य माहात्म्यं श्रोतुमिच्छामि संप्रति । ग ।
(२) ( श्रोक्तो ) । ख ।
(३) गुरुस्त्वं परमेष्टिका । ख ।
(४) एतत् श्लोकार्द्धं क ख-पुस्तकयो र्नास्ति ।
(५) तेन । क ।
(६) सरला सरला ः क—ख । (७) तथोदिता । ख ।

कुत्सिता (१) व्याधिता वापि मूढ़ाऽमूढ़ापि वा प्रिये ।
सदेष्टदेवीभावेन भावनीया (२) कुलोत्तमैः ॥ ७ ॥
तत्तनुजोदितञ्चैव यद्वा साधकभाषितम् ।
यत्नेनैव विधातव्यमशक्ते यत्नवान् भवेत् ॥ ८ ॥
वीरोच्छिष्टं विनामद्यं शक्त्युच्छिष्टं तदप्युत ।
भोजयेन्निर्व्विकल्पेन मनसा वीरवल्लभः ॥ ९ ॥
पुरा-(३)प्रोक्तानि पञ्चैव एकं वा शृणु भैरवि !
शोधयित्वा निवेद्यैव योऽश्नीयात् स च भैरवः ॥ १० ॥
सुसिद्धाः (४) पीठसंस्था ये साधकास्तेऽर्च्चनाश्रयाः ।
गुरु-(५)तद्दयितापुत्रपुत्री-साधकयोषितां ॥ ११ ॥
यत्रेच्छा वर्त्तते तत्तु समर्प्यं (६) परमेश्वरि ! ।
अवश्यं तारिणीमन्त्रे शक्तिपूजा विधीयते ॥ १२ ॥
निजकान्तेष्टदेवी तु (७) पूजनीया विशेषतः ।
समानदेवतामन्त्रं निजकान्ता जपेद्यदि ॥ १३ ॥
तदा सर्व्वार्थसिद्धिः स्यात् तुष्टा भवति तारिणी ।
शरीरार्द्धं स्मृता कान्ता यस्मात्तद्यत्नवान् भवेत् ॥ १४ ॥
तस्याः किञ्चिच्च माहात्म्यं चीनतन्त्रे मयोदितम् ।
मैथुने वर्जनीया या स्तासां विधि रिहोच्यते ॥ १५ ॥

---

(१) कुत्सिताऽकुत्सितावापि । ग ।
(२) सदेष्टदेवीं भावयन् भावनीया कुलोत्तमैः । ख ।
(३) पूजनीया । क ।
(४) सुसिद्धापीठसंस्थायै साधकास्ते धनाश्रयाः । ख ।
(५) गुरुस्तद्दयिता । ख ।
(६) समर्प्य । ख ।    (७) निजकान्तैरष्टदेव्यः । ख ।

गुरुपत्नी गुरुसुता गुरुपुत्रवधू स्तथा ।
सतीर्थस्य तु वीरस्य साधकस्य तथा प्रिये ! ॥ १६ ॥
कान्ताया मन्त्रपुत्रग्राश्च रमणान्नारकी भवेत् ।
मैथुनस्य विधानन्तु कथ्यते शृणु भैरवि ! ॥ १७ ॥
अधः कृत्वा (१) महादेवीं स्वयं भैरवरूपधृक् ।
पुरतो मूलमुच्चार्य्य धर्म्माधर्म्मादिकं पठन् ॥ १८ ॥
गजतुण्डाख्यतत्त्वेन योजयेल्लिङ्गभैरवम् ।
तस्मात् शतं विंशतिं वा जप्त्वा तेजस्तु पातयेत् ॥ १९ ॥
मूलान्ते तु (२) प्रकाशेति वचनं परिपठ्य (३) च ।
इति ते कथितं देवि ! यथोक्तं बुद्धरूपिणा ॥ २० ॥
सिद्धिप्रदं समाचाराद् (४) गोपनीयं स्वयोनिवत् ॥ २१ ॥

॥ इति तारातन्त्रे चतुर्थः पटलः ॥

---

## पञ्चमः पटलः ।

श्रीभैरव्युवाच ।

त्वत्प्रसादान्महादेव ! ज्ञातमेतन्मयाखिलम् ।
पुरश्चरणहीनेन मन्त्रेण न फलं भवेत् ॥ १ ॥
तस्माच्च फलदानन्तु पुरश्चरणमुच्यताम् * ।

---

(१) एवं कृत्वा । ख ।
(२) मूलान्ततः । क—ख ।
(३) परिपठ्यते । ख ।
(४) समाचारं । क ।

* श्रीभैरव्युवाच इत्यादि पुरश्चरणमुच्यतां इत्यन्तं क ग-पुस्तकयो र्नास्ति ।

श्रीभैरव उवाच ।

अथातः संप्रवक्ष्यामि पुरश्चरणमुत्तमम् ।
कुजे वा शनिवारे वा नरमुण्डं समाहरेत् ॥ २ ॥
वितस्तिमात्रे खाते तु निखनेत् सङ्गवर्ज्जितः (१) ।
तत्र नक्तं दशशतं प्रजपेन्मन्त्रसिद्धये ॥ ३ ॥
अनेनैव विधानेन (२) पुरश्चर्य्या विधीयते ।
अथवान्यप्रकारेण पुरश्चरणमुच्यते ॥ ४ ॥
गुरुं तद्दयितां वापि तत्सुतं तत्सुताञ्च वा ।
देववत् पूजनं कृत्वा जपेत्तावद् वरानने ! ॥ ५ ॥
अष्टाधिकं शतं वापि पुरश्चरणमुच्यते ।
अथवा मूर्द्धिपद्मे तु ध्यात्वा पूजां विधाय च ॥ ६ ॥
अष्टाधिक-(३)सहस्रञ्च जपेद्भैरवरूपधृक् ।
अनेनैव विधानेन पुरश्चरणमुच्यते ॥ ७ ॥
अथवान्यप्रकारेण पुरश्चरणमुच्यते ।
चतुर्द्दशीं समारभ्य यावदन्या चतुर्द्दशी ॥ ८ ॥
सहस्रं प्रत्यहं साष्टं जपेत् (४) सिद्धीश्वरो भवेत् ।
एतत् सर्व्वं श्मशाने च रात्रौ वीरै र्व्विधीयते ॥ ९ ॥
इति ते कथितं भद्रे ! (५) पुरश्चरणमुत्तमम् ।
गोपनीयं प्रयत्नेन जनन्या जारवत् प्रिये ! ॥ १० ॥

---

(१) संस्थाप्य प्रजपेत् सङ्गवर्ज्जितः । ख ।
(२) प्रकारेण पुरश्चर्य्या प्रगीयते । ख ।
(३) अष्टाधिकं । ख ।
(४) जप्त्वा । ख । (५) कान्ते । क ।

जीवहीनो यथा देही सर्व्वकर्म्मसु न क्षमः ।
पुरश्चरणहीनोऽपि तथा मन्त्रः प्रकीर्त्तितः ॥ ११ ॥
सकृत् द्विधा (१) त्रिधा वापि चतुर्द्धा युगभेदतः ।
कर्त्तव्यञ्च प्रयत्नेन पुरश्चरणमुत्तमम् ॥ १२ ॥
इदानीं रक्तदानस्य विधानं वरवर्णिनि ! ।
ग्राम्यारण्यजलस्थानां रुधिरं प्रीतिवर्द्धनम् ॥ १३ ॥
घृताक्तं मधुनाक्तञ्च विशेषात् प्राणवल्लभे ! ।
जन्तुरक्तेन सम्पूर्ण-कलसात् पर्व्वतात्मजे ! ॥ १४ ॥
तिलप्रमाणं रुधिरं निजदेहस्य शस्यते ।
ललाट-हस्त-हृदय-शिरोभ्रूमध्य-देशतः ॥ १५ ॥
स्वदेहरुधिरे दत्ते रुद्रदेह इवापरः ।
ब्राह्मणो यदि वा क्षत्रो (२) वैश्यः शूद्रश्च एव वा ॥ १६ ॥
प्रदद्यान्निजरक्तञ्च मन्त्रयित्वा प्रयत्नतः ।
शक्तीनां नाधिकारोऽस्ति स्वदेहरुधिरार्पणे ॥ १७ ॥
मन्त्रान्तरं प्रवक्ष्यामि शृणु भैरवि ! सादरम् ।
पूर्व्वोक्तमन्त्रराजस्य मध्यवीजत्रयं प्रिये ! ॥ १८ ॥
कुल्लुका नाम देवी च महानीलसरस्वती ।
एकैव हि महादेवी नाममात्रं (३) त्रिधा भवेत् ॥ १९ ॥
प्रणवव्यतिरेकेन तृतीयैकजटा भवेत् ।
यथा पञ्चाक्षरी तारा तथा वर्णचतुष्टयम् (४) ॥ २० ॥

---

(१) सकृद्द्विधा । ग ।
(२) क्षत्री । ख ।
(३) नामभेदात्त्रिधा भवेत् । ख ।
(४) तथा वर्णचतुष्टया । ख ।

माहात्म्यं (१) न च भेदः स्यात् साम्यमित्यभिधीयते ।
इति ते कथितं तत्त्वं दुर्लभं मयका प्रिये ॥ २१ ॥
गोपनीयं प्रयत्नेन योनिः परनरे यथा ॥ २२ ॥

॥ इति श्रीतारातन्त्रे पञ्चमः पटलः ॥

---

## षष्ठः पटलः ।

श्रीभैरव उवाच । (२)

अथान्यत् संप्रवक्ष्यामि रहस्यं तारिणीमयम् ।
उग्रादित्रयमन्त्रस्य माहात्म्यं वर्णयाम्यहम् (३) ॥ १ ॥
संक्षेपत स्तथापीह वर्णयामि महेश्वरि ! (४)
तारामन्त्रविदो मन्त्री कालीमन्त्रविद स्तथा ॥ २ ॥
शिवादप्यधिको देवि ! नात्र कार्य्यश्च संशयः ।
तारामन्त्रं विना देवि ! कालिकामन्त्रमेव च ॥ ३ ॥
नाप्नुयात् परमेशानि ! भोगमोक्षौ यशःश्रियौ (५) ।
तारिणीहृदयज्ञानी लतासाधन-तत्परः ॥ ४ ॥
पञ्चमप्राशनप्राज्ञो देवैरपि नमस्यते ।
निजकान्ता-स्वरूपेण निजबन्धुस्वरूपतः ॥ ५ ॥

---

(१) माहात्म्ये । ख ।
(२) क-ग पुस्तकयो र्नास्ति ।
(३) माहात्म्यवर्णनामहम् । क—ग ।
(४) वरानने ! । ख ।
(५) भोगमोक्षयशःश्रियः । ग ।

दारिद्र्येण विरोधेन न्यक्कारादिप्रयोगतः ।
पीड़ादिना विधीयेत देवि भङ्गोऽत्र साधने ॥ ६ ॥
तस्माद्यत्नेन वीरेन्द्रो गुरवे विनिवेदयेत् ।
सर्व्वथा सर्व्वयत्नेन सर्व्वोपास्या च तारिणी ॥ ७ ॥
भद्राभद्रविचारञ्च यः करोति स दुर्मतिः ।
इति ते कथितं तत्त्वमनुष्ठेयं (१) समासतः ॥ ८ ॥
दर्शनाद्भक्तशाक्ता ये सुखन्ते परिभुञ्जते ।
तारातन्त्रं चीनतन्त्रं कालीतन्त्रं गुरूदितम् ॥ ९ ॥
सर्व्वथा गोपनायैव (२) शक्तिं वक्षःस्थलेऽर्पयेत् ।
देयं शिष्याय शान्ताय साधकाय महात्मने ॥ १० ॥
विलासिनि स्वतन्त्राय गुरुतन्त्राय सुव्रते ! ।
अन्यद्यन्नोक्तमत्रापि तत्सर्व्वं गुरुवक्त्रतः ॥ ११ ॥
विरुद्धं वेदवादेऽपि श्रोतव्यं नात्र संशयः ॥ १२ ॥

॥ इति श्रीभैरवभैरवीसंवादे तारातन्त्रे षष्ठः पटलः ॥

[ समाप्तोऽयं ग्रन्थः । ]

---

(१) यदुक्तञ्च समासतः । ख । मनुष्या (ष्ठ्या) च । ग । ष्ठनुष्ठा च इति भवितुं युक्तः ।
(२) गोपमेदेव । ग ।

# APPENDIX.

## वृद्धवशिष्ठवृत्तान्तः ।

( १ )

[ रुद्रयामले सप्तदशपटलः । ]

वशिष्ठो ब्रह्मपुत्रोऽपि चिरकालं सुसाधनम् ।
चकार निर्जने देशे कृच्छ्रेण तपसा वशी ॥
षट्सहस्रं वत्सरञ्च व्याप्य योगादिसाधनम् ।
तथापि साक्षाद् गिरिजा न बभूव महीतले ॥
ततो जगाम क्रुद्धोऽसौ तातस्य निकटे प्रभुः ।
सर्व्वं तत्कथयामास स्वीयाचारक्रमं प्रभो ! ॥
अन्यमन्त्रं देहि नाथ ! एषा विद्या न सिद्धिदा ।
अन्यथा सुदृढं शापं तदाग्र (त्वदग्रे) प्रददामि हि ॥
ततस्तं वारयामास एवं न कुरु भो ! सुत !।
पुनस्त्वां भज भावेन योगमार्गेण पण्डित: ॥
ततः सा वरदा भूत्वा आगमिष्यति तेऽग्रतः ।
सा देवी परमा शक्तिः सर्व्वसङ्कटतारिणी ॥
कोटिसूर्य्यप्रभा नीला चन्द्रकोटिसुशीतला ।
स्थिरविद्युल्लताकोटिसदृशी कालकामिनी ॥

सर्व्वस्वरूपा सर्व्वाद्या धर्म्माधर्म्मविवर्जिता ।
शुद्धचीनाचाररता शक्तिचक्रप्रवर्त्तिका ॥
अनन्तानन्तमहिमा संसारार्णवतारिणी ।
बुद्धेश्वरी बुद्धिरूपा अथर्व्ववेदशाखिनी ॥
सा पाति जगतां लोकां स्तस्या कर्म्म चराचरम् ।
भज पुत्र ! स्थिरानन्दः कथं शप्तुं समुद्यतः ॥
एकान्तचेतसा नित्यं भज पुत्र दयानिधे ।
तस्य ( स्या ) दर्शनमेवं हि अवश्यं समवाप्स्यसि ॥
एतच्छ्रुत्वा गुरो र्व्वाक्यं प्रणम्य च पुनः पुनः ।
जगाम उदधे स्तीरे वशी वेदान्तवित् शुचिः ॥
सहस्रवत्सरं सम्यक् जजाप परमं जपम् ।
आदेशोपि न बभूव ततः क्रोधपरो मुनिः ॥
व्याकुलात्मा महाविद्यां वशिष्ठः शप्तुमुद्यतः ।
द्विराचम्य महाशापः प्रदत्तस्तु सुदारुणः ॥
तेनैव मुनिना नाथ ! मुनेरग्रे कुलेश्वरी ।
आजगाम महाविद्या योगिनामभयप्रदा ॥
अकारणमरे विप्र ! शापो दत्तः सुदारुणः ।
मम पूजां न जानासि मत्कुलागमचिन्तनम् ॥
कथं योगाभ्यासवशात् मत्पादाम्भोजदर्शनम् ।
प्राप्नोति मानुषो देवो मम ध्यानमदुःखदम् ॥
यः कुलार्थी सिद्धमन्त्री मद्वेदाचारनिर्म्मलम् ।
ममैव साधनं पुण्यं वेदानामप्यगोचरम् ॥
बौद्धदेशेऽथर्व्ववेदे महाचीने सदा व्रज ।
तत्र गत्वा महाभावं विलोक्य मत्पदाम्बुजम् ॥

मत्कुलज्ञो महर्षे ! त्वं महासिद्धो भविष्यसि ।
एतद्वाक्यं कथित्वा सा वायव्याकाशगामिनी ॥
निराकाराऽभवत् शीघ्रं ततः साकाशवाहिनी ।
ततो मुनिवरः श्रुत्वा महाविद्यासरस्वतीम् ॥
जगाम चीनभूमौ च यत्र बुद्धः प्रतिष्ठितः ।
पुनः पुनः प्रणम्यासौ वशिष्ठः चितिमण्डले ॥
रक्ष रक्ष महादेव ! बुद्धरूपधराव्ययः ( य ! ) ।
अति दीनं वशिष्ठं मां सदाव्याकुलचेतसम् ॥
ब्रह्मपुत्रं महादेवीसाधनायाजगाम च (यः) ।
सिद्धिमार्गं न जानामि देवमार्गपरोहरः (१) ।
तवाचारं समालोक्य भयानि सन्ति मे हृदि ॥
तन्नाशय मम क्षिप्रं दुर्व्वुद्धिं वेदगामिनीम् ।
वेदवहिष्कृतं कर्म्म सदा ते चालये प्रभो ! ॥
कथमेतत्प्रकारश्च मद्यं मांसं तथाङ्गनां (ना)
सर्व्वे दिगम्बराः सिद्धाः रक्तपानोद्यता वराः ।
मुहुर्मुहुः प्रपिवन्ति रमयन्ति वराङ्गनाम् ॥
सदा मांसासवैः पूर्णा मत्ता रक्तविलोचनाः ।
निग्रहानुग्रहे शक्ताः पूर्णान्तःकरणोद्यताः ॥
वेदस्यागोचराः सर्व्वे मद्यस्त्री-सेवने रताः ।
इत्युवाच महायोगी दृष्ट्वा वेदवहिष्कृतम् ॥
प्राञ्जलिर्व्विनयाविष्टो वद चेतत्कुलप्रभो ! ।
मनः प्रवृत्तिरेतेषां कथं भवति पावन (२)(नी) ॥

---

(१) सदामार्गपरोहरः। वि। विक्रमपुरादानीतं पुस्तकं वि-संज्ञया निर्दिष्टम्।
(२) पामरः ( रा ) वि।

कथं वा जायते सिद्धि र्व्वेदकार्य्यं विना प्रभो ! ।

बुद्ध उवाच ।

वशिष्ठ ! शृणु वक्ष्यामि कुलमार्गमनुत्तमम् ।
येन विज्ञानमात्रेन रुद्ररूपी भवेत् क्षणात् ॥
सङ्क्षेपेण सर्व्वसारं कुलसिद्ध्यर्थमागमम् ।
आदौ शुचि र्भवेद्धीरो विवेकाक्रान्तमानसः ।
पशुभावस्थिरचेताः पशुसङ्गविवर्जितः ॥
एकाकी निर्जने स्थित्वा कामक्रोधादिवर्जितः ।
सदा योगाभ्यासरतो योगशिक्षादृढ़व्रतः ॥
वेदमार्गाश्रयो नित्यं वेदार्थनिपुणो (१) महान् ।
एवं क्रमेण धर्म्मात्मा शीलौदार्य्यगुणान्वितः ॥
धारयेन्मारुतं नित्यं श्वासमार्गे मनोलयम् ।
एवमभ्यासयोगेन वशी योगी दिने दिने ॥
शनैः शनैः कृताभ्यासाद्देहे स्वेदोद्गमोऽधमः ।
मध्यमः स्वल्पसंयुक्तो भूमित्यागः परो मतः ॥
प्राणायामेन सिद्धिः (द्धः) स्यान्नरो योगेश्वरो भवेत् ।
योगी भूत्वा कुम्भकज्ञो मौनी भक्तो दिवानिशम् ॥
शिवे कृष्णे ब्रह्मपदे एकान्तभक्तिसंयुतः ।
ब्रह्म-विष्णु-शिवा एते वायवोगतिचञ्चला ॥
एवं विभाव्य मनसा कर्म्मणा वचसा शुचिः ।
शक्तौ चित्तं समाधाय चिद्रूपायां स्थिराशयः ॥
ततो महावीरभावं कुलमार्गमहोदयम् ।
शक्तिचक्रं सत्वचक्रं वैष्णवं नवविग्रहम् ॥

---

(१) निपुणः पुमान् । वि ।

समाश्रित्य भजेन्मन्त्री कुलकात्यायनीं पराम् ।
प्रत्यक्षदेवतां श्रीदां चण्डो देवगा (?) निकृन्तनीम् ॥
चिद्रूपां ज्ञाननिलयां चैतन्यानन्दविग्रहाम् ।
कोटिसौदामिनीभासां सर्व्वतत्त्वस्वरूपिणीम् ॥
अष्टादशभुजां रौद्रीं शिवमांसाचलप्रियाम् ।
आश्रित्य प्रजपेन्मन्त्रं कुलमार्गाश्रयो नरः ।
कुलमार्गात् परं मार्गं को जानाति जगत्त्रये ।
एतन्मार्गप्रसादेन ब्रह्मा स्रष्टा स्वयं महान् ॥
विष्णुश्च पालने शक्तो निर्म्मलः सत्वरूपधृक् ।
सर्व्वसेव्यो महापूज्यो यजुर्व्वेदाधिपो महान् ॥
हरः संहारकर्त्ता च वीरेशो-(१)त्तममानसः ।
सर्व्वेषामन्तकः क्रोधी क्रोधराजो महाबली ॥
वीरभावप्रसादेन दिक्पाला रुद्ररूपिणः ।
मासेनाकर्षणं सिद्धि र्द्विमासे वाक्पति र्भवेत् ॥
मासत्रयेण संयोगी जायते सुरवल्लभः ।
एवं चतुष्टये मासि भवेद्दिक्पालगोचरः ॥
पञ्चमे पञ्चबाणः स्यात् षष्ठे रुद्रो भवेद्ध्रुवम् ।
एतदाचारसारं हि सर्व्वेषामप्यगोचरम् ॥
एतन्मार्गं कौलमार्गं कौलमार्गात् परं न हि ।
योगिनां दृढ़चित्तानां भक्तानामेकमासतः ॥
कार्य्यसिद्धि र्भवेन्नारी कुलमार्गप्रसादतः ।
पूर्णयोगी भवेद्विप्रः षण्मासाभ्यासयोगतः ॥

---

(१) मत्तमानसः । पाठान्तरम् ।

शक्तिं विना शिवोऽशक्तः किमन्ये जड़बुद्धयः ।
इत्युक्त्वा बुद्धरूपी च कारयामास साधनम् ॥
कुरु विप्र ! महाशक्तिसेवनं मद्यसाधनम् ।
महाविद्यापदाम्भोजदर्शनं समवाप्स्यसि ॥
एतत् श्रुत्वा गुरो र्वाक्यं स्मृत्वा देवीं सरस्वतीम् ।
मदिरासाधनं कर्त्तुं जगाम कुलमण्डपे ॥
मद्यं मांसं तथा मत्स्यं मुद्रा मैथुनमेव च ।
पुनः पुनः साधयित्वा पूर्णयोगी बभूव सः ॥

---

( २ )

## [ ब्रह्मयामले देवीश्वरसंवादे प्रथमपटले । ]

"ब्रह्मणो मानसः पुत्रो वशिष्ठः स्थिरसंयमी ।
तारामाराधयामास पुरा नीलाचले मुनिः ॥ १३ ॥
जपन् स तारिणीं विद्यां कामाख्यायोनिमण्डले ।
गमयामास वर्षाणामयुतं ध्यानतत्परः ॥ १४ ॥
वर्षायुतेन तस्यैवं चिरमाराधिता सती ।
नानुग्रहं चकारासौ तारा संसारतारिणी ॥ १५ ॥
अथासौ पितरं गत्वा ब्रह्माणं परमेष्ठिनम् ।
कोपेन ज्वलितो विद्यां तत्याज पितुरन्तिके ॥ १६ ॥
द्वादशादित्यसङ्काशं तपोभि र्ज्वलितं मुनिम् ।
ब्रह्मा हि स मुनिं प्राह शृणु पुत्र ! वचो मम ॥ १७ ॥
तत्त्वज्ञानमयी विद्या तारा भुवनतारिणी ।
आराधय श्रीचरणमनुद्विग्नेन चेतसा ॥ १८ ॥

अस्याः प्रसादाद्देवाहं भुवनानि चतुर्द्दश ।
सृजामि चतुरो वेदान् कल्पयामि स्म लीलया ॥ १९ ॥
एतामेव समाराध्य विद्यां भुवनतारिणीम् ।
तत्त्वज्ञानमयो विष्णु र्भुवनं पालयत्यसौ ॥ २० ॥
संहारकाले च हरो रुद्रमूर्त्तिधरः परः (*) ।
तारामेव समाराध्य संहरत्यखिलं जगत् ॥ २१ ॥
..................................................

वशिष्ठ उवाच ।

देवानामादिभूतस्त्वं सर्व्वविद्यामयः प्रभो ! ।
कथं दत्ता दुराराध्या विद्या मह्यमियं त्वया ॥ २३ ॥
सहस्रवत्सरान् पूर्व्वं मियमाराधिता पुरा ।
नीलाचले निवसता हविष्यं भुञ्जता मया ॥ २४ ॥
तथापि तात ! तारिण्याः करुणा मयि नाभवत् ।
ततो गण्डूषमाचन्तु काले काले पिवन् जलम् ॥ २५ ॥
आराधयामि तां देवीं वत्सराणां सहस्रकम् ।
तथापि यदि नैवाभूत्तारिण्याः करुणा मयि ॥ २६ ॥
तथा(दा)हमेक-पादेन तिष्ठन्नीलाचलोपरि ।
परं समाधिमासाद्य निराहारो दृढ़व्रतः ॥ २७ ॥
तामेवाकरुणां ध्यायन् जपंस्तामेव सर्व्वदा ।
अतिवाहितवान् वर्षं सहस्राष्टकमुत्तमम् ॥ २८ ॥
एवं दशसहस्रन्तु वर्षाणामहमीश्वरीम् ।
कामाख्यायोनिमाश्रित्य समाराधितवान् प्रभो ! ॥ २९ ॥
अद्याप्यनुग्रह स्तस्या स्तथापि न हि दृश्यते ।
अत स्त्यजामि दुःसाध्यां विद्यामेतां सुदुःखितः ॥ ३० ॥

इति तद्वचनं श्रुत्वा ब्रह्मा लोकपितामहः ।
उवाच शान्तयन् पुत्रं वशिष्ठं मुनीनां वरम् ॥ २१ ॥

ब्रह्मोवाच ।

वशिष्ठ ! वत्स ! गच्छ त्वं पुन र्नीलाचलं प्रति ।
तत्रस्थितो महादेवी माराधय दृढ़व्रतः ॥ २२ ॥
कामाख्या-योनिमाश्रित्य जगतः परमेश्वरीम् ।
अचिरादेव ते सिद्धि र्भविष्यति न संशयः ॥ २३ ॥
एतस्याः सदृशी विद्या काचिन्न हि जगत्त्रये ।
इमां त्यक्त्वा पुन र्विद्यां अन्यां कां त्वं ग्रहीष्यसि ॥ २४ ॥
इति तस्य वचः श्रुत्वा प्रणम्य पितरं मुनिः ।
पुन र्जगाम कामाख्या-योनिमण्डलसन्निधिम् ॥ २५ ॥
तत्र गत्वा मुनिवरः पूजासम्भारतत्परः ।
आराधयन् महामायां वशिष्ठोऽपि जितेन्द्रियः ॥ २५ ॥
अथाराधयत स्तस्य सहस्रं परिवत्सरान् ।
जग्मु स्तारा-महादेवी-पादाम्भोजा-नुवर्त्तिणः ॥ २७ ॥
तथापि तां प्रति प्रीता यदा नाभून्महेश्वरी ।
तदा रोषेण महता जज्वाल स मुनीश्वरः ॥ २८ ॥
तदा जलं समादाय तां शप्तुमुपचक्रमे ।
एतस्मिन्नेव काले तु रुष्टमालोक्य तं मुनिम् ॥ २९ ॥
चचाल वसुधा सर्व्वा सशैल-वनकानना ।
हाहाकारो महानासीद्देवि ! देवेषु सर्व्वतः ॥ ४० ॥
ततो बभूव पुरत स्तारा संसार-तारिणी ।
वशिष्ठ स्तां समालोक्य शशापातीवदारुणम् ॥ ४१ ॥

ततो देवी वशिष्ठेन शप्ता न फलदा भवेत् ।
चीनाचारं विना नैव प्रसीदामि कदाचन ॥ ४२ ॥
उवाच साधकश्रेष्ठं वशिष्ठमनुनीय सा ।
रोषेण दारुणमनाः कथं मा मनुशप्तवान् ॥ ४३ ॥
मयि आराधनाचारं बुद्धरूपी जनार्द्दनः ।
एक एव विजानाति नान्यः कश्चन तत्वतः ॥ ४४ ॥
वृथैवायास बहुल ( लं ) कालोयं गमित स्त्वया ।
विरुद्धाचारशीलेन मम तत्त्वमजानता ॥ ४५ ॥
उद्बोधरूपिणी विष्णोः सान्निध्यं याहि साम्प्रतम् ।
तेनोपदिष्टाचारेण मामाराधय सुव्रत ! ॥ ४६ ॥
तदैवाशु प्रसन्नास्मि त्वयि यश्चा (विप्र) न संशयः ।

---

# [ द्वितीयपटले । ]

श्रीभैरव उवाच ।

ततः प्रणम्य तां देवीं वशिष्ठोऽसौ महामुनिः ।
जगामाचारविज्ञानवाञ्छया बुद्धरूपिणम् ॥ १ ॥
ततो गत्वा महाचीनदेशे ज्ञानमयो मुनिः ।
ददर्श हिमवत्पार्श्वे साधकेश्वरसेविते ॥ २ ॥
रणज्झघनरावेण रूपयौवनशालिना ।
मदिरामोदचित्तेन विलासोल्लसितेन च ॥ ३ ॥
शृङ्गारसारवेशेन जगन्मोहनकारिणा ।
भयलज्जाविहीनेन देव्या ध्यानपरेण च ॥ ४ ॥

कामिनीनां सहस्रेण परिवारितमीश्वरम् ।
मदिरापानसञ्जात-मन्दमन्दविलोचन (१) ॥५॥
दूरादेव विलोक्यैनं वशिष्ठो बुद्धरूपिणम् ।
विस्मयेन समाविष्टः स्मरन् संसारतारिणीम् ॥ ६ ॥
किमिदं क्रियते कर्म्म विष्णुना बुद्धरूपिणा ।
वेदवादविरुद्धोयमाचारोऽसम्मतो मम ॥ ७ ॥
इति चिन्तयत स्तस्य वशिष्ठस्य महात्मनः ।
आकाशवाणी प्राहाशु मैवं चिन्तय सुव्रत ! ॥ ८ ॥
आचारः परमार्थोऽयं तारिणीसाधने मुने ! ।
एतद्विरुद्धभावस्य मते नासौ प्रसीदति ॥ ९ ॥
यदि तस्याः प्रसादं त्वमचिरेणाभिवाञ्छसि ।
एतेन चीनाचारेण तदा तां भज सुव्रत ! ॥ १० ॥
आकाशवाणीमाकर्ण्य रोमाञ्चितकलेवरः ।
वशिष्ठो दण्डवद्भूमौ पपातातीवहर्षितः ॥ ११ ॥
अथोत्थायाचिरेणासौ कृताञ्जलिपुटो मुनिः ।
जगाम विष्णोः शरणं बुद्धरूपस्य पार्व्वति ! ॥ १२ ॥
अथासौ तं समालोक्य मदिरामदविह्वलः ।
प्राह बुद्धः प्रसन्नात्मा किमर्थं त्वमिहागतः ॥ १३ ॥
अथ बुद्धं प्रणम्याह भक्तिनम्रो महामुनिः ।
यदुक्तं तारिणीदेव्या निजाराधनकर्म्मणि ॥ १४ ॥
तत् श्रुत्वा भगवान् बुद्ध स्तत्त्वज्ञानमयो हरिः ।
वशिष्ठं प्राह मज्ञानं (२) चीनाचाराधिकारणान् (णाम्) ॥१५॥

---

(१) मन्दमन्दावलोकनमेव साधीयान् ।
(२) मज्ञानं, मानां पञ्चमकाराणां ज्ञानमित्यर्थः ।

न प्रकाश्योयमाचार स्तारिण्याः सर्व्वदा मुने ! ।
तव भक्तिवशेनास्मि प्रकाश्यमिह तत्परः ॥ १६ ॥

बुद्ध उवाच ।

अथाचारविधिं वक्ष्ये तारादेव्याः समृद्धिदम् ।
यस्यानुष्ठानमात्रेण भवाब्धौ न निमज्जसि ॥ १७ ॥
समस्तशोकशमन-मानन्दादिविभूतिदम् ।
तत्त्वज्ञानमयं साक्षाद्विमुक्तिफलदायकम् ॥ १८ ॥
स्नानादि मानसः शौचो मानसः प्रवरो जपः ।
पूजनं मानसं दिव्यं मानसं तर्पणादिकम् ॥ १९ ॥
सर्व्व एव शुभः कालो नाशुभो विद्यते क्वचित् ।
न विशेषो दिवारात्रौ न सन्ध्यायां महानिशि ॥ २० ॥
वस्त्रासन-स्थानगेह-देहस्पर्शादिवारिणः ।
शुद्धिं न चाचरेत्तत्र निर्व्विकल्पं मन श्चरेत् ॥ २१ ॥
नात्र शुद्ध्याद्यपेक्षास्ति न चामेध्यादिदूषणम् ।
सर्व्वदा पूजयेद्देवीमस्नातः कृतभोजनः ॥ २२ ॥
महानिश्यशुचौ देशे बलिं मन्त्रेण दापयेत् ।
स्त्रीद्वेषो नैव कर्त्तव्यो विशेषात् पूजनं स्त्रियाः ॥ २३ ॥

[ अतःपरं यदुक्तञ्च तदन्यत्र प्रपञ्चितम् । ]

---

## [ तृतीयपटले । ]

"पूजाकालं विना नैव पश्येच्छक्तिं दिगम्बराम् ।
पूजाकालं विना नैव सुरा पेया च साधकैः ।
आयुषा हीयते दृष्ट्वा पीत्वा च नरकं व्रजेत् ॥"

[ अयमेव वृत्तान्तो महाचीनाचारक्रमेऽपि सविस्तरं वर्णितः । ]

( २ )

[ बुद्धस्य कामशास्त्राचार्य्यत्वं स्पष्टमुक्तं मीननाथकृत-
स्मरदीपिकायाम् । ]

"सारं निष्क्रम्य बुद्धादिमुनीनां प्रमुखात् श्रुतम् ।
श्रीमता मीननाथेन क्रियते स्मरदीपिका ॥
कामशास्त्रस्य तत्त्वज्ञा भवन्ति योषितः सदाः ।
ये वै शास्त्रं न जानन्ति रमन्ते वृषभा यथा ॥"

[ महाचीनक्रमो गान्धर्व्वेऽपि वर्णितः । ]

(362)

THE

# KASHI-SANSKRIT-SERIES

( *HARIDAS SANSKRIT GRANTHAMĀLĀ* )

57

( Nyaya Section No. 7. )

## The

# ŚAKTIVĀDA

BY

**SRI GADADHARA BHATTĀCHĀRYA**

*With Three Commentaries,*

( 1 ) The Manjūṡa by Krisṇa Bhaṭṭa,

( 2 ) The Vivṛiṭi by Mādhava Bhaṭṭāchārya,

and

( 3 ) The Vinodini by Sāhitya Darṡanāchārya, Tarkaratna, Nyāyaratna, Gosvāmī Dāmodara S'āstri of Brindāban.





*Edited With Introduction by*

GOSVĀMĪ DĀMODARA ŚĀSTRĪ OF BRINDABAN.

*PRINTED, PUBLISHED & SOLD BY*

*Jai Krishna Das Hari Das Gupta*

The Chowkhamba Sanskrit Series Office,

Vidya Vilas Press, North of Gopal Mandir Benares City.

1927.





॥ श्रीः ॥

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़्पुस्तकमालायाः

५७

न्यायविभागे (७) सप्तमपुष्पम् ।

॥ श्रीः ॥

टीकात्रयोपेतः

# शक्तिवादः।

नैयायिकचक्रचूड़ामणिश्रीगदाधरभट्टाचार्यप्रणीतः

स च

विद्वद्वरकृष्णभट्टकृतया मञ्जूषया तर्कसिद्धान्तमाधवभट्टाचार्यनिर्मितया विवृत्या श्रीमन्माध्वसंप्रदायाचार्य्यदार्शनिकसार्वभौमसाहित्यदर्शनाचार्यतर्करत्नन्यायरत्नगोस्वामिदामोदरशास्त्रिरचितया विनोदिन्या च समेतः ।

विनोदिनीकृतैव संशोध्य संपादितः ।

प्रकाशकः-

जयकृष्णदास-हरिदासगुप्तः—

चौखम्बासंस्कृतसीरीज आफिस, विद्याविलास प्रेस,
गोपालमंदिर के उत्तरफाटक, बनारस सिटी ।

१९८४

# संपादयितुर्वक्तव्यम् ।

श्रीमद्धनुमद्भीमध्वान्तर्यामिरामकृष्णवेदव्यासात्मकसच्चिदानन्दविग्रहपूर्णतमाह्लादिनीशक्त्यभिन्नीकृतस्वरूपप्रेमावतारभगवच्छ्रीश्रीगौरकृष्णः शरणम् ।



इह किल प्रतायमाने प्रपञ्चे प्रमाणप्रमेयत्वेन व्यवस्थिते च मानाधीना मेयसिद्धिरिति नयेन प्रमेयमात्रस्यैव प्रमाणायत्तसिद्धिकतयोपजीव्यत्वेनादौ लोकानां प्रमाणबुभुत्साया एवौत्सर्गिकत्वात् तन्निरूपणाय संनद्धवतां प्रामाणिकानां यद्यपि तदीयस्वरूपलक्षणसंख्यासंबद्धविप्रतिपत्तिसत्त्वादसामञ्जस्यमिवोपस्थितं तटस्थैरभिलषितायास्तपस्विन्याः प्रमेयव्यवस्थापनायास्तथाऽपि प्रमाणत्वेन प्रसिद्धितोऽभ्यर्हितायामान्वीक्षिक्यामेव विद्यायां युक्तायुक्तविवेकालंकर्मीणविपश्चिन्मानसान्यादरसध्रीचीनान्यायतन्तेतमामिति नाव्यक्तं निरपेक्षविदुषाम् ।

एनया चोपदिदिक्षितं प्रमाणमत्रभवदक्षपादमहर्षिपादाः प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति सूत्रेण निरदीधरन्, व्यवातिष्ठिपंश्च तद्भाष्यवार्त्तिकप्रणेतृप्रभृतयः, तदन्वेनमेवार्थं महत्याऽऽरभट्याऽदभ्रपराक्रान्त्या प्रसक्तानुप्रसक्तनिरूपणोपबृंहणेन विप्रतिपन्नप्रतिपन्ननिरसनविजृम्भणेन विद्वच्चेतांसि गृहयालुभिरनितरसाधारणीभिर्वाचोयुक्तिभिरुपापीपदन् मुनिकल्पास्तर्काम्बुधिपारगाः श्रीगङ्गेशोपाध्यायमहोदयाः समन्वर्थनामकंनिबन्धमूर्धन्यं चिन्तामणिं संदृभ्य,

अत्रत्यान्येव प्रत्यक्षादिखण्डानि समष्टिव्यष्टिरूपेणावलम्ब्य सर्वपथीनास्तार्किकाः पारेसहस्रं ग्रन्थान् व्यरचन्,

तत्र शब्दखण्डे विवेचितेषु बहुष्वेवार्थेषु शब्देनार्थे बोधनीये बोध्यबोधकयोः केनापि संबन्धेनावश्यं नान्तरीयकेण भवितव्यमिति कीदृगयमुचित इति विचिकित्सायां प्रत्यासन्नैस्त्रिभिरेव प्राधान्येन स्वस्वसमयमनुसृत्य विचारितः सः,

पदार्थव्युत्पादनाधिकाराद् वैयाकरणैः, वाक्यार्थनिर्णयाधिकारान्मीमांसकैः, तदुभयप्रमापणाधिकारान्नैयायिकैश्च, तत्र वैयाकरणाभिमतां बोधकतारूपां मीमांसकोपगतां पदार्थान्तरात्मिकां च शक्तिमरोचयमानानां नैयायिकानामनुमोदनीयां भगवदिच्छारूपामिच्छारूपां वा

तां निर्विवदन्तोऽस्या वादं तत्त्वनिर्णायकं कथाविशेषं निबिभन्त्सवस्त-र्कचक्रचूडामणयः श्रीगदाधरभट्टाचार्याः शक्तिवादनामकं स्वप्रौढिमातिशयेन शक्तिविवेचकनिबन्धान्तराखर्वगर्वसर्वङ्कषं ग्रन्थरत्नं न्यभान्त्सुः,

अत्र च निबन्धा विभक्तेषु त्रिषु काण्डेषु ह्यादिमे सामान्यकाण्डे यावत्पदगतामनुगतां शक्तिं परमतनिरसनपुरःसरमुपपाद्य; द्वितीयस्मिन् विशेषकाण्डे विवादास्पदशक्तिककतिपयपदविशेषाणामेनां तथैव व्यवस्थाप्य; चरमे परिशिष्टकाण्डे च भट्टपादश्रीकरमण्डनमिश्रगुरुप्रभाकराणां मीमांसकधुर्य्याणां शक्तिविषयकान् विचारान् प्रदर्श्य ग्रन्थोऽय मुपसमहारि,

ग्रन्थस्यास्यातिगहनतया व्याख्यामन्तरेण व्युत्पन्नतमैरपि दुष्प्रवेशतां मत्वा, टीकायोजनाऽवसरे सतीष्वपि बहुटीकासु नाममात्रेणैव श्रुता दर्शनपथमप्यनवतीर्णाः कथमिव सुयोजाः सुतरामुपलब्धास्वेव चतसृष्वासु योज्यत्वायोज्यत्वविवेचने हरिनाथतर्कसिद्धान्तभट्टाचार्य्यनिर्मितायाः शक्तिवादविवृतेरचिरात् पृथङ्मुद्रयिष्यमाणत्वेन व्यवस्थिततया शक्तिवादादर्शनामिकायाष्टीकाया अस्मत्सुहृत्सतीर्थ्यपञ्चनदीयपण्डितसुदर्शनाचार्यकृतायाः पृथङ्मुद्रिततया सुप्रापत्वाद् अवशिष्टयोर्विद्वद्रकृष्णभट्टकृतमञ्जूषामाधवतर्कसिद्धान्तभट्टाचार्यकृतविवृत्योरधिकाशि मुद्रितचर्य्योरपि शोधकानवधानादिदोषैः प्रतिपृष्ठं प्रतिपङ्क्ति वाऽत्यन्ताशुद्धयोस्तत्रापि बहुपूर्वं मुद्रितत्वेनानवशिष्टतया दौर्लभ्येण शक्तिवाद मधिजिगांसमानानां सौलभ्याय ते एव संयोज्य शक्तिवादे प्रचिकाशयिषणीयेऽनेकात्मीयविज्ञजनानुरोधवशंवदेन मया प्रायो निर्दिष्टटीकाद्वयाव्याख्यातेषु व्याख्येयतामर्हत्सु बहुषु स्थलेषु स्वकृता विशदटिप्पनीरूपा लघुटीका वा शक्तिवादविनोदिनीनामा समं योजितेत्येवं टीकात्रयोपेते शक्तिवादे मुद्रिते; अधुनातनविज्ञजनरुचिकरग्रन्थकृत्संबद्धविषयान्तर परिचयावगमसंपादनाय प्रवृत्त्य सायासं प्रयत्यापि यावदुपलब्धं ताव दितिहासप्रियान् प्रमोदयितुमुपक्रम्यते—

प्रकृतग्रन्थकारा गदाधरभट्टाचार्य्याः पूर्वबङ्गेषु पावनेतिप्रसिद्धप्रान्तीयलक्ष्मीचापराग्राममधिवसति वारेन्द्रश्रेणिभुक्तविप्रवंशे लब्धजन्मानः कुतोऽपि हेतोः ( गोयारी ) कृष्णनगरराज्यान्तर्गते श्रीनवद्वीपधामन्यागच्छता पित्रा सममागत्य तत्रत्यात्तदानींतनविद्वत्समाजलब्धगौरवाद् हरिरामतर्कवागीशभट्टाचार्यतस्तार्किकप्रष्ठान्न्यायशास्त्रमधीयानाः समाप्तकल्पेऽस्मिन् शास्त्रे देवभूयं गतेऽध्यापके गुर्विच्छाऽनुसारिणा गुरुपत्न्यादेशेन गुरोरेवाध्यापनालये संप्रदायाविच्छेदरक्षणायाधिजिगापयि-

षवोऽपि तद्देशेऽद्यावधि प्रचरितव्यवहारतोऽध्ययनसमापनोत्तरं प्राप्यस्य गुरुदत्तोपाधेरलाभादलब्धप्रतिष्ठाद् गुरोरध्ययने मर्यादाहानितो बिभ्यतामत एवाध्येतुमनागमनं छात्राणामालोच्याप्यभग्नोत्साहाः क्व चनोपमागमुपवने तरूनन्तेवासिन इवाध्यापयितुं प्रावर्तिषत,

तदा तु तदीयमुदग्रमुत्कटमध्यवसायं तत्राप्यध्यापनपटिमानं, तत्रापि विलक्षणविषयाविष्करणक्षमं प्रतिभाविकासमवगम्येतस्ततो गच्छतां विज्ञानां मुखेभ्योऽदसीयवैदुष्यागाधतामौपकर्णिकीं कुर्वाणाः प्रबलगुणाकृष्टास्त एव च्छात्रा अहमहमिकयोत्सहैवैनानशिश्रयन्,

एवंजातीया बहवः कौतुकावहाः प्रवृत्तयोऽस्मदीयभट्टाचार्य्याणाम्, अतः कियन्निवेद्यं दिग्दन्तावलदानमलीमसकरटकूटशितिमनाङिधमयशश्चन्द्रक्षीरोधोनामेषां,—

सर्वमेतदुदन्तजातं तत आरभ्यैव श्रीनवद्वीपे पुरुषानुक्रमाद् वसतां तदीयवंश्यानां मुखाद् बहुशः श्रुतं मया नव्यन्यायानुमानखण्डमध्येतुं गत्वा बहुकालं तत्र स्थितेन।

मञ्जूषाकारस्तु कृष्णभट्टो दाक्षिणात्यो भूसुरो रङ्गनाथसूनुर्भूम्ना गदाधरभट्टाचार्य्यकृतन्यायनिबन्धानां टीकको वैक्रम्यां वर्तमानशताब्द्यामेव लब्धजन्मेत्येतावदेवैतद्विषये ज्ञातं नेतरद्।

विवृतिकारो माधवतर्कसिद्धान्तस्तु श्रीनवद्वीपवासी प्रायेण पञ्चाशद्वर्षेभ्यः प्राक्तनो विप्रवंश्यः प्रौढतार्किकश्चेत्येवाज्ञायि।

मया तु विनोदिन्यां त एव विषया विवेचिता येऽस्मदीयबहुविद्यागुरुभ्यः सर्वतन्त्रस्वतन्त्रेभ्यः पदवाक्यप्रमाणपारावारीणेभ्यः काशिकराकीयप्रधानसंस्कृतपाठालयप्रधानाध्यापकेभ्यः सी० आइ० ई० पदवीकेभ्यो महामहोपाध्यायेभ्य आन्ध्रेषु मानवल्लीकुलजलधिकौस्तुभेभ्यः पूज्यपादश्रीदगङ्गाधरशास्त्रिचरणेभ्योऽध्ययनेऽधिगताः तथाऽनुमानखण्डाध्ययने न्यायाम्भोधिपारदृश्वमहामहोपाध्यायपूज्यपादश्रीदराखालदासन्यायरत्नभट्टाचार्येभ्यः प्रसङ्गतः श्रुता, एवमवशिष्टानुमानखण्डतद्विवेचनाऽध्ययनाय श्रीनवद्वीपं गतवताऽऽन्वीक्षिकीस्वयंवृतेभ्यो बङ्गेषु प्रधाननैयायिकपदभूषितवद्भ्यो महामहोपाध्यायपूज्यपादश्रीदयदुनाथनैयायिकसार्वभौमभट्टाचार्य्यमहाशयेभ्यः क्रोडपत्राध्ययने चाधिगताः, किन्तु स्वतन्त्रोपलभ्यमानक्रोडपत्रस्थविषयाः परिहृताः पौनरुक्त्यप्रसक्तिभिया।

एवं टीकात्रयोपेतः शक्तिवादो विविधप्राचीनग्रन्थप्रकाशनबद्धपरिकरेण श्रेष्ठिश्रीजयकृष्णदासगुप्तमहोदयेनास्मत्स्नेहास्पदेन स्वकीयविद्याविलासनामके मुद्रणालये स्वव्ययेन सोत्साहं प्रकाशितः।

अत्र च सौकर्य्यार्थं विशदो विषयानुक्रमोऽपि संन्यवेशि ।

एवं बहुश्रमेणावधानपुरस्सरं संपादितेऽप्यस्मिन् कार्यें मानुष्यकनान्तरीयकदोषजास्त्रुटीरुपेक्ष्य; कलहंसप्रकृतयो विज्ञाः शक्तिविचारमर्मानुभवरसमास्वादयन्तुतमां, प्रसीदतु चानेन व्यापारेण सर्वान्तर्यामी भगवान् गौरकृष्णतनुः श्रीश्रीराधिकारमण इत्याशासानो विरमति सुधाविस्तरादिति । शम् ।

विजयदशम्याम् ।
वै०सं० १९८४
काश्याम् ।

कलिजनपावनावतारभक्तजीवजीवातुपरमपुमर्थप्रेमवितरणपरायणभगवत्श्रीकृष्णचैतन्यचरणोपदिष्टैकवीथीपथिकश्रीवृन्दावनस्थस्वयंप्रकटश्रीश्रीराधारमणचरणपरिचरणैकसर्वस्वः श्रीमन्माध्वसम्प्रदायाचार्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्न —

गोस्वामिदामोदरशास्त्री ।

श्रीश्रीगौरकृष्णः शरणम् ।

## शक्तिवादविषयानुक्रमः—

## तत्र सामान्यकाण्डे—

## विशेषकाण्डे—

## परिशिष्टकाण्डे—



## विशेषसूचना—

अत्र पृष्ठादिसंख्या मूलस्यैव दर्शिता, टीकानां क्रमस्तेनैव सुकर दर्शन इति ।

शम् ।

श्रीश्रीगौरकृष्णः शरणम् ।

श्रीश्रीगणाधिपतये नमः ।

# टीकात्रयोपेतःशक्तिवादः ।

श्रीकृष्णाय नमः ।

सङ्केतो लक्षणा चार्थे पदवृत्तिः ॥

---

मञ्जूषेतिप्रसिद्धाऽर्थदीपिका ।

श्रीकृष्णाय नमः ।

श्रीकृष्णचरणौ नत्वा शक्तिवादार्थदीपिकाम् ॥
करोति संप्रदायेन कृष्णभट्टो मुदे सताम् ॥ १ ॥

सङ्केतोऽभिधारूपवृत्तिग्राहक इति मीमांसकमतं; लक्षणा च शक्ति-विशेष इति वैयाकरणमतं; तदुभयं कटाक्षयन्नाह—सङ्केत इति । अत्र तीरं गङ्गापदार्थसम्बन्धि न गङ्गापदार्थ इति ज्ञानेऽपि गङ्गायां घोष इत्यादितः शाब्दबोधोदयात्सङ्केतमात्रेण नोपपत्तिरतो लक्षणाऽतिरिक्तवृत्तिः स्वीकार्येत्यभिप्रायवानाह-लक्षणा चेति । अर्थ इति पदव्यावृत्त्यर्थम् एवं-च गौणीव्यञ्जनयोः पृथग्वृत्तित्वमयुक्तं तयोर्लक्षणायामन्तर्भावसम्भवादिति बोध्यम् ॥

माधवीतिप्रसिद्धा विवृतिः ।

श्रीदुर्गायै नमः ।

आराध्य याङ्गिरिसुतां वरदां सुधीरै-
र्लब्धम्फलं समधिकं प्रथितैरभीष्टम् ॥
संसारसागरतरिं भजनैकपार्श्री-
दुर्गां नमामि भवभीतिविनाशनाय ॥ १ ॥
ख्यातः पूर्णकुलार्णवेन्दुसदृशो यश्चक्रपाणिस्स्वयं-
तद्वंश्यो नरराजभैरवमहावेगान्यथाकारकः ॥
यो राजेन्द्रकृती तदीयकुलजो विख्यातविश्वेश्वर-
स्तत्पुत्रोऽहमिमां करोमि विवृतिं श्रीमाधवस्तार्किकः ॥ २ ॥

टीकां विज्ञजनप्रमोदजननीं सिद्धान्तसिद्धां शुभां-
श्रीमन्माधवनामकेन रचितां यत्नेन धीभिः, शुभैः ॥
काषायैः परिमृज्य चित्ततरणिं संसृत्य पारं परं-
धीरो गच्छतु सत्पदार्थकुतुकी सच्छक्तिवादार्णवे ॥ ३ ॥

शिष्यजिज्ञासया वृत्तिं विभजते—सङ्केत इति । अर्थे अर्थनिष्ठा, पदवृत्तिः पदनिरूपिता, वृत्तिः शाब्दबोधौपयिकसम्बन्ध इत्यर्थः ।

न चैतद्विभजनमनुपपन्नं, व्यञ्जनाया अतिरिक्तवृत्तित्वाद्, अन्यथा
गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवानि—
त्यादौ तव गमनेन मम मरणं भविष्यतीत्यादिबोधस्यानुभवसिद्धस्यानुपपत्तिरिति वाच्यम् ।

व्यञ्जनाया वृत्तित्वोपगमे तस्याः स्वरूपसत्या एव हेतुताया वाच्यतया,तज्ज्ञानजन्यपदार्थोपस्थितेरनपेक्षितत्वेन तत्तत्पदार्थविषयकशाब्दबुद्धौ पदवृत्तिज्ञानजन्यपदार्थोपस्थितेर्हेतुतया व्यभिचाराद् , व्यञ्जनावृत्त्यजन्यशाब्दत्वस्य कार्यताऽवच्छेदककोटौ निवेशे गौरवाद् , एवन्तादृशतादृशान्वयबोधे तादृशान्वयतात्पर्यज्ञानस्य व्यभिचारात्कार्यताऽवच्छेदकसङ्कोचे गौरवात् । न च व्यङ्ग्यार्थबोधेऽपि तस्य हेतुत्वात्कुतो-व्यभिचार इति वाच्यम् । व्यञ्जनाया वृत्तित्वस्वीकर्तॄणामालङ्कारिकाणां मते व्यङ्ग्यार्थबुद्धौ तस्याहेतुत्वाद्, अत एव
वयस्था नागरासङ्गादङ्गानां हन्ति वेदनामि—
त्यादौ वयस्था युवती नागरपुरुषसंयोगादङ्गानां वेदनां हन्तीति तात्पर्यज्ञानवशेन शक्यार्थबोधानन्तरं तात्पर्याविषयीभूतस्य वयस्था हरीतकी नागरयोगात् शुण्ठीयोगाद् अङ्गानां वेदनां हन्तीत्यर्थबोधस्याभिधामूलव्यञ्जनातस्तेषामुपपत्तिः तादृशबोधे तात्पर्यज्ञानस्य हेतुत्वे शक्त्यैव तादृशबोधसम्भवेऽभिधामूलव्यञ्जनास्वीकारानुपपत्तेः । एवं शक्यार्थबुद्धेः प्राग् व्यङ्ग्यार्थबोधवारणाय व्यङ्ग्यार्थबोधम्प्रति शक्यादिजन्यबोधस्य हेतुतायास्तैः स्वीकरणीयतया गौरवाच्च । न च व्यञ्जनाया वृत्तित्वानुपगमे तत्र तत्र तादृशबोधस्यानुभवसिद्धस्यानुपपत्तिरित्यगत्या व्यञ्जनाया वृत्तित्वमङ्गीकार्यमिति वाच्यम् । मनसैव तादृशबोधस्वीकारात् । न च मानसस्य प्रत्येकपदार्थोपस्थितिमूलकतया मरणाद्युपस्थापकाभावात् कथं तव गमने मम मरणमित्यादिमानसो-बोधः, मम तु तादृशार्थविषयकशाब्दबुद्धिं प्रति व्यञ्जनायाः स्वरूपसत्या-

हेतुत्वोपगमान्मरणपदार्थोपस्थितिमन्तरेणैव तादृशबोध इति वाच्यम् । तादृशवाक्यज्ञानस्य तादृशवाक्यान्तर्गतजन्मादिपदज्ञानस्य वा तदुपस्थापकत्वकल्पनात् । न च तादृशवाच्यादिज्ञानस्य स्मृतिजनकत्वं किंवा व्यञ्जनायाः शाब्दबोधजनकत्वमित्यत्र विनिगमकाभाव इति वाच्यम् । व्यञ्जनाया अतिरिक्तायास्तस्याः शाब्दबोधजनकत्वस्योक्तगुरुतरकार्यकारणभावद्वयस्य व्यङ्ग्यार्थबोधं प्रति शक्यादिज्ञानजन्यशाब्दबोधकारणत्वस्य च कल्पनामपेक्ष्य तादृशवाक्यादिज्ञानस्य मरणादिस्मारकत्वकल्पने स्फुटतरलाघवादित्यलमतिविस्तरेण । अनयोः समाचीनत्वासमीचीनत्वे सुधीभिर्विभाव्ये ॥

## शक्तिवादविनोदिनी ।

श्रीश्रीगौरकृष्णाय नमः ।

सच्चित्सौख्यात्मदेहे प्रकृतिगुणकणेनाप्यसंसृष्टरूपे
शक्तित्रैविध्ययुक्तेऽनुपधिनिजकृपामात्रतो जीवलभ्ये ॥
दाम्नाबद्धे जनन्या प्रणयरशनया गोपसीमन्तिनीभिः
कृष्णे चैतन्यदेवे निरवधिरमलप्रीतिरस्माकमास्ताम् ॥ १ ॥
यः श्रीवृन्दाविपिनवसतिं श्रीलगोपालभट्ट–
शालिग्रामात्प्रकटिततनुर्भक्तजीवातुरूपः ॥
श्रीमद्राधारमणवपुषाऽऽश्वास्य विभ्राजमानोऽ–
द्याप्यस्त्येवाखिलनतजनाभीष्टपूर्त्तिं विधातुम् ॥ २ ॥
श्रीमदानन्दतीर्थादितत्त्वारामान्तिमान् गुरून् ॥
श्रीमद्विद्यागुरून् सर्वान् साञ्जलि प्रणमाम्यहम् ॥ ३ ॥
श्रीमद्गदाधरोक्तस्य शक्तिवादस्य बोधिकाम् ॥
व्याख्यां विज्ञहितां कुर्वे शक्तिवादविनोदिनीम् ॥ ४ ॥

इह किलोच्चावचचराचराञ्चनचुञ्चौ प्रपञ्चेऽवान्तरविभागप्रविभागभिन्नानन्तपदार्थसङ्कुलेऽपि व्यवहारौपयिकव्यवस्थामनुरुन्धानैः प्रेक्षावद्भिः "मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणादि"ति वस्तुस्थितिमनुसृत्वरैर्माननमेयतयाऽवधारितद्वैविध्ये, मानसंख्यादिविषयेऽपि प्रामाणिकानां चिरागतविप्रतिपत्तिसमूहस्य बीजोद्घाटनं प्रकृतेऽनावश्यकतयोपेक्ष्य, महर्षिश्रीगोतमोपज्ञान्वीक्षिक्या एव विद्यायाः प्रमाणनिरूपणधूर्वहतयेदमीयसिद्धान्तसिद्धे खलु प्रत्यक्षानुमानोपमानशब्दाख्यप्रमाणचतुष्टये बहुत्र बहुधा बहुभिः कृतविवरणेऽपि तेषु चरमेणार्थप्रतिपत्तावुत्पिपादयिषितव्यायां, शब्दार्थयोः सम्बन्धस्यैकान्तमपेक्षणीयतायाः प्र-

सत्त्याऽधितदीयवर्णनावेलं पुनरपि तैर्थिकानां तत्स्वरूपसंख्याविषयके सगोत्रकलहे; प्रत्ययशक्तिविवेचनस्यानेकत्रानेकैर्विहिततया; प्रकृतिशक्तिनिर्णिनीषुः, तत्रभवान् न्यायसिद्धान्तवागीशः श्रीमान् गदाधरभट्टाचार्यो न्यायानुमतं शब्दार्थयोः सम्बन्धतत्त्वं प्रचिकाशयिषुः शक्तेः श्रीभगवत्समवेतेच्छाविशेषात्मिकाया मुख्यवृत्त्यभिधासङ्केतादिपदव्यवहार्य्याया वादस्तत्त्वनिर्णयफलकः कथाविशेषो यत्र तादृशं निबन्धं तादृशवादरूपमेव वा निबिभन्त्स्यमानः संख्याविवादनिरासपूर्वकमेवोक्तसम्बन्धं तदुपजीव्यकं चापरं निर्दिशति–सङ्केतो लक्षणा चेति ।

अत्रार्थानुयोगिकपदप्रतियोगिकपदानुयोगिकार्थप्रतियोगिकयोः शाब्दबोधौपयिकज्ञानविषयसंबन्धयोः शक्तिलक्षणाऽन्यतरपदव्यहार्य्यतेति भावः । इहार्थपदयोरानिवेशे विशेष्यदलमात्रोक्तौ क्रमेणाकाङ्क्षाज्ञानविषयेऽव्यवहितोत्तरत्वे छिनत्तीत्यादौ द्वैधीभावानुकूलत्वादौ च वृत्तिलक्षणातिव्याप्तिः स्यादिति तयोर्निवेशः, तथा चोक्तस्थलयोरर्थप्रतियोगिकत्वपदानुयोगिकत्वयोरसम्भवान्नातिप्रसङ्ग इति ॥

---

## वृत्त्या पदप्रतिपाद्य एवार्थ इत्यभिधीयते ॥

---

मञ्जूषा ।

ननु घटोऽस्तीत्यादावाकाशो घटपदार्थ इत्यपि व्यवहारप्रसङ्गो घटपदेन समवायेनाकाशोपस्थितिसम्भवाद्, न च लक्षणया तादृशव्यवहार इति कथं सम्बन्धान्तरेण स विषय इति वाच्यं, तथा सत्याकाशो न घटपदार्थ इति कदाऽपि व्यवहारो न स्यादित्यतोऽर्थव्यवहारविषयं निर्धारयति–वृत्त्येति । शाब्दबोधानुकूलार्थोपस्थित्यनुकूलः पदपदार्थयोः सम्बन्धः शक्तिलक्षणान्यतरा वृत्तिः,एतच्च घटादिपदेन समवायादिनाऽऽकाशाद्युपस्थितिर्न शाब्दबोधकारणं लक्षणाऽनधीनत्वादिति तामादायार्थव्यवहारवारणाय । ज्ञानजन्यत्वं प्रतिपत्तौ प्रयुक्तत्वं विषयतायां वाऽन्वयि तृतीयाऽर्थः, लक्ष्यस्यार्थत्वव्यवहारानुरोधेन शक्त्येति नोक्तम् । समभिव्याहारप्रतिपाद्यतात्पर्यार्थवारणाय–पदेति । वृत्तिमानर्थ इत्युक्तौ सर्वदा लक्षणासद्भावेन तीरं न गङ्गापदार्थ इति व्यवहारो न स्यादतः प्रतिपत्तिनिवेशः । न च लक्षणाऽधीनप्रतिपत्तेः सर्वदाऽसत्त्वेऽपि कदाचित्सत्त्वेन तथा व्यवहारानुपपत्तिरस्त्येवेति वाच्यम् । तादृशप्रतिपत्तेर्लक्षणाऽधीनार्थव्यवहारे विशेषणतया तदभावदशायां दर्शितव्य-

वहारोपपत्तेः । वस्तुतस्तु यद्यपि तीरं न गङ्गापदार्थ इति व्यवहारस्य विशिष्य गङ्गापदशक्त्यभाव एव विषयः सुवचः, तथाऽपीदानीं तीरं न गङ्गापदार्थ इति व्यवहारानुरोधेन प्रतिपत्तिनिवेशः शक्त्यभावस्य व्याप्यवृत्तितयेदानीमित्यस्यानन्वयाद् । एवं च कथं चिद् गङ्गाप्रतिपत्त्यसत्त्वदशायां गङ्गेदानीं न गङ्गापदार्थ इत्यपीष्यत एव । वाच्यत्वं मुख्यार्थत्वं, लक्षणानिर्वाहकतात्पर्यवत्त्वं लक्ष्यत्वम्, प्रतिपत्तिद्वारा तयोः शाब्दबोधानुकूलत्वलाभाय प्रतिपत्तिपदम् ॥

माधवी ।

वृत्त्या पदप्रतिपाद्य इति । वृत्त्या तत्पदप्रतिपाद्य एव तदर्थ इत्यर्थः । तत्पदप्रतिपाद्यत्वं तत्पदप्रयोज्यशाब्दबोधीयविषयताऽऽश्रयत्वम् । वृत्त्येत्यनुपादाने घटवद्भूतलमित्यानुपूर्वीघटकघटपदप्रयोज्यशाब्दबोधीयविषयत्वस्य भूतलेऽपि सत्त्वात्तस्य घटपदार्थत्वापत्तिरतो वृत्त्येत्युक्तम् । तथा च स्ववृत्तिप्रयोज्या या शाब्दबोधीयविषयता तदाश्रयस्तत्पदार्थः पर्यवसितः । के चित्तु तत्पदप्रतिपाद्यत्वं तत्पदोपस्थाप्यत्वं तथा च यथा कथञ्चित्कालिकादिसम्बन्धेन घटपदादिना पटादेरप्युपस्थितिसम्भवात् पटस्य घटपदवाच्यत्वापत्तिरतो वृत्त्येत्युक्तमित्याहुः ॥

विनोदिनी ।

अर्थजिज्ञासायामाह—वृत्त्येति । अत्र प्रतिपत्तिः शाब्दबोध उपस्थितिर्वा नैकत्रैवाग्रहः, वृत्त्येत्यनुक्तौ नीलो घट इत्यत्रत्यशाब्दविषयघटस्य नीलपदजन्यप्रतिपत्तेरपि विषयतया नीलपदार्थताप्रसक्तिः, तदुक्तौ तु स्ववृत्तिप्रयोज्यशाब्दबोधविषयतासंसर्गेण पदविशिष्टस्यैवार्थत्वमिति नोक्तदोषः । एवमुपस्थितिपक्षेऽपि नीलादिविषयकघटाद्युपस्थितिविषयघटादौ नीलादिपदार्थताऽऽपत्तौ स्ववृत्तिविषयकज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यताऽवच्छेदकविषयतासंसर्गेण पदविशिष्टे तात्पर्य्यादपि दोषनिरासः ॥

---

इदं पदममुमर्थं बोधयत्विति, अस्मात्पदादयमर्थो—बोद्धव्य इति चेच्छा सङ्केतरूपा वृत्तिः । तत्राधुनिकसङ्केतः परिभाषा तया चार्थबोधकं पदं पारिभाषिकं—यथा शास्त्रकारादिसङ्केतितनदीवृद्ध्यादिपदम्, ईश्वरसङ्केतः

शक्तिस्तया चार्थबोधकं पदं वाचकं यथा गोत्वादिविशिष्टबोधकं गवादिपदं तद्बोध्योऽर्थो गवादिर्वाच्यः स एव मुख्यार्थ इत्युच्यते। वाच्यवाचकादिपद ईश्वरेच्छाया बोधजनकत्वेन या विषयता सैव धात्वर्थः, तस्या आश्रयत्वरूपं कर्तृत्वं पदे कर्तृप्रत्ययेन बोध्यते, पदं गां वक्ति गां ब्रूते, गोर्वाचकमित्यादौ कर्मप्रत्ययान्तेनार्थवाचकपदेन तत्तदर्थविषयकत्वरूपं तत्तत्कर्मकत्वं धात्वर्थैकदेशे बोधे बोध्यते। पदेन गौरुच्यते पदस्य गौर्वाच्य इत्यादौ पदनिष्ठधात्वर्थीभूततादृशविषयतायाः परम्परया निरूपकत्वं, तच्च धात्वर्थीभूततादृशविषयतानिरूपकबोधजनकत्वप्रकारतान्तःपातिबोधनिष्ठविषयतानिरूपकविषयितासम्बन्धावच्छिन्नप्रकारताऽऽश्रयत्वरूपं तादृशक्रियाकर्मत्वं गवादौ कर्मप्रत्ययेन बोध्यते। द्वितीयेच्छायाः सङ्केतरूपत्वे वैपरीत्यमूह्यमिति न्यायसिद्धान्तः॥

---

मञ्जूषा।

आधुनिकसङ्केतस्य तात्पर्यवन्न वृत्तित्वमिति मतं निराचिकीर्षुः सङ्केतं विभजते-तत्रेति। पारिभाषिकमिति। अर्थस्तु परिभाषितः परिभाष्यो वा। सूचीकटाहन्यायेन परिभाषां व्युत्पाद्य शक्तिं निरूपयति-ईश्वरेति। स एवेत्येवकारो लक्ष्यपरिभाषितयोर्व्यवच्छेदार्थः। विषयतामात्रस्य सम्बन्धत्वे पदस्य वाच्यत्वव्यवहारापत्तिरर्थस्य वाचकत्वव्यवहारापत्तिरतो वाच्यादिव्यवहारं विषयं निर्धारयति-वाच्येत्यादि। घटकत्वं धात्वर्थान्वयि सप्तम्यर्थः, तथा चेश्वरेच्छीया या बोधजनकत्वनिष्ठप्रकारतानिरूपिता पदनिष्ठविशेष्यता सैव वाच्यादिपदघटकवचादिधात्वर्थ इत्यर्थः। कर्तृत्वमिति तिङमभिप्रेत्य; कृति स्वाश्रयरूपः कर्ता

द्रष्टव्यः । बोधे बोध्यत इति । गोविषयकबोधजनत्वप्रकारतानिरूपितेच्छाविशेष्यताऽऽश्रयः पदमिति बोधः । तत्र गोनिष्ठप्रकारतानिरूपितविषयितानिष्ठप्रकारतानिरूपितबोधनिष्ठप्रकारतानिरूपितजनकतानिष्ठप्रकारता प्रकारताऽन्तार्थः । धात्वर्थीभूतेति । विपरीतस्य कर्मप्रत्ययार्थत्व आनुभविकत्वाय फलस्यैवात्मनेपदाद्यर्थत्वात् । बोधजनकत्वेत्यादिः कर्मप्रत्ययार्थः । बोधपदं सम्पातायातम्। अन्तःपातित्वं—तदाश्रयजनकत्वे विशेषणताऽऽपन्नबोधनिष्ठत्वं निरूपकत्वं वा । वाच्यादिपदे तादृशप्रकारताऽऽश्रयरूपं कर्म द्रष्टव्यं, तदा च पदनिष्ठेच्छीयविशेष्यतानिरूपितजनकत्वनिष्ठप्रकारतानिरूपकबोधनिष्ठप्रकारतानिरूपकविषयितासम्बन्धावच्छिन्नप्रकारताऽऽश्रयो गौरिति बोधः । वैपरीत्यमिति । ईश्वरेच्छाया बोध्यत्वेन या विषयता सैव धात्वर्थः, तदाश्रयत्वं च कर्मत्वं कर्मप्रत्ययेन बोध्यते, बोधान्वयि जन्यत्वं तृतीयाऽर्थः । पदेन गौरुच्यत इत्यादौ च पदनिरूपितजन्यत्वाश्रयबोधविषयत्वप्रकारतानिरूपितेच्छीयविषयताऽऽश्रयो गौरिति बोधः । पदनिष्ठजन्यतासम्बन्धावच्छिन्नप्रकारतानिरूपिता पदनिष्ठप्रकारतानिरूपितजन्यतानिष्ठप्रकारतानिरूपिता वा या बोधनिष्ठप्रकारता तन्निरूपितबोधविषयतानिष्ठप्रकारता प्रकारताऽन्तार्थः । पदं गां वक्तीत्यादौ च निरुक्तधात्वर्थस्य परम्परयाऽऽश्रयत्वरूपं कर्तृत्वमाख्यातादिना बोध्यते, तच्च तादृशविषयतानिरूपकशाब्दबोधविषयत्वप्रकारताऽन्तर्गतबोधप्रकारतानिरूपकजन्यत्वप्रकारतानिरूपकनिरूपितत्वसम्बन्धावच्छिन्नप्रकारताऽऽश्रयत्वम् । वृत्तित्वं द्वितीयाऽर्थः । गोनिष्ठभगवदिच्छीयतादृशविषयतानिरूपकशाब्दबोधविषयत्वं प्रकारताऽन्तर्गतशाब्दबोधप्रकारतानिरूपकजन्यत्वप्रकारतानिरूपकनिरूपितत्वसम्बन्धावच्छिन्नप्रकारताऽऽश्रयः पदमिति बोधः ॥

माधवी ।

सङ्केतरूपां वृत्तिं विवृणोति-इदमिति । इदमेतदर्थविषयकबोधजनकं भवत्वित्यर्थः । अस्मादिति । इदंपदजन्यविषयतावान् भवत्वित्यर्थः । ईश्वरेच्छाया बोधजनकत्वेन या विषयतेति । ईश्वरेच्छानिरूपिता या बोधविषयता तन्निरूपितजनकत्वप्रकारतानिरूपितविषयतेत्यर्थः । धात्वर्थैकदेशो बोधे बोध्यत इति । तथा च गोपदं गां वक्तीत्यादौ गोविषयकबोधविषयतानिरूपितजनकत्वप्रकारतानिरूपितेश्वरेच्छाविषयत्वाश्रयो गोपदमित्यन्वयबोधः । न च गोविषयकघटविषयकसमूहालम्बन-

बोधस्यापि कदाचिदुत्पत्त्या गोपदं घटं वक्तीत्यादिव्यवहारापत्तिरिति वाच्यम् । गोपदं गां वक्तीत्यादौ गोविषयकबोधविषयतानिरूपितजनकत्वप्रकारतानिरूपितविषयताऽऽश्रयो गोपदमित्यन्वयबोधे गोविषयकत्वस्य बोधे बोधान्वयिविषयतायामप्यवच्छिन्नत्वसंसर्गेणान्वयस्वीकारात् तथा च गोपदं गोविषयकबोधजनकं भवत्वित्याकारकभगवदिच्छाविषयताऽन्तर्गतबोधविषयतायां घटविषयकत्वानवच्छिन्नत्वान्न तथा प्रयोगः ।

केचित्तु बोधे बोध्यत इत्यस्य बोधविषयत्व इत्यर्थः, तथा च गोविषयत्वस्यावच्छिन्नत्वसंसर्गेण धात्वर्थैकदेशे बोधविषयत्वेऽन्वयान्नानुपपत्तिरित्याहुः।

वैपरीत्यमूह्यमिति। गोपदं गां वक्तीत्यादौ धात्वर्थीभूतबोधविषयत्वप्रकारतानिरूपितविषयतायाः परम्परानिरूपकत्वं तन्निरूपितविषयतानिरूपितबोधविषयतानिरूपितजन्यत्वविषयतानिरूपितविषयताऽऽश्रयत्वरूपकर्तृत्वं कर्तृप्रत्ययेन बोध्यते । पदेन गौरुच्यते इत्यादौ धात्वर्थीभूतबोधविषयत्वप्रकारतानिरूपितविषयताया आश्रयत्वरूपं कर्मत्वं कर्मप्रत्ययेन प्रत्याय्यते तथा च स्वनिरूपितविषयत्वविषयतानिरूपितबोधविषयतानिरूपितजन्यत्वविषयतानिरूपितविषयतासम्बन्धेन पदनिष्ठा या बोधविषयत्वप्रकारतानिरूपितविषयता तदाश्रयो गौरित्यन्वयबोधस्तादृशासम्बन्धावच्छिन्ननिष्ठत्वं तृतीयाऽर्थः ॥

विनोदिनी ।

संकेतस्येच्छारूपत्वेन निष्प्रतियोगिकतया संसर्गताऽनुपपन्नाऽतः सप्रतियोगिकवस्तुघटितामेनां दर्शयति—इदमिति । विनिगमनाविरहादाह—अस्मेति । उपलक्षणं चैतत्, पदार्थताऽवच्छेदकबोधादिविशेष्यकसंकेतस्य । प्रायिकं चेदं क्वचित्पदविशेष्यकस्यैव बोधविशेष्यकस्यैव वा संकेतस्यौचित्यात्, स्फुटीभाव्येतत्सर्वं विशेषकाण्डे ।

बोधजनकत्वप्रकारतानिरूपितभगवदिच्छीयविशेष्यता वाच्यवाचकादिपदघटकस्य वच्यादिधातोरर्थस्तदाश्रयत्वात्म कर्तृत्वं, गोपदं गां वक्तीत्यादौ कर्त्राख्यातेन बोध्यते, गोपदं गोवाचकमित्यादिषु कर्तृकृतस्त्वाश्रय एवार्थः ।

तथा च पदविशेष्यकसंकेतपक्षे गोपदं गां वक्तीत्यादेर्गोनिष्ठविषयतानिरूपकबोधजनकत्वप्रकारतानिरूपितभगवदिच्छीयविशेष्यताऽऽश्रयो गोपदमित्यादिरर्थबोधः । गोपदेन गौरुच्यत इत्यादेस्तु गोपदनिष्ठा या बोधजनकत्वप्रकारतानिरूपितभगवदिच्छीयविशेष्यता तादृशाविशे-

ष्यतानिरूपकप्रकारतानिरूपकजनकतानिरूपकबोधनिरूपितप्रकारताऽऽश्रयो गौरिति बोधः,तादृशाद्याश्रयान्तः कर्माख्यातार्थः ।

अर्थविशेष्यकसंकेतपक्षे तु गोपदेन गौरुच्यत इत्यादितो गोपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितभगवदिच्छीयविशेष्यताऽऽश्रयो गौरित्यादिबोधः । गोपदं गां वक्तीत्यादितस्तु गोनिष्ठा या बोधविषयत्वनिष्ठप्रकारतानिरूपितभगवदिच्छीयविशेष्यता तादृशविशेष्यतानिरूपकप्रकारतानिरूपकविषयतानिरूपकबोधनिष्ठजन्यतानिरूपकप्रकारताऽऽश्रयो गोपदमित्यादिबोधः । तादृशाद्याश्रयान्तोऽत्र कर्त्राख्यातार्थः । इदमेव वैपरीत्यमिह यद् धात्वर्थाख्यातार्थयोः पूर्वतोऽन्यादृशत्वमिति बोध्यम् ॥

---

अत्र मीमांसकानुयायिनः—अपभ्रंशादपि शक्तिभ्रमेणार्थप्रत्ययात्सन्मात्रविषयके भगवत्संकेते तस्यापि बोधकत्वेन विषयत्वमिति नैयायिकैरभ्युपगमात् तस्यापि वाचकत्वं साधुत्वं च स्याद्, एवं लाक्षणिकगङ्गाऽऽदिपदस्योक्तयुक्त्या तीरादिवाचकत्वापत्तिः ।

---

मञ्जूषा ।

ननु तस्य वाचकत्वइष्टापत्तिरित्यत आह–साधुत्वं चेति । तथा च साधूनेव प्रयुञ्जीत नासाधूनिति यज्ञे तत्प्रयोगे निषेधानुपपत्तिरिति भावः । एवमिति । इष्टापत्तौ लक्षणोच्छेदप्रसङ्गः ।

माधवी ।

अपभ्रंशाद्=गाछमाछशब्दाद्, बोधकत्वेन=बोधजनकत्वेन, तस्यापि=अपभ्रंशस्यापि, साधुत्वं=दुरदृष्टाजनकत्वं, शक्तिमद्भिन्नपदस्यैव दुरदृष्टजनकत्वादिति भावः । एवं लाक्षणिक इति । उक्तयुक्त्या गङ्गाऽऽदिपदात्तीराविषयकबोधोत्पत्त्या सन्मात्रविषयके भगवत्सङ्केते तस्या बोधकत्वेन विषयत्वसत्त्वेनेत्यर्थः ।

विनोदिनी ।

अत्रेति । महाजनपरिगृहीतव्याकरणाननुशिष्टादप्रमितशक्तिकाच्छब्दाद् वस्तुत्वव्यापकविषयतानिरूपकत्वेन भगवत्संकेतस्यार्थप्रतीतेर्दुर-

पलपत्वाद् भगवत्संकेतीयबोधजनकत्वप्रकारतानिरूपितविशेष्यताशालित्वात् तत्रापि वाचकत्वसाधुत्वे दुर्निवारे इत्याक्षेपः, तथा च "नापभाषितवा" इतिश्रुतेर्निर्विषयत्वादप्रामाण्यप्रसक्तिः। किंच गङ्गाऽऽदिपदानां तीरादिबोधकत्वेन विषयतया लक्षणोच्छेदश्चानिष्ट आपन्नः।

---

यत्तु तादृशेच्छया भगवदुच्चरितत्वं वाचकत्वम्, अपभ्रंशादयश्च नार्थप्रत्यायनेच्छया भगवदुच्चरिता इति नातिप्रसङ्ग इति

---

मञ्जूषा।

तादृशेच्छयेति। तत्तदर्थविषयकबोधजनकत्वप्रकारकत्वावच्छिन्नेच्छावृत्तिजनकताकभगवदुच्चारणजन्यत्वमर्थः। घटतीरादिबोधजनकत्वप्रकारकत्वस्य गगर्याद्यपभ्रंशगङ्गापदोच्चारणजनकताऽनवच्छेदकत्वान्न दोष-इति भावः। एतेन तत्तत्पदोच्चारणजनकताऽवच्छेदकीभूतजनकत्वप्रकारतानिरूपितबोधप्रकारतानिरूपितविषयतासम्बन्धावच्छिन्नप्रकारत्वं तत्तत्पदवाच्यत्वं फलितम्।

माधवी।

अपभ्रंशादय इत्यादिना लाक्षणिकपरिग्रहः।

विनोदिनी।

यत्त्विति। तथा च तत्पदजन्यबोधनिरूपितविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतया भगवदिच्छावत्त्वस्यैव तत्पदवाच्यत्वरूपतयोक्तापभ्रंशगगर्यादीनां वाच्यत्वव्यवहारनियामकभगवदिच्छाप्रतियोगिकोक्तसम्बन्धकुक्षावप्रवेशान्न वाचकत्वापत्तिः, न वा गङ्गापदजन्यबोधनिरूपितविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासंसर्गेण भागवतेच्छावैशिष्ट्यविरहात्तीरादौ लक्षणोच्छेदापत्तिः। भगवदुच्चरिता-इति। साधव एव तादृशा इति भावः, कण्ठताल्वाद्यभिघातजन्यरूपोच्चरितत्वमशरीरिणा भगवताऽसम्भवीति तु न शङ्क्यम्, आचार्यैर्न्यायकुसुमाञ्जलौ "गृह्णाति हीश्वरोऽपि शरीर"मित्यादिना "पिताऽहमस्य जगत" इत्याद्यागमैरुपोद्बलितेन भगवच्छरीरभावस्य समर्थनात्।

---

तन्न, अस्मदाद्युच्चरितपदेष्वव्याप्तेः तज्जातीयत्वनिवेशेऽपि वेदस्थलाक्षणिकेष्वतिव्याप्तेः सादिदेवदत्तादिपदेष्वव्याप्तेश्च, द्वादशेऽन्हि पिता नाम कुर्यादिति वेदे नामपदस्य देवदत्तादिपदपरत्वेऽपि देवदत्तइत्यादिपदस्वरूपाणांभगवदनुच्चरितत्वात् ।

---

मञ्जूषा ।

ननु तादृशेच्छयोच्चरितजातीयत्वं तादृशेच्छात्वेन तदधीनानुपूर्व्याश्रयत्वं लाक्षणिकानुपूर्व्या न तत्वेनेच्छाऽधीनत्वमुपेयत इत्यत आह—सादीति । न त्वन्यबोधकत्वप्रकारकेच्छात्वावच्छिन्नाप्रयोज्यतद्बोधकत्वप्रकारकेच्छाप्रयोज्यानुपूर्वीमत्त्वोक्तौ नोक्तातिव्याप्तिरित्यवतारणं; लाक्षणिकानुपूर्व्यभेदस्य वाचकानुपूर्व्या सत्त्वेनाव्याप्तेः, अन्यथाऽतिव्याप्तेः । द्वादशेऽन्हीति । अथास्यां नामकरणविधायकश्रुतौ नामपदस्य विशिष्य चैत्रदेवदत्तादिपदपरत्वे मानाभावो, न ह्येषा चैत्रादिपदशक्तिग्राहिका, एवं च पितृकृतनाम्न एववाचकत्वं नान्यनाम्न इत्यपि नोपपद्यत इति चेत्; पुत्रे पदविशेषसङ्केतविषयकं द्वादशेऽहनीत्यादिवाक्यं पदविशेषबोद्धव्यत्वविशिष्टपुत्रविषयकसङ्केतस्येष्टसाधनत्वबोधकं, तत्र च तादृशवाक्यार्थविषयकं वेदवक्तुर्भगवतो ज्ञानमिव तादृशवाक्यार्थबुबोधयिषाऽपि हेतुरन्यथा तात्पर्यानिर्वाहात् तद्बुबोधयिषा च वाक्यार्थोपरक्ततद्बोधमवगाहमाना वाक्यार्थमप्यवगाहत इति भगवदिच्छायाः पदविशेषबोद्धव्यत्वविशिष्टपुत्रविषयकत्वेन सङ्केतविषयकत्वसिद्धौ पदविशेषबोद्धव्यत्वविशिष्टपुत्रविषयकत्वमपि सिद्धं, तथा च चैत्रादिपदबोद्धव्यत्वप्रकारतानिरूपितेश्वरेच्छाविशेष्यतायाश्चैत्रादौ सत्त्वेन पितृसङ्केतितस्यादौ चैत्रादिपदस्य पुरुषविशेषवाचकत्वं सिध्यति, न चैवमपि चैत्रत्वादिजातेः कथं प्रवृत्तिनिमित्तत्वं ? यद्विशिष्टे यत्पदबोध्यत्वमीश्वरसङ्केतेनावगाह्यते तस्यैव तत्पदप्रवृत्तिनिमित्तत्वाद् दर्शितेच्छायां च पुत्रत्वविशिष्टस्यैव बोध्यत्वेन भानं न तु जातिविशेषाणामिति वाच्यं, पुत्रसाधारणधर्मं पुरस्कृत्यैव पुत्रविषयकसङ्केतस्यैव विधेयतया तादृशधर्मविशिष्टावगाहित्वस्य सङ्केतविशेषणतया वाक्यार्थघटकतया वाक्यार्थ-

विषयिण्यां भगवदिच्छायां पुत्रसाधारणधर्मत्वोपलक्षितजातिविशेषाणां-बोद्धव्यत्वविशेष्यताऽऽपन्नधर्मिणि विशेषणतयाऽवगाहनध्रौव्याद्, एवमानु-पूर्वीविशेषाणां वाचकताऽवच्छेदकत्वमप्युपलक्षणीभूतेन केन चिद्धर्मेणा-नुपूर्वीविशेषाणामपि बोधविशेषणताऽवच्छेदकतया तदिच्छयाऽवगाहन-स्योपगन्तव्यत्वाद्, यादृशसङ्केतस्य पदविशेषबोद्धव्यत्वविशिष्टवस्तुविशेषविषयकत्वेन वेदार्थत्वे मानाभावेन तद्विषयवस्तुनस्तत्तत्पदबोध्यतया भगवदिच्छाविषयत्वमप्रामाणिकमिति तादृशसङ्केतविषयं पदमवाचक-मेव, यद्यपि चैत्रत्वावच्छिन्नस्य पदबोध्यत्वं जातिविशेषवांश्चैत्रादिपदबो-द्धव्यो भवत्विति पितृसङ्केते यथा प्राधान्येन भासते न तथा प्राधान्येन सङ्केतबोधविषयकभगवदिच्छायां भासते किं तु सुखी स्यामित्यादौ सुख-त्वादिवदुद्देश्यव्यवहारनियामकावच्छेदकतारूपतद्विषयताभासनमेव; त-थाऽपि तत्तत्पदबोध्यतायास्तत्तदर्थांशे भगवदिच्छाप्रकारतामात्रं तत्त-दर्थस्य तत्तत्पदवाच्यतानियामकं, न तूद्देश्यव्यवहारप्रयोजकविषय-तैवेत्यदोषः।

माधवी।

यद्यपि भगवदुच्चरितसजातीयत्वं यदि भगवदुच्चरितवृत्ति-जातिमत्त्वं;तदा घटबोधेच्छया भगवदुच्चरितघटवृत्तिशब्दत्ववत्तामादाय पटपदेऽपि घटवाचकत्वापत्तिः, यदि च भगवदुच्चरितवृत्तिशब्दत्वव्या-प्यजातिमत्त्वं तदा घत्वमादाय केवलघकारशब्देऽपि घटवाचकत्वापत्तिः, यदि तत्तदुच्चरितवृत्त्यानुपूर्वीमत्त्वन्तदाऽपि घत्वविशिष्टत्वमादाय घशब्दे-वाचकत्वापत्तिः। अथैकपुरुषोच्चरितशब्देऽन्यपुरुषोच्चरितशब्दवैजात्य-मनुभवसिद्धम्, अनुभवसिद्धत्वञ्च तत्पुरुषोच्चारणप्रयोज्यत्वं, तथा चा-नुमितमहिम्नो भगवतः सकलजातीयशब्दोच्चारणकर्तृत्वात् सर्वेषामेव शब्दानामीश्वरोच्चारणप्रयोज्यजातिमत्त्वम्, अपभ्रंशादौ च तादृशजा-तिर्न स्वीक्रियते, घटविषयकबोधेच्छया भगवदुच्चारणप्रयोज्यजाति-मत्त्वन्तद्वाचकत्वमिति चेन्न, तादृशजातेः प्रत्येकवर्णेष्वेवानुभवसिद्ध-त्वाद्, यदि च घकारोत्तरटकारे विलक्षणजातिरूपेयते तदा प्रत्येकवर्णे-ऽप्यनुभवसिद्धाया विलक्षणजातेरप्युपगन्तव्यतया घकारादेरपि घट-वाचकत्वापत्तिः, घटबोधेच्छया भगवदुच्चारणं तत्प्रयोज्यं न प्रत्येक-वृत्तिजातावपि तु घकारोत्तरवृत्तिटकारवृत्तिजातावेवेति वचसि को वा श्रद्दधाति, तथात्वेऽप्यस्मदुच्चरितघटादिपदेष्वव्याप्तेर्दुर्वारत्वात्; तथाऽप्येतादृशवितर्कणायामतिदोषात् तत्तद्दोषमुपेक्ष्य; स्फुटतरन्तत्र दोषान्तरमाह-वेदस्थलाक्षणिक इति।

माधवी ।

गुरवस्तु तादृशेच्छया भगवदुच्चरितवृत्तिबोधजनकत्वप्रकारतानिरूपितविशेष्यताऽवच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वरूपं तादृशेच्छया भगवदुच्चरितसजातीयत्वमिति निवेशेन नास्मदुच्चरितपदेष्वव्याप्तिर्न वाऽपभ्रंशादावतिव्याप्तिरित्यतो दोषान्तरमाह-वेदस्थलाक्षणिक इति प्राहुः। आयुर्घृतमित्यादिवेद आयुःपदस्यायुर्जनके लाक्षणिकतया तस्यायुर्जनकवाचकत्वापत्तिरिति भावः। सादीति। स्वसजातीयध्वंसप्रागभावप्रतियोगित्वं स्वाश्रयप्रतियोगिध्वंसव्याप्यतत्प्रागभावप्रतियोगिवृत्तित्वस्वतादात्म्योभयसम्बन्धेन धर्मविशिष्टधर्मवत्त्वं वाऽनादित्वन्तदन्यत्वं सादित्वम्, अथ वा तादृशोभयसम्बन्धेन धर्मविशिष्टधर्मान्यधर्मवत्त्वं सादित्वम्। यद्धर्मावच्छिन्ने सादित्वव्यवहारस्तद्धर्मस्यैव धर्मविशिष्टान्यधर्मवत्त्वेन भानस्य व्युत्पत्तिसिद्धतया घटशब्दादौ तादृशधर्मान्यतत्तद्व्यक्तित्वादिधर्मवत्त्वेऽपि घटशब्दः सादिरिति व्यवहारस्य नापत्तिः। ईश्वरोच्चरितशब्दवाच्यार्थवाचकशब्दान्यशब्दत्वम्, ईश्वरोच्चरितशब्दान्यत्वं वा प्रकृते सादित्वमिति। द्वादशेऽन्हि पिता नाम कुर्यादिति, अत्र पुत्रस्येत्यध्याहार्यं, तत्र पुत्रपदं पुत्रत्वसमानाधिकरणधर्मविशिष्टपरं, स्वविषयकज्ञानजनकत्वं तदुत्तरषष्ठ्यर्थः, नामपदं नामत्वसमानाधिकरणधर्मविशिष्टपरं, तथा च पुत्रत्वसमानाधिकरणधर्मविशिष्टविषयकज्ञानजनकनामत्वसमानाधिकरणधर्मविशिष्टविषयकपितृसमवेतकृतिरिष्टसाधनिकेत्यन्वयबोधः, अत एतादृशवाक्यात् पुत्रत्वसमानाधिकरणधर्मवद्विशेष्यकनामत्वसमानाधिकरणधर्मविशिष्टविषयकपितृसमवेतकृतिधर्मिकेष्टसाधनत्वप्रकारकबोधो जायतामित्याकारकभगवतस्तात्पर्यमङ्गीकार्यं, तादृशभगवदिच्छानिरूपितपुत्रत्वसमानाधिकरणचैत्रत्वादिजात्यवच्छिन्नविषयकबोधजनकत्वेन विषयतया नामत्वसमानाधिकरणचैत्रपदत्वाद्यानुपूर्वीविशिष्टे सत्त्वाद् भगवत्सङ्केतरूपशक्यत्वं तत्र निर्बाधमेवेति तस्य लक्ष्यतया तत्राव्याप्तिसङ्गतिरिति बोध्यम्।

विनोदिनी ।

तन्नेति। हेतुमाह-अव्याप्तेरिति। भगवदुच्चरितजातीयेति। तज्जातीयत्वं च तदीयानुपूर्वीसदृशानुपूर्वीमत्त्वेन; सादृश्यं चाव्यवहितोत्तरत्वसंसर्गेण घत्वावच्छिन्नविशिष्टात्वावच्छिन्नविशिष्टटत्वावच्छिन्नविशिष्टात्वादिमत्त्वेनेति नाव्याप्तिः। वेदस्थेति। यजमानः प्रस्तर, आदित्यो यूप इत्यादिवाक्यघटकप्रस्तरादित्यादिपदेषु सदृशतया लाक्षणिकत्वेन कल्प्तेष्वित्यर्थः। यदि तु तादृशेच्छया भगवदुच्चरितत्वमिह विषयतये-

च्छाविशेषणं पदनिष्ठजनकत्वं निर्वोढुं नाप्रासनिवेशायामुपस्थितौ शक्यविषयतानिरूपितसम्बन्धविषयत्वाप्रयोज्यत्वं विवक्ष्यते, तर्हि नोक्तदोषोऽतः स्थलान्तरमाह—सादीति। पदे सादित्वं च स्वसमानानुपूर्वीकपदासमानकालिकप्रागभावप्रतियोगित्वं, घटादिपदानां तादृशपदसमानकालिकप्रागभावप्रतियोगित्वान्न सादित्वम्। पितेति। पितृत्वस्य निरूपकांशे नित्यसाकाङ्क्षतयाऽध्याहृतपुत्रपदार्थस्य बोधकमिष्टसाधनं यन्नाम द्वादशादिनाधिकरणिका या तदीया कृतिस्तद्वान् पितेति श्रुतिवाक्यबोधाद् द्वादशादिनाधिकरणकपितृकर्त्तृकोच्चारणजन्यनामत्वसामान्येन भगवदिच्छायाः पुत्रे सत्त्वात्पुत्रस्य देवदत्तादिपदशक्यतेति शङ्काऽर्थः।

---

एवमीश्वरसंकेतस्य शक्तित्व ईश्वरानङ्गीकर्तृनये शाब्दबोधानुपपत्तिः, अथ शाब्दबोधोपयोगितायामीश्वरीयत्वमनुपादेयम्, एवं चाधुनिकसंकेतज्ञानादपि शाब्दबोधस्तादृशसङ्केतस्य वृत्तित्वं च निर्वहति, न चाधुनिकसंकेतस्य वृत्तित्वे तात्पर्यस्यापि तथात्वप्रसङ्गस्तस्यापि बोधकत्वेन पदविषयकतया संकेतरूपत्वाद्, न चेष्टापत्तिः; तथा सति लक्षणास्थले तात्पर्यस्य वृत्तितया लक्षणाया वृत्तित्वोच्छेदप्रसङ्गादिति वाच्यं, यतः पदार्थोपस्थितिनियामकः संकेतो वृत्तिः तात्पर्यज्ञानं च साक्षादेव शाब्दबोधोपयोगी न पदार्थोपस्थितिद्वारा; वृत्त्युपस्थापितपदार्थ एव प्रकरणादिना वक्तृतात्पर्यावधारणात् तथा च लक्षणाया वृत्तित्वानभ्युपगमे गङ्गाऽऽदिपदात्तीराद्यनुपस्थितौ तत्र तत्पदव्यक्तेस्तात्पर्याग्रहाच्छाब्दबोधानुपपत्तिरिति तस्या वृत्तित्वमावश्यकं, न च तात्पर्यग्रहार्थं लक्षणाऽधीनोपस्थितेर-

पेक्षितत्वेऽपि तदधीनोपस्थितित्वेन शाब्दधीहेतुत्वे माना-भावात्तस्या वृत्तित्वासिद्धिः लक्षणास्थले तात्पर्यात्मकसंकेताधीनोपस्थितित एव शाब्दबोधनिर्वाहादाधुनिकसंकेते तात्पर्याधीनोपस्थितेः शाब्दबोधप्रयोजकतायाः क्लृप्तत्वादिति वाच्यं, लक्षणाऽधीनपदार्थोपस्थितिसत्त्वे मुख्यार्थबाधादिना तत्तदर्थे तत्तत्पदव्यक्तेस्तात्पर्यग्रह उपस्थित्यन्तरमन्तरेणैव तत्तत्पदार्थानुभवस्य सर्वानुभवसिद्धत्वाद्, आधुनिकसंकेतस्थले पूर्वसंकेतकर्तृपुरुषवाक्यादितोऽर्थविशेषे डित्थादिपदस्य संकेतग्रहात्तत्तत्पदेनार्थविशेषोपस्थितेः प्रकरणादिना तत्तत्पदव्यक्तेस्तत्र तात्पर्यग्रहे सति शाब्दबोधस्य वृत्त्यन्तराधीनोपस्थितिमन्तरेणैवोत्पत्त्या आधुनिकसंकेतस्य वृत्तित्वमपीति चेद्, एवमपि संकेतस्य संबन्धत्वे मानाभावेन निष्प्रतियोगिकतया तदसंभवेन च पदार्थोपस्थापकत्वासंभवेन वृत्तित्वानिर्वाहाद्, एतेन शाब्दबोधौपयिकसंबन्धत्वेनेश्वरसंकेतज्ञानं हेतुः, तच्च मीमांसकानामपि संभवति तादृशज्ञानविरोधिविपरीतज्ञानाभावादिति निरस्तम् ।

---

मञ्जूषा ।

दूषणान्तरमाह-एवमिति । तादृशेच्छाप्रयोज्योच्चारणजन्यवेदतात्पर्यविषयपदान्यतरत्वं वाचकत्वमित्यनुशयादाहेति तु नावतारणम् । अपभ्रंशादेर्वाचकत्वापत्तेरिदानीमनुद्धरणीयत्वाद् वेदान्तर्गतापभ्रंशानां हेलय इत्यादीनां सत्त्वाच्च ।

शाब्दबोधेति । ईश्वरीयत्वावगाहिसङ्केतज्ञानासम्भवाद्, विशेष्योपादा-

नाद्याच्याद्व्यिवहारईश्वरीयत्वस्योपलक्षणत्वं सूचितम्। सिद्धान्तसिद्ध-माधुनिकसङ्केतस्य वृत्तित्वमीश्वरीयत्वत्यागबीजत्वेन दर्शयति-एवं चेति। न चाधुनिकसङ्केतस्थले शक्तिभ्रम एव शाब्दबोधोपयोगीति तस्य वृत्तित्वे मानाभाव इति वाच्यं, सर्वत्र तत्सत्त्वे मानाभावात्। निर्वहतीति। लाघवेन सङ्केतज्ञानत्वेनैव हेतुत्वादिति भावः। प्रसङ्गतस्तात्पर्यस्य वृत्तित्वं निराचिकीर्षुः प्रतिबन्द्या तस्य तथात्वं शङ्कते-न-चेति। प्रतिबन्दीं निरस्यति-यत-इति। पदार्थोपस्थितीति। पदज्ञानं करणं, वृत्तिग्रहाधीनपदार्थस्मृतिर्व्यापारः, शाब्दबोधः फलं, पदार्थस्मृतौ पदज्ञानं सम्बन्धिज्ञानविधया कारणं सम्बन्धश्च वृत्तिस्तदंश उद्बुद्धसंस्कारस्मरणं वा सम्बन्धिज्ञानमेव वा संबन्धावगाहि यथामतमुपादेयम्। प्रकरणादिनेति। घटो घटपदजन्यत्वेनेच्छाविषयतायां प्रतीतिनिष्ठायां विषयतयाऽवच्छेदकः जलाहरणार्थत्वेन वक्तृबुद्धिविषयत्वादिति, आधुनिकसङ्केतस्थले=सङ्केतकर्तृपुरुषोच्चरितस्थले, मुख्यार्थबाधादिनेति। तीरं गङ्गापदनिष्ठजनकताकत्वेनेच्छाविषयताऽवच्छेदकं गङ्गापदसमभिव्याहृतार्थघोषान्वयिप्रवाहकत्वाद्, यद्यत्पदसमभिव्याहृतपदार्थान्वयि तत्तत्पदशक्यार्थकं तत्तत्पदजन्यत्वेनेच्छाविषयताऽवच्छेदकमिति व्याप्तेः। सर्वेति। उपस्थित्यन्तरस्वीकारे गौरवात् प्रमाणान्तरेणोपस्थितिव्यतिरेकनिश्चयस्थले तत्कल्पनाऽसंभवाच्चेति भावः। नन्वेवमपि यादृच्छिकसङ्केतस्य कथं वृत्तित्वं तादृशसङ्केतिततत्पदज्ञानेऽप्यनायत्याऽर्थविशेषे तात्पर्यज्ञानस्यैवार्थोपस्थापकत्वोपगमात्तात्पर्यस्य वृत्तिताया आवश्यकत्वादिति शङ्कामुद्धरति-आधुनिकेति। सम्बन्धविशिष्टज्ञानत्वेनैव स्मारकत्वमित्यभिप्रायेण दूषयति-एवमिति। सङ्केतस्य शक्तित्व ईश्वरानङ्गीकर्तृमते शाब्दबोधानुपपत्तिमुद्धरतां मतं दूषयति-एतेनेति। सङ्केतस्य सम्बन्धत्वे मानाभावादित्यर्थः। ईश्वरानङ्गीकर्तृमीमांसकानां तदसंभवशङ्कामीश्वरानिवेशेन परिहरति-तच्चेति।

माधवी।

एवमीश्वरेति। ईश्वरेच्छानिरूपितपदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यतायास्तादृशेच्छानिरूपितस्वविषयकबोधजनकत्वप्रकारतानिरूपितविशेष्यताया वा शक्तित्वे। शाब्दबोधोपयोगितायां=शाब्दबोधकारणतावच्छेदककोटौ। एवं चेति। ईश्वरत्वमनिवेश्य शक्तिज्ञानस्य हेतुत्वे च। आधुनिकेति। तथा च शक्तिज्ञानकारणतावच्छेदकस्य शक्तिभ्रमाधुनिकसङ्केतज्ञानसाधारणत्वात् स्वातन्त्र्येण कारणतां विनाऽपि शाब्दबोध इति भावः। पदार्थोपस्थितिव्यापारकः संकेत इति। पदा-

र्थोपस्थितिद्वारा शाब्दबोधोपयोगिकः सम्बन्ध इत्यर्थः । प्रकरणादिने-ति । प्रकरणम्भोजनादि । डित्थादीति । डित्थ इति काष्ठमये हस्ति-नि सङ्केतः ।

श्यामरूपो युवा विद्वान् बलवान् धार्मिकः प्रियः ।
सर्वशास्त्रप्रवक्ता च डित्थ इत्यभिधीयते—

इति प्रवादात्तादृशपुरुषो वा । मानाभावेनेति । ननु सप्रतियोगिकत्व-मेव मानमत आह—निष्प्रतियोगिकतयेति । एतेनेति । निष्प्रतियोगिकत-या सम्बन्धत्वाभावेन । एवं तादृशरूपेण कारणतायामात्माश्रयोऽपि दोषो बोध्यः । तच्चेति । शाब्दबोधोपयोगिकसम्बन्धत्वेनेश्वरसंकेतज्ञान-ञ्च । तादृशेति । शाब्दबोधोपयोगिकसम्बन्धत्वेनेश्वरसंकेतज्ञानविरोधि-ज्ञानाभावादित्यर्थः ।

विनोदिनी ।

एवमपीति । शाब्दबोधकारणताऽवच्छेदककुक्षावीश्वरीयत्वानिवे-शेन तदनभ्युपगन्तुः शाब्दबोधसम्भवेऽपीत्यर्थः । निष्प्रतियोगिकत-येति । आनुभाविकप्रतियोगित्वस्य निरूपकत्वं घटादाविव सङ्केतेऽपि न प्रतीतिसिद्धमिति विशिष्टबुद्ध्यनियामकतया सम्बन्धत्वस्यैवानुपपत्तेः कुतो वृत्तित्वरूपतद्विशेषप्रत्याशेति भावः । एतेनेति । सङ्केतस्य निष्प्र-तियोगिकत्वप्रदर्शनेनेत्यर्थः ॥

---

यत्तु स्वजन्यबोधाविषयत्वप्रकारकेच्छाविषयत्वमर्थे पदस्य सम्बन्धः पदे चार्थस्य विपरीतः, अस्य सम्बन्धत्वमन्यथाऽनुपपत्त्या कल्प्यते, एतादृशपरम्पराया अपभ्रंशस्थले सम्बन्धता न स्वीक्रियतेऽतस्तत्र तत्सम्बन्धावगाहिज्ञानं भ्रम एवेति ।

तदपि तुच्छम्, अक्लृप्तस्य तादृशेच्छाविषयत्वस्य सम्बन्धतोपगमे तादृशज्ञानविषयत्वसमानकालीनज्ञानविषयत्वादिपरम्पराया अपि विनिगमनाविरहेण सम्बन्धताप्रसङ्गात् तस्मात्पदार्थयोः सम्बन्धान्तरमेव वाच्यवाचकभाव इति वदन्ति ।

---

मञ्जूषा ।

मीमांसकानामिति । यद्यपि गुरूणामीश्वरसङ्केतः शक्तिः, न च ईश्वरत्वं नित्यज्ञानादिमत्त्वं, ज्ञाने नित्यत्वासत्त्वेन तेन रूपेण ज्ञानासम्भवोऽन्यथाख्यात्यनङ्गीकारादिति वाच्यं, नित्यत्वसाकाङ्क्षज्ञानज्ञानस्य नित्यत्वप्रकारतानिरूपितज्ञानविषयताकत्वेन ज्ञानसम्भवात् तथाऽपि ईश्वरासत्त्वेन तत्सङ्केतस्यालीकतया शाब्दबोधौपयिकपदसामर्थ्यस्य शक्तित्वाङ्गीकारः परम्परायां मुख्यपदार्थस्यैव सप्रतियोगिकत्वमित्यतस्तन्निराकरोति–यस्त्विति–विपरीत इति । स्वविषयकशाब्दबोधजनकत्वप्रकारकेच्छाविषयत्वमित्यर्थः । पदनिष्ठप्रकारतानिरूपितजन्यत्वनिष्ठप्रकारतानिरूपितबोधनिष्ठप्रकारतानिरूपितविषयतानिष्ठप्रकारतानिरूपितविशेष्यताऽऽश्रयत्वमर्थे पदसम्बन्धः, घटादिनिष्ठविशेष्यतानिरूपकविषयत्वनिष्ठप्रकारतानिरूपकबोधनिष्ठप्रकारतानिरूपकजन्यतावृत्तिप्रकारतानिरूपकप्रकारताऽऽश्रयत्वं पदेऽर्थसम्बन्धः, तेन घटपदपटाद्योर्न परस्परसम्बन्धप्रसङ्गः । अन्यथेति । अर्थवत्प्रातिपदिकामितिव्यवहारात् ।

अक्लृप्तस्य; सम्बन्धत्वेनेत्यादिः । ईश्वरेच्छाज्ञानयोर्विनिगमनाविरहेण सङ्केतात्मकत्वात्तद्विषयतयोः सम्बन्धत्व इष्टापत्तिरित्यतोऽस्मदादिज्ञानं संगृह्याह–समानेति ।

माधवी ।

विपरीत इति । स्वनिष्ठविशेष्यतानिरूपितविषयत्वप्रकारतानिरूपितबोधविषयतानिरूपितजन्यत्वविषयतानिरूपितविषयत्वमित्यर्थः । स्वविषयकबोधजनकत्वप्रकारतानिरूपितविशेष्यत्वमित्यर्थो वा स्वपदं–पदार्थपरं, तादृशज्ञानविषयत्वं स्वजन्यबोधजनकत्वप्रकारकज्ञानविषयत्वमित्यर्थः । स्वसमानकालीनेति । स्वपदं पदपरम् । आदिना स्वविषयकज्ञानविषयत्वपरिग्रहः । स्वपदं पदार्थपरम् । सम्बन्धताप्रसङ्गादिति । तथा च तादृशसम्बन्धत्वज्ञानजन्यपदार्थोपस्थितितोऽपि शाब्दबोधप्रसङ्ग इति भावः ।

विनोदिनी ।

विपरीत इति । स्वविषयकबोधजनकत्वप्रकारताकेच्छीयविशेष्यत्वरूपः सम्बन्धः । भ्रम इति । संसर्गत्वेनानभिमताया अपभ्रंशनिष्ठायास्तेन बुबोधयिषतव्यार्थनिष्ठाया वा विषयतायाः संसर्गत्वेन भानादिति भावः । तादृशज्ञानेति । स्वजन्यबोधविषयत्वप्रकारताकज्ञानेत्यर्थः ।

---

यस्तु ज्ञाने पदानां शक्तिर्न त्वर्थे तथा च तज्ज्ञानशक्तत्वं तद्वाचकत्वं तच्च तद्विषयकशाब्दधीजनकताऽवच्छेदकधर्मवत्त्वं, स च धर्मो वन्ह्यादिनिष्ठदाहानुकूला शक्तिरिव पदार्थान्तरमेव, लाक्षणिकं नानुभाविकमेवेति न तत्र शक्तिः घटादिपदस्य मितिमातृधीजनकत्वेऽपि न तद्वाचकत्वं तद्विषयकत्वावच्छिन्नज्ञानशक्तपदस्यैव तद्वाचकत्वान्मितिमातृविषयकत्वेन च ज्ञानस्य न किंचित्पदशक्यता ज्ञानसामान्यसामग्र्या एव मितिमातृभासकतया पदान्तरस्य च तदर्थभासकतया तद्विषयकत्वस्य पदजन्यताऽवच्छेदकत्वे मानाभावात्, कार्यान्वितस्वार्थे पदानां शक्तिरिति वादिनां गुरूणां साक्षात्परम्परासाधारणकार्यत्वविषयतानिरूपितत्वेन घटादिविषयताया घटादिपदजन्यताऽवच्छेदकत्वेऽपि न घटादिपदस्य कार्यतावाचकत्वमपि तु लिङादिपदस्यैव तद्विषयकत्वावच्छिन्नेत्यत्र साक्षात्परम्परासाधारणनिरूपितत्वांशे विशेषणतयाऽवच्छेदकत्वस्यैव निवेशाद्, न च कार्यानुकूलशक्तेः स्वरूपसत्या एव कार्यानुकूलतया पदार्थोपस्थितौ शाब्दबोधे च ज्ञातोपयोगिनोऽर्थे पदस्य वृत्तिरूपशक्त्यन्तरस्वीकार आवश्यक इति वाच्यं, दाहकार्ये वन्ह्यादिनिष्ठशक्तेः स्वरूपसत्या एवोपयोगित्वेऽपि शाब्दबोधानुकूलशक्तेः शाब्दबोधे पदार्थोपस्थितौ च

ज्ञातोपयोगित्वोपगमे बाधकाभावाद्, अतीतानागत-पदज्ञानादपि शाब्दबोधोत्पत्त्या पदानामहेतुत्वेन तत्र हेतुतावच्छेदकशक्त्यसम्भव इति तु न शङ्क्यं, तन्मते पदानां नित्यत्वाद्, अस्तु वा तज्ज्ञाननिष्ठशक्त्या तद्वाचकत्वमिति मीमांसकमतविशेषः,

---

मञ्जूषा।

यस्त्विति। मतविशेष इत्यग्रिमेणान्वयः। गङ्गापदादेस्तीरादिबोधौपयिकसामर्थ्ये वाचकताप्रसङ्गं निरस्यति-लाक्षणिकामिति। मानाभावादिति। मितिमातृपदयोस्तमित्यादिविषयकत्वेन कार्यताया अवच्छिन्नतया वाचकत्वइष्टापत्तिरिति भावः। कार्यान्वितेति। घटपदार्थः कार्यतावद्घटः तस्यैव ततो बोध इति तन्मते कार्यताभानस्यावश्यकतया घटपदादेः कार्यतावाचकत्वापत्तिरित्यर्थः। साक्षादिति। क्रियायां कार्यताऽन्वयः साक्षादन्यत्र तद्द्वारा। अथ विनिगमनाविरहेण घटादिविषयतानिरूपितकार्यताविषयताया अवच्छेदकत्वेन निरूपितत्वाविशेषणतयाऽवच्छेदकीभूतकार्यत्वविषयतामादाय घटादिपदस्य कार्यताऽवच्छेदकवाचकत्वं दुर्वारमेवेति चेन्न, घटादिपदस्य कार्यतावाचकत्वभयेनैव निरूपितत्वाविशेषणतया कार्यताविषयताया जन्यतावच्छेदकत्वस्वीकारात्।

परे तु कार्यत्वविषयतानिरूपितत्वेन यद्धर्मावच्छिन्नविषयता कार्यताऽवच्छेदिका पदानां तद्धर्मावच्छिन्नवाचकता, कार्यत्वत्वविषयताया निरवच्छिन्नत्वाद् व्युदासः, न चैवमपि घटादिविषयतानिरूपितसांसर्गिकविषयतानिरूपितकार्यत्वविषयताया इव घटविषयतानिरूपितकार्यताविषयतानिरूपितसांसर्गिकविषयताया अप्यवच्छेदकत्वात् पदानां संसर्गवाचकत्वं दुर्वारमिति वाच्यं, यद्धर्मावच्छिन्नविषयतायाः संसर्गविषयताऽन्यत्वेन विशेषणीयत्वात्। नन्वेवमपि लिङादेः कार्यतावाचकत्वानुपपत्तिः, तत्र कार्यताबोधौपयिकसामर्थ्यसत्त्वेऽपि कार्यताविषयतानिरूपितकार्यताविषयतायास्तत्कार्यताऽवच्छेदकत्वात्, पूर्वमते तु नायं दोषः कार्यताविषयतायां निरूपितत्वविशेषणताऽनापन्नत्वाश्रितेरिति चेद्; एषा कार्यान्विते शक्तिः, लौकिकलिङादेस्त्वन्यैव कार्यतायां शक्तिः कार्यत्वविषयकत्वावच्छिन्नजनकतागर्भा, अवच्छेदकतापर्याप्तिप्रवेशाच्च न घटादीनां का-

र्यतावाचकत्वप्रसङ्गः, वैदिकालिङा तु कार्ये सा कार्यत्वविशिष्टविषयकत्वावच्छिन्नजनकतागर्भेति वदन्ति ।

ज्ञायमानपदस्य शक्ततामते तत्कालीनत्वतत्पुरुषीयत्वनिवेशे गौरवादाह–अस्तु वेति । यत्प्रकारकज्ञानं जनकताऽवच्छेदकीभूतशक्तिमत् तद्वत्त्वं वाचकत्वमित्यर्थः ।

माधवी ।

ज्ञाने पदानां शक्तिरिति । ज्ञाननिष्ठा पदनिरूपिता शक्तिस्तन्मते तद्विषयकशाब्दत्वावच्छिन्नं प्रति निरूपकतासम्बन्धावच्छिन्नशक्तिमत्पदस्य हेतुत्वमित्यवधेयम् । तज्ज्ञानशक्तत्वमिति । ननु घटपटविषयकज्ञानमादाय घटपदस्यापि पटवाचकताऽऽपत्तिरत आह तच्चेति । तद्विषयकेति । तद्विषयकशाब्दत्वावच्छिन्नजन्यतानिरूपितजनकताऽवच्छेदकधर्मवत्त्वमिति पर्यवसितार्थो नातः पूर्वदोषावकाशः । तद्विषयकत्वावच्छिन्नज्ञानशक्तपदस्यैवेति । तद्विषयकत्वावच्छिन्नजन्यतानिरूपितजनकताऽवच्छेदकशक्तिमत्पदस्यैवेत्यर्थः । शाब्दबोधोपयोगिकसम्बन्धत्वेन हेतुत्व आत्माश्रयो बोध्यः । वादिनामिति । लौकिकलिङः कार्यत्वे शक्तिः, अतः पचेत घटमानयेत्यादौ पाकः कार्यः घटानयनं कार्यमित्याद्यन्वयबोधः । वैदिकलिङः कार्ये शक्तिरतो यजेतेत्यादौ यागजन्यं कार्यमित्यन्वयबोधः । साक्षात्परम्परासाधारणकार्यत्वविषयतानिरूपितघटादिविषयताशालिशाब्दबुद्धित्वावच्छिन्नंप्रति शक्तिमत्त्वेन घटादिपदस्य हेतुत्वाल्लिङ्पदघटितवाक्यादेव शाब्दबोधो नार्थवादादिति वादिनां गुरूणामित्यर्थः । पदानां लिङ्पदातिरिक्तपदानाम् । साक्षात्परम्परेति । केवलपरम्परया कार्यत्वविषयतानिरूपितत्वनिवेशे पचत इत्यादौ पाकः कार्य इत्यन्वयबोधात् पाकविषयतायाः परम्पराकार्यत्वविषयत्वानिरूपिततयाऽसंगतिरतः साक्षादिति । साक्षात्कार्यत्वविषयतानिरूपितत्वोक्तौ यजेत घटमानयेत्यादौ यागजन्यं कार्यं घटानयनं कार्यमित्यन्वयबोधाद् यागविषयतायां साक्षात्कार्यत्वविषयतानिरूपितत्वाभावात्तथैवासङ्गतिरतः परम्परेति । निरूपितत्वाविशेषणतयेति । निरूपितत्वानिष्ठावच्छेदकत्वानिरूपकत्वस्यावच्छेदकत्वे निवेशादित्यर्थः । न च शक्तिमत्त्वेन यथा घटादिपदनिष्ठकारणतानिरूपितकार्यताऽवच्छेदकं साक्षात्परम्पराकार्यत्वविषयतानिरूपितघटादिविषयताशालिशाब्दत्वं तथा विनिगमनाविरहाद् घटादिविषयतानिरूपितकार्यत्वविषयताशालिशाब्दत्वमपीति कार्यत्वविषयतानिष्ठतादृशकार्यताऽवच्छेदकताया निरूपितत्वनिष्ठावच्छेदकत्वानिरूपकतया घटादिपदस्य कार्यतावाचकत्वापत्तिर्दुर्वा-

रैवेति वाच्यम् । कार्यत्वविषयतानिरूपिततद्विषयकत्वावच्छिन्नकार्यतानिरूपितकारणताऽवच्छेदकशक्तिमत्त्वं वाचकत्वमित्यर्थस्य विवक्षितत्वात्। तथा च कार्यत्वविषयतायाः कार्यत्वविषयत्वानिरूपिततया घटपदं कार्यतावाचकमिति व्यवहारस्य नापत्तिरिति के चित् ।

परे तु तद्वाचकत्वं तद्विषयकत्वावच्छिन्नकार्यतानिरूपितकारणताऽवच्छेदकशक्तिमत्त्वमेव तद्विषयकत्वावच्छिन्नेत्यत्रावच्छेदकतायां कार्यत्वविषयतातिरिक्तविषयतानिरूपितत्वानवच्छिन्नत्वं विशेषणं देयं । तथा च तादृशानिरूपितत्वानवच्छिन्नतद्विषयकत्वनिष्ठावच्छेदकताकजन्यतानिरूपितजनकताऽवच्छेदकशक्तिमत्त्वमिति फलितोऽर्थः । तथा च घटादिविषयतानिरूपितकार्यत्वविषयताशालिशाब्दबुद्धित्वावच्छिन्नकार्यतावच्छेदकत्वस्य कार्यत्वविषयतायाः सत्त्वेऽपि तादृशावच्छेदकतायाः कार्यत्वविषयातिरिक्तघटादिविषयतानिरूपितत्वावच्छिन्नतया तदनवच्छिन्नत्वविरहान्न घटादिपदस्य कार्यतावाचकत्वापत्तिरित्याहुः ।

अस्तु वा तज्ज्ञाननिष्ठशक्त्यैति । न च शक्तिमत्त्वेन पदज्ञानस्य हेतुत्वे तद्विषयकत्वावच्छिन्नकार्यतानिरूपितकारणताऽवच्छेदकीभूतशक्तिमज्ज्ञानविषयत्वं तद्वाचकत्वं वाच्यं, तथा च घटपटादिपदविषयकसमूहालम्बनघटपटादिविषयकज्ञानमादाय पटपदस्यापि घटवाचकत्वापत्तिः, घटविषयकत्वावच्छिन्नकार्यतानिरूपितकारणताऽवच्छेदकीभूतशक्तिमत्तादृशसमूहालम्बनज्ञानविषयत्वस्य पटादिपदेऽपि सत्त्वादिति वाच्यम् । स्वभिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन शक्तिविशिष्टशक्तिशून्यत्वस्य शक्तिद्वयशून्यत्वस्य वा ज्ञाने विशेषणत्वोपगमात्, तथा च तादृशसमूहालम्बनज्ञानशक्तिविशिष्टशक्तिमत्त्वस्य च सत्त्वेन नापत्तिः । न च घटादेरपि पटवाचकताऽऽपत्तिः तादृशज्ञाने तादृशशून्यत्वादिति वाच्यम्। तद्विषयकत्वावच्छिन्नजन्यतानिरूपितजनकताऽवच्छेदकशक्तिमज्ज्ञानविषयशब्दत्वस्यैव तद्वाचकत्वपदार्थत्वात् । न च तथाऽपि घटपदविषयककाकारादिविषयकसमूहालम्बनमादाय ककारादिवर्णेष्वपि घटवाचकताऽऽपत्तिरिति वाच्यम् । कोशादौ ककारादिवर्णस्यापि शक्त्यवधारणात्तादृशज्ञानस्य शक्तिविशिष्टशक्तिशून्यत्वस्याभावादित्यसमूहालम्बनघटपटादिज्ञानमादाय घटादिपदस्य घटादिवाचकत्वोपपत्तिरिति । वस्तुतस्तु स्वसामानाधिकरण्यस्वव्यभिचारित्वस्वव्यापकत्वैतत्त्रितयसम्बन्धेन शक्तिविशिष्टशक्तिमदन्यत्वञ्च ज्ञाने विशेषणं देयं, तेन घटपटादिज्ञानस्य नियमतस्तद्घटकीभूतककारादिविषयकत्वेन घटपदार्थज्ञानजनकताऽवच्छेदकीभूतश-

केरुपदर्शितोभयसम्बन्धेन शक्तिविशिष्टतया शक्तिविशिष्टशक्तिशून्यत्वविरहेऽपि न क्षतिरिति मन्तव्यम् । अथ यादृशपदविषयकज्ञानं नियतंपदान्तरविषयकं तादृशपदे तदर्थवाचकत्वानुपपत्तिरित्यत्र क उपाय इति चेत्तादृशस्थलानभ्युपगम एवोपायः, अभ्युपगमेऽपि ग्रन्थकृदुक्तदोषस्येव तद्दोषस्यापि तन्मते सत्त्वाद्, अस्तु वेत्यत्र वाकारस्यानास्थैवार्थइति ध्येयम् ।

विनोदिनी ।

अर्थज्ञानशक्तिवादिनः प्रत्यवस्थानं–यस्त्विति । पदार्थान्तरमिति । एतन्मते कार्य्यनिरूपिता कारणनिष्ठा शक्तिः सामर्थ्यापरपर्य्याया स्वतन्त्रैवाभ्युपगम्यते । नानुभावकमिति । किन्तु स्मारकमेव गङ्गाऽऽदिपदंतीरादीनामिति भावः । कार्य्यान्वितेति । अत्रायमभिसन्धिः–अगृहीतशक्तिकाच्छब्दादर्थप्रतीत्यनुदयात् शक्तिज्ञानस्यापेक्षायां सत्स्वपि व्याकरणादिषु तद्ग्राहकेषु प्रवृत्तिनिवृत्तिरूपव्यवहारादेव साधारण्येन जगति सर्वेषां शक्तिग्रहाद् व्यवहार एव तद्ग्राहकशिरोमणिरिति स्थितौ चैत्र ! गामानयाश्वं बधानेत्याद्याकारोत्तमवृद्धप्रयुक्तप्रवर्त्तकादिवाक्यात्प्रयोज्ये तथा कुर्वतीदमीयचेष्टया प्रयोजकवाक्यस्य तादृशार्थबोधकतामनुमाय; व्युत्पित्सुः परस्ताद् गां नयाश्वमानयेत्यादिप्रयोजकवाक्यात्तदनुसारिकार्य्यदर्शनादन्वयव्यतिरेकाभ्यां मिथोऽन्वितयोरेव क्रियाकारकपदार्थयोः शक्तिं निश्चिन्वान उपजीव्यतयाऽवगतत्वरान्वयांशमपरिहरन्नेव गवादिपदमानयनात्मककार्य्यान्वितगवाद्यर्थशक्तम्, असत्यनुपपत्तिप्रतिसन्धाने तथाविधकार्यान्वितगवादिबोधतात्पर्यनिबन्धनप्रयोजकोच्चारितत्वादित्यादिव्यतिरेकानुमानतः कार्य्यान्वितार्थएव पदानां शक्तिमध्यवस्यति । निवेशादिति । अयं भावः–तद्विषयकत्वावच्छिन्नज्ञानानुकूलशक्तिमत्त्वमेव तद्वाचकत्वमित्येवंरूपे प्रकृतमतीये वाचकलक्षणे कार्य्यत्वविषयतानिरूपितघटाद्यर्थविषयतानिरूपकबोधनिष्ठाया घटादिपदजन्यताया अवच्छेदककुक्षौ प्रविष्टायां घटाद्यर्थविषयतायां कार्य्यत्वविषयतानिरूपितत्वस्यैव सत्त्वेन तदनिरूपितत्वेन विवक्षितावच्छेदकत्वस्य विरहेण न घटादिपदानां कार्यतावाचकत्वमिति । बाधकाभावादिति । तथा च ज्ञायमानपदस्य करणतैतन्मत इति भावः । शब्दानित्यत्वस्य प्रामाणिकत्वे त्वाह–अस्तु वेति ।

न चासौ विचारसहः यतस्तन्मते लाक्षणिकस्याननुभावकत्वं दुर्घटमेव पदार्थोपस्थितिद्वारा शक्यार्थानुभवे शक्तस्येव लक्ष्यार्थानुभवे लाक्षणिकस्यापि हेतुताया दुर्वारत्वात् तत्रापि शक्तेरावश्यकतया वाचकताऽऽपत्तेः पदार्थोपस्थित्याऽन्यथासिद्धत्वे शक्तस्यापि तथात्वापातात् ।

न चानुभावकताऽवच्छेदकशक्त्यभावाल्लाक्षणिकस्य नानुभावकत्वसम्भवः तैर्वाक्यार्थघटकार्थान्तरवाचकमेव पदं स्वार्थस्येव तदन्वयप्रतियोगिलक्ष्यार्थस्याप्यनुभावकमुपेयत इति वाच्यम्, एवं सति गङ्गायां घोष इत्यादौ घोषादिपदस्यापि गङ्गातीरादिरूपार्थानुभावकताऽवच्छेदककशक्तिमत्त्वेन तद्वाचकताऽऽपत्तेः, लाक्षणिकस्याननुभावकत्वे शक्तपदाघटितधूमादितिहेतुवाक्यादन्वयानुपपत्तेश्च तत्र धूमादिपदस्य ज्ञाने विभक्तेश्च ज्ञाप्यत्वे लाक्षणिकत्वात्

अथ लक्ष्यार्थस्य न शाब्दबोधे प्रवेशः, अपि तु स्मृतस्य तस्य समभिव्याहृतपदार्थैरसंसर्गाग्रहमात्रं तथा च नानुपपत्तिः, न च लक्ष्यार्थस्य शाब्दबोधविषयत्वानुपगमे तदुपरागेण शृणोमीत्यनुव्यवसायानुपपत्तिरिति वाच्यम्, इष्टत्वाद्, विधेयोपरागेणैव तथाप्रत्ययात्, लक्ष्यार्थस्य शाब्दबोधविषयत्वेऽपि तस्य विधेयतया भानानभ्युपगमाद् "विधौ न परः शब्दार्थ" इति सिद्धान्ता-

दिति चेन्न, मञ्चाः क्रोशन्तीत्यादौ लक्ष्यार्थमञ्चस्थपुरुषादेः शाब्दबोधविषयताया आवश्यकत्वाद्, अन्यथा पूर्वाननुभूतस्य पुरुषादेः प्रतीत्यनिर्वाहाद्, अननुभूतस्य स्मरणासम्भवात् समानप्रकारकत्वमात्रेण शाब्दबोधपदार्थोपस्थित्यादेः कार्यकारणभावमुपगच्छतां मीमांसकानां शाब्दबोधे योग्यताबलेनापूर्वार्थस्य भानेन लक्ष्यार्थस्य शाब्दानुपगमेऽपूर्वस्यापि तस्य प्रतीत्युपपत्तिरिति तद्विषयकशाब्दत्वावच्छिन्नं प्रति शक्तिविशेषपुरस्कारेण तद्वाचकपदस्य तज्ज्ञानस्य वा न हेतुतासम्भवः, विशिष्य तत्तत्पदार्थान्विततत्तदर्थबोधे तत्तत्पदसाकाङ्क्षतत्तत्पदज्ञानत्वेनावश्यक्लृप्तकारणतयैवोपपत्तावीदृशकार्यकारणभावस्य निर्युक्तिकत्वात् ।

---

मञ्जूषा ।

लाक्षणिकस्याननुभावकत्वं प्रथमतो दूषयति—तन्मत इति । दुर्वारत्वात्तत्रापीति । गङ्गायां घोष इत्यादौ तीरवृत्तिर्घोष इति बोधादिति भावः। कथं तर्हि लक्ष्यार्थस्य शाब्दोऽनुभव इत्यत आह—तैरिति । वाक्यार्थेति । गङ्गायां घोष इत्यादौ वाक्यार्थघटकमर्थान्तरं घोषादि तद्वाचकं घोषादिपदं तत् स्वार्थस्येव तदन्वयप्रतियोगिनः लक्ष्यार्थस्य तीरादेरप्यनुभावकमित्यर्थः । सर्वशक्तघटितवाक्यानुरोधेन पदस्य शक्यार्थान्तरविषयतानिरूपितस्वशक्यार्थविषयताशालिशाब्दबोधं प्रति कारणत्वमेकपदाच्छाब्दबोधवारणायोपेयं, न तु तथाविधस्वलक्ष्यार्थविषयताशालिशाब्दबोधं प्रति, तदनुपगमेऽप्यक्षतेः,लाघवेन शक्यत्वस्यानिवेशेन लक्ष्यशक्यार्थान्यतरविषयतालाभादिति भावः। घटादिपदस्य कार्यतावाचकत्ववारकवर्त्मना घोषादिपदानां तीरादिवाचकत्ववारणसम्भवादाह—लाक्षणिकस्येति । तत्रेति । विभक्तेरेव ज्ञानज्ञाप्यत्वे लक्षणापक्षे नीलादिति हेतुर्बोध्यः ।

लक्ष्यार्थस्याननुभवमालम्ब्य शङ्कते-अथेति। न प्रवेश इति। एतेन लाक्षणिकस्यानुभावकत्वे शक्त्यभावरूपबाधकं गङ्गापदघोषपदयोस्तीरादिवाचकत्वापत्तिश्चोद्धृता। अपि त्विति। एतच्च विभिन्नज्ञानविषयतयोर्निरूप्यनिरूपकभावलाभाय, तेन बोधे तीरप्रकारतानिरूपिताधेयत्वप्रकारतानिरूपितघोषविशेष्यताकत्वलाभाद् घोषो गङ्गायां भवेदित्यादिसंशयनिवृत्तिः तीरप्रकारतायां न्यायमते शाब्दबोधीयत्वं, न तु मीमांसकमत इति विशेषः। लक्ष्यस्य स्मृतिरेव नानुभव इति पक्षे पूर्वाज्ञातं यत्तीरं स्मृतं तत्साकाङ्क्षघोषानुभवस्यानुपपत्तिरिति तु मिश्राः। न्यायमतेऽपि तीरं शृणोमीति न प्रत्यय इत्याह-लक्ष्यार्थस्येति। विधाविति जैमिनिसूत्रं परो मुख्यार्थभिन्नः लक्ष्यः पदार्थो न विधेय इति तदर्थः। स्मरणेति। मीमांसकैः सामान्यलक्षणाऽनुपगमादिति भावः। ननु मीमांसकमतेऽपूर्वपुरुषादेः शाब्दबोधो दुर्घट एव कारणाभावादित्यत आह-समानेति। लाक्षिणकेतरस्य लक्ष्यार्थानुभावकत्वे गौरवात्तद्वाचकेतरस्यापि तदर्थानुभावकत्वप्रसङ्गाच्च लाक्षणिकस्यैव लक्ष्यार्थानुभावकत्वं वाच्यं तथा च लाक्षणिकस्य तद्वाचकताऽऽपत्तिर्दुर्वारैवेति भावः। इदानीं सामर्थ्यरूपशक्तिपदार्थं दूषयति-तद्विषयकेति। अवश्येति-तत्तत्पदधर्मिकनिराकाङ्क्षत्वज्ञानदशायां शाब्दबोधवारणायेत्यादिः। ईदृशेति। साकाङ्क्षपदज्ञानेन शाब्दबोधजनने वृत्तिज्ञानजन्यपदार्थोपस्थितेः सहकारितया पदार्थोपस्थितिं प्रति शक्तिज्ञानस्यावश्यं हेतुत्वेऽपि शक्तिमत्त्वपुरस्कारेण पदादेः शाब्दबोधहेतुत्वे युक्तिविरहात्कथं पदादावतिरिक्तशक्तिः स्यादिति भावः। एवं च वृत्तिज्ञानस्य शक्तिमत्त्वेन कारणत्वे मानाभावात्तद्विषयकशाब्दबोधजनकताऽवच्छेदकीभूतशक्तिमज्ज्ञानप्रकारताऽऽपन्नस्वावच्छिन्नवृत्तिज्ञानकधर्मवत्त्वं वाचकत्वमित्यपि प्रत्युक्तम्। अपभ्रंशादपि शाब्दबोधोदयाद्व्यभिचारवारणाय तत्र तज्ज्ञाने शक्तिस्वीकारे तस्यापि वाचकत्वापत्तिरित्यप्याहुः।

माधवी।

तदन्वयप्रतियोगीति। स्वार्थान्वयप्रतियोगिलक्ष्यार्थानुभवं प्रति स्वस्य हेतुत्वमपेक्ष्यत इति भावः। शक्तिमत्त्वेनेति। तन्मते कारणमात्रस्य शक्तिमत्त्वेनैव हेतुत्वादिति भावः। असंसर्गाग्रहमात्रमिति। बाधनिश्चयाभावकालीनघोषस्य शाब्दानुभवः; तीरस्य स्मृतिर्मानसज्ञानं वेत्यर्थः। विधौ न परेति। परो लक्ष्यार्थीभूतशब्दार्थः शक्यार्थभिन्न इति यावद्, न विधौ विधेयतया न भासत इत्यर्थः। समानप्रकारकेति। तद्धर्मप्रकारकशाब्दबोधे वृत्तिज्ञानजन्यतद्धर्मप्रकारकोपस्थितित्वेनेत्यर्थः।

विनोदिनी ।

तीरादेरशाब्दत्वेऽपि घोषाद्यर्थिनां प्रवृत्तावुपायमाह-अपि त्विति। असंसर्गाग्रहमात्रमिति । घोषस्तीरवृत्तित्वाभाववानित्याकारकस्य घोषे तीरसंसर्गाभावज्ञानस्याभावमात्रमित्यर्थः । नानुपपत्तिरिति । भ्रमानभ्युपगन्तृगुरुमते यथा नेदं रजतमिति बाधग्रहस्याभावमात्रेण रजतार्थिनः प्रवृत्तिस्तथा प्रकृतेऽपीति भावः । प्रतीत्यनिर्वाहादिति । सामान्यलक्षणाऽनभ्युपगन्तृगुरुमते मञ्चस्थत्वेन सकलतादृशपुरुषोपस्थितेरसंभवेन यस्य कस्य चिन्मञ्चस्थपुरुषस्याप्यननुभूतदशायां पदार्थस्मरणाभावाच्छाब्दबोधानुपपत्तिरिति भावः । योग्यताबलादिति । सामान्यलक्षणाया अभावेन घटत्वादिनैव शक्तिग्रहस्तथैवोपस्थितिः शाब्दबोधश्च, व्यक्तिभानं तु प्रकरणादिसध्रीचीनयोग्यतावशाद् यथा भवति; तथैव लक्ष्यार्थस्यापि भाने बाधकाभाव इत्यर्थः । ईदृशेति । शाब्दबोधं प्रति शक्तिमत्पदस्य तज्ज्ञानस्य वा कारणत्वकल्पनायाः ।

---

इदं तु तत्त्वं—तीरादौ गङ्गाऽऽदिपदजन्यबोधविषयतासत्त्वेऽपि तदंशे शुद्धविषयत्वत्वादिनैव तादृशविषयत्वादिप्रकारकत्वमीश्वरेच्छायामुपगम्यते; न तु गङ्गाऽऽदिपदजन्यबोधविषयत्वत्वादिनाऽपि तत्प्रकारकत्वं मानाभावात्, तदनभ्युपगमेऽपि तस्याः सर्वविषयकत्वाव्याघाताद्, न च तथा सति बोधांशे गङ्गापदजन्यताऽनवगाहितया सर्वविषयकत्वानुपपत्तिरिति वाच्यं, तीरादिनिष्ठविशेष्यतानिरूपितप्रकारताऽवच्छेदकघटकतया तदनवगाहित्वेऽपि बोधांशे स्वातन्त्र्येण तदवगाहित्वोपगमात् तथा च तत्पदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छावत्त्वस्येश्वरेच्छानिरूपिततादृशविशेष्यतावत्त्वस्य वा तत्पदशक्यतारूपतया नातिप्रसङ्गः, उक्तरीत्यैव च घटा-

दिपदजन्यबोधविषयस्य घटान्वितकर्मत्वान्वितानयनादे-र्घटादिसंसर्गस्य च तादृशबोधविषयत्वप्रकारकेच्छाविषय-त्वेऽपि घटादिपदावाच्यत्वमुपपादनीयम् ।

---

मञ्जूषा ।

लाक्षणिकापभ्रंशयोः सङ्केतशक्तिपक्षे वाचकत्वापत्तेरुक्तत्वात्तामुद्दिधीर्षुराह--इदं त्विति । तीरादाविति । तीरं गङ्गापदजन्यबोधविषय इतीच्छाकारो नोपगम्यते येन तीरादिविशेष्यतानिरूपितप्रकारताऽवच्छेदकघटकतया बोधांशे गङ्गापदजन्यताऽवगाहित्वेन गङ्गाऽऽदिपदस्य तीरादिवाचकत्वमाशङ्क्येत; किं तु तीरं बोधविषयो भवत्वित्याकार एवेत्यर्थः । एवमपभ्रंशेऽपि । मानाभावादिति । न च प्रवाहो गङ्गापदजन्यबोधविषयो भवत्वितीच्छाकारे किं मानमिति वाच्यं, पदानां कुत्र चिदेव शक्तिः कुत्र चित्तु नेति वाच्यावाच्यव्यवस्थासिद्धये यद्यदर्थे तत्तत्पदवाच्यत्वं तत्र तत्र पदजन्यबोधविषयतात्वेन; अन्यत्र तु शुद्धबोधविषयतात्वेन विषयताप्रकारकत्वमीश्वरेच्छाया इति विशेषस्याश्रवणादर्थानामपभ्रंशवाच्यत्ववारणाय शुद्धबोधविषयतात्वेन विषयताया अप्यावश्यकतया तद्रीत्योक्तव्यवस्थासिद्धेः सर्वे सर्वार्थवाचका इति मतमप्यनादेयं, तादृशविशेषपुरस्कारेण शक्तिग्राहकं च लाघवोपबृंहितं कोशाद्येव। यत्तु-एवं सति तात्पर्यज्ञानस्य शाब्दधीहेतुतया लोहितोष्णीषाः यजमानः प्रस्तर इति वेदस्थलाक्षणिकस्थले विशेषविषयकभगवत्तात्पर्यस्यावश्यकत्वे तदादाय वेदस्थलाक्षणिकानां वाचकत्वापत्तिरिति, तत्तुच्छं, शब्दस्वातन्त्र्यशेषे मणिकृतैव पदतात्पर्याप्रयोजकत्वोक्तेः । वस्तुतस्तु तात्पर्यज्ञानस्य साक्षात्कारणताया व्यवस्थापितत्वान्न वेदस्थलाक्षणिकानां वाचकत्वं प्रसज्यते पदार्थोपस्थितिप्रयोजकविषयताया एव शक्तिसम्बन्धत्वोपगमाद्, न चैवं लौकिकलाक्षणिकेष्वपि भगवदिच्छायास्तत्पदजन्यबोधविषयतात्वेन तादृशविषयताऽऽदिप्रकारकत्वं स्वीकर्तुं शक्यं लक्ष्यार्थवृत्तिविषयतायाः पदार्थोपस्थित्यप्रयोजकत्वोपगमेन सामञ्जस्यादिति वाच्यं, तेषां भगवदुच्चरितत्वेनेच्छायास्तात्पर्यत्वासम्भवात् शक्तित्वे च तादृशविषयतायाः पदार्थोपस्थितिप्रयोजकताया दुर्वारत्वात्। स्वातन्त्र्येणेति। तीरं बोधविषयो, गङ्गापदजन्यश्च बोध इति समूहा-

लम्बनेच्छायां तीरबोधांशे गङ्गापदजन्यताऽनवगाहित्वेऽपि तीरांशे बोधविषयत्वस्य बोधांशे गङ्गापदजन्यत्वस्य च विषयत्वादित्यर्थः। तत्पदेति। न च तत्पदोत्तरकालीनबोधविषयत्वावच्छिन्नप्रकारतागर्भसम्बन्धसम्भवाज्जन्यत्वनिवेशनं व्यर्थमिच्छाप्रकारताऽवच्छेदकताया अनतिप्रसक्तत्वादिति वाच्यम्, आधुनिकसंकेतस्थले ईदृशविशेष्यतायाः संबन्धत्वस्य क्लृप्तत्वाद्, निरूपितत्वान्तं संसर्गताऽवच्छेदकमिति नायं परम्परासंबन्ध इति बोध्यम्। विशेषणरूपेण संबन्धतायां मानाभावादाह–ईश्वरेच्छेति। तादृशविशेष्यतावत्त्वस्येति। तत्पदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावत्त्वस्येत्यर्थः। तन्निष्ठविशेष्यतानिरूपकविषयतात्वाऽवच्छिन्नप्रकारतानिरूपितबोधानिष्ठावच्छेदकतानिरूपितजन्यत्वनिष्ठावच्छेदकतानिरूपितत्वसंबन्धावच्छिन्नावच्छेदतासंबन्धेनेच्छावत्त्वमीश्वरेच्छीयतादृशावच्छेदकत्वं वा घटादिवाचकत्वम्। नातिप्रसङ्गः=न लाक्षणिकापभ्रंशयोर्वाचकत्वातिप्रसङ्गः। सर्वं सर्वार्थवाचकाश्चेद् घटपदादेर्घटकर्मकानयवाचकत्वापत्तिं व्यञ्जयन् स्वमते तामुद्धरति–उक्तरीत्यैवेति अन्विताभ्वयादेः तत्पदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वानुपगमेनेत्यर्थः।

माधवी।

घटादिपदावाच्यत्वमुपपादनीयमिति। न चैतावता गङ्गाऽऽदिपदस्य लक्ष्यार्थतीरादिवाचकत्ववारणेऽपि घटादिपदजन्यबोधविषयत्वप्रकारतानिरूपितविषयतायाः संसर्गतोपगमे स्वसमानकालीनज्ञानत्वादेरपि विनिगमनाविरहेण संसर्गताऽऽपत्तिरिति पूर्वोक्ताक्षेपानुद्धार एवेति वाच्यम्। स्वसमानकालीनज्ञानविषयत्वादेस्संसर्गत्वास्वीकारईश्वरीयत्वमनिवेश्य शक्तिज्ञानाधुनिकसंकेतज्ञानयोरेकरूपेण हेतुताः लाघवस्य विनिगमकत्वात्। न च शक्तिज्ञानाधुनिकसंकेतज्ञानयोर्धर्मिताऽवच्छेदकभेदेन भिन्नमेव कारणताऽवच्छेदकमिति वाच्यम्। धर्मिताऽवच्छेदकत्वप्रत्यासत्त्या कारणत्वोपगमात् शक्तिभ्रमाधुनिकशक्तिज्ञानयोरेकरूपेण कारणत्वकल्पने लाघवाच्च। न च पूर्वाक्षिप्तवेदस्थललाक्षणिकपदादावतिव्याप्तेस्तथाऽप्यनुद्धार इति वाच्यम्। तत्र वक्तुरीश्वरस्यायुःपदमायुर्जनकविषयकबोधजनकं भवत्वित्याकारकस्यायुर्जनकमायुःपदजन्यबोधविषयतावद्भवत्वित्याकारकस्य वा तात्पर्यस्य कल्पनाया आवश्यकत्वादिति वाच्यम्। तत्राप्यायुर्जनकविषयकबोधो भवतु बोधश्चायुःपदजन्यो भवत्वित्याकारकस्य खण्डशः तात्पर्यस्यैव कल्पनात् तत्रापरितोषे आयुःपदादायुर्जन-

कत्वप्रकारकबोधो भवत्वित्याकारकतात्पर्यस्यायुःपदमपि वृत्याऽऽयुर्जन-कत्वविषयकबोधजनकम्भवत्वित्याकारकस्य वा तात्पर्यस्य फलबलक-ल्पनाद्वा शक्तिस्वीकारे इच्छानिरूपिततद्विषयताऽतिरिक्तवृत्तित्वविषय-तानिरूपिता या बोधविषयता तन्निरूपितजनकत्वप्रकारतानिरूपितवि-शेष्यतैव तादृशतात्पर्यीयबोधविषयतायास्तद्विषयत्वातिरिक्तवृत्तित्व-वृत्तिविषयतानिरूपिततया नानुपपत्तिः। एतत्पदार्थ एतत्पदजन्यबोध-विषयतावान् भवत्वित्याकारकेच्छीयविषयतायाः शक्तित्वे बोधविषयत्वए-तत्पदजन्यबोधविषयत्वातिरिक्तविषयत्वानिरूपितत्वं वृत्तित्वविषयतानि-रूपितत्वं वा निवेश्यमित्यपि द्रष्टव्यम्। आयुःपदादायुर्जनकत्वप्रकारकबो-धो भवत्वित्याकारकतात्पर्यकल्पने नानुपपत्तिरिति केचित् प्राहुरित्यादि-कं सुधीभिर्विभावनीयम्।

लक्षणाया अनुभावकत्वे सिद्धे; इदानीं लक्षणा निरूप्यते। शक्यस-म्बन्धो हि लक्षणा, अनादितात्पर्यवती निरूढा लक्षणा यथा शुक्लादिगु-णविशिष्टबोधकस्य शुक्लादिपदस्य, सादितात्पर्यमूला आधुनिकी यथा काव्यादौ; वक्तुर्निग्राहिका वा यथा पटत्वादिना बोधकस्य घटादिपदा-देः, या चेदमादिपदभिन्नविशेष्यवाचकपदसमानविभक्तिकपदनिरूपि-ता सा गौणरूपा यथा सिंहो देवदत्त इत्यत्र सिंहसदृशबोधिका। या चेदमादिपदविशेष्यवाचकपदसमानविभक्तिकपदनिरूपिता सा साध्यवसानिका यथा सिंहोऽयमित्यत्र सिंहसदृशबोधिका, एतल्लक्ष-णाद्वयं गौणीत्युच्यते, सादृश्यलक्षणा गौणीति तल्लक्षणात्। सादृ-श्यातिरिक्तसंबन्धतस्तादृशलक्षणाद्वयी शुद्धाऽप्युच्यते यथाऽऽयुर्घृत-मायुरेवेदमित्यत्रायुर्जनकबोधिका। कदाचिल्लक्षणोपादाननाम्नी यथा कुन्ताः प्रविशन्तीत्यादौ कुन्तबोधिका, काचिल्लक्षणा शक्यावृत्तिरूपेण बोधिका जहत्स्वार्था यथा तीरत्वविशिष्टबोधिका गङ्गापदस्य, काचि-च्छक्यलक्ष्योभयवृत्तिना शक्यमात्रवृत्तिना वा शक्यतावच्छेदकरूपेण बोधिकाऽजहत्स्वार्था यथा द्रव्यत्वविशिष्टबोधिका नीलघटत्वविशिष्ट-बोधिका वा घटपदस्येति दिङ्मात्रं प्रदर्शितम्। विस्तरस्त्वन्यत्र द्रष्टव्यः।

विनोदिनी।

शुद्धबोधेति। तीरं बोधविषयतावद् भवत्वित्याकार एवैवंविधस्थले भगवदिच्छाया इति भावः। स्वातन्त्र्येणेति। एवं च बोधो गङ्गाऽऽदि-पदजन्यो भवत्वित्यादिरूपेणैव गङ्गाऽऽदिपदजन्यत्वावगाहित्वं भग-वदिच्छायामिति भावः। उक्तरीत्यैवेति। कर्मत्वाद्यंशे भगवदिच्छीय-प्रकारत्वं केवलविषयतात्वेनैवास्ति, न तु घटपदजन्यबोधनिरूपितवि-

षयतात्वेनेति भावः । वृत्तिज्ञानाधीनोपस्थितिविषयाणामेव शाब्दे भानमभ्युपगम्य, संसर्गांशेऽपि शक्यतां सङ्गिरमाणानां भट्टानां मतमुत्थापयति—

---

अन्विताभिधानवादिनस्तु-पदार्थसंसर्गस्यापि वाच्यतां स्वीकुर्वन्ति, तन्मत इतरान्वितघटो घटपदशक्य इत्येतादृशमेव शक्तिज्ञानं शाब्दबोधप्रयोजकं घटो घटपदशक्य इत्याकारकान्वयांशानन्तर्भावेण शक्तिग्रहस्य तथात्वे च वृत्तिग्रहाविषयतया पदार्थसंसर्गस्य शाब्दबोधविषयताऽनुपपत्तेः, न चेतरान्वितघटस्य वाक्यप्रतिपाद्यतया शाब्दबोधात् प्राक् शक्तिग्रह एव दुर्घटोऽनुपस्थितत्वादिति वाच्यं, विशेषतः पदार्थान्तरघटितस्य तदन्वितघटादिरूपवाक्यार्थस्य प्रागनुपस्थितत्वेऽपीतरपदार्थत्वादिना सामान्यधर्मप्रकारेण तद्घटितस्य तदन्वितघटादेः प्रागुपस्थितिसम्भवेन तत्र शक्तिग्रहस्य सुघटत्वात् ।

वस्तुतस्तु पदार्थान्तरमनन्तर्भाव्य केवलान्वयांशान्तर्भावेण शक्तिग्रहस्य शाब्दबोधप्रयोजकतोपेया पदार्थान्तरस्य पदान्तरलभ्यतया तदंशान्तर्भावेण शक्तिग्रहस्यानुपयुक्तत्वाद्, न चान्वयस्य पदवाच्यत्वे तदंशे शक्तिग्रहस्य शाब्दबोधोपयोगित्वे च मानाभाव इति वाच्यं, तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञानजन्यतदुपस्थितिहेतुतायाः सामान्यत एव क्लृप्ततया वृत्तिज्ञानादनुप-

स्थितौ तस्य शाब्दबोधविषयत्वासम्भवाद्, अन्वयांशे शक्तिग्रहस्य शाब्दबोधेऽवश्यापेक्षणीयत्वात्, संसर्गताभिन्नविषयतायास्तादृशोपस्थितिजन्यताऽवच्छेदकत्वे गौरवात्।

अत्र वदन्ति—सामान्यतस्तद्विषयकशाब्दबोधे वृत्तिज्ञानजन्यतदुपस्थितित्वेन न हेतुता स्वतन्त्रवृत्तिज्ञानाद्विशृङ्खलभावेनैकपदोपस्थितयोः पदार्थतत्त्वावच्छेदकयोर्विशेष्यविशेषणभावक्रमेण शाब्दबोधापत्तेः, किन्तु तद्धर्मप्रकारेण तद्विषयकशाब्दबोधे वृत्तिज्ञानजन्यतद्धर्मावच्छिन्नतद्विषयकोपस्थितित्वेनैव हेतुता वाच्या, एवं च तत्संसर्गकबोधस्य किञ्चिद्धर्मप्रकारेण तद्विषयकत्वाभावाद् वृत्तिज्ञानात्तदनुपस्थितावपि तत्संसर्गकशाब्दबोधः सम्भवत्येव। वस्तुतस्तु शक्त्या लक्षणया चोपस्थितस्य तत्तदर्थस्य शाब्दबोधभानादुभयविधतत्तदर्थोपस्थितेरेव तद्विषयकशाब्दबोधे हेतुता वाच्या तादृशोपस्थित्योश्चानुगतानतिप्रसक्तस्य कारणताऽवच्छेदकस्यागुरोर्दुर्वचतया व्यभिचारवारणाय शक्त्यादिज्ञानजन्योपस्थितिजन्यताऽवच्छेदककोटौ तत्तत्कारणाव्यवहितोत्तरत्वनिवेश आवश्यकः, इत्थं च वृत्त्यनुपस्थितस्यापि संसर्गस्य शाब्दबोधोपगमे व्यभिचाराप्रसक्त्याऽन्वयस्य पदावाच्यत्वेऽपि न किञ्चिद्बाधकमिति किं तत्र वृत्तिकल्पनेन।

---

मञ्जूषा ।

शक्तिज्ञानाविषयस्य शाब्दबोधाविषयत्वनियममुपगच्छतां भट्टानां मतमुत्थापयति–अन्वितेति । तथात्वे=शाब्दबोधप्रयोजकत्वे, अन्वयांश इति। संसर्गताऽवच्छेदकत्वोपलक्षितधर्मपुरस्कारेणैवान्वयस्य शक्यताऽवच्छेदककोटौ निवेशो न तु सम्बन्धत्वेन; तेन शाब्दबोधे न संसर्गताऽवच्छेदकभानानुपपत्तिः। भट्टमतं दूषयति–अत्रेति। स्वतन्त्रेति । घटत्वं घटपदवाच्यमिति ज्ञानाद् घटत्वोपस्थितिः, घटपदवाच्यो मेय इति ज्ञानान्मेयत्वादिना घटोपस्थितिर्विशृङ्खलोपस्थितिरित्यर्थः। घटे घटत्वे च निर्धर्मिताऽवच्छेदककशक्तिज्ञानादित्यर्थं इत्येके । व्युत्क्रमेणेत्यपपाठः क्रमेणैव तत्र बोधस्यानिष्टत्वात् । वाच्येति। वृतिज्ञानजन्यघटाद्यवच्छिन्नकर्मत्वोपस्थितेरलीकत्वेऽपि न क्षतिरित्याशयः।

संसर्गताऽवच्छेदकस्य शाब्दबोधे भानमतेऽप्याह–वस्तुतस्त्विति। इत्थं च=कार्यताऽवच्छेदकेऽव्यवहितोत्तरत्वनिवेशे च, संसर्गतायाः कार्यताऽवच्छेदकत्वासम्भवात्। वृत्तित्वस्येति। शक्तिलक्षणाऽन्यतरत्वं न वृत्तित्वं तन्निवेशेऽन्यतरत्वघटकभेदयोर्मिथो विशेष्यविशेषणभावभेदेन कारणताभेदापत्तेः। उपस्थितेः=घटोपस्थितेः। कारणताऽवच्छेदक इति। शाब्दबोधीयेत्यादिः । पदे=घटपदे पटपदे वा। तस्यापि भानस्वीकारे नानुपपत्तिरित्यत आह—वस्तुत इति।

माधवी ।

इतरान्वितो घटो घटपदवाच्य इति । इतरत्वसमानाधिकरणधर्मावच्छिन्नविषयत्वानिष्ठविषयतानिरूपितानिरूपितत्वनिष्ठाविषयतानिरूपितसांसर्गिकविषयतानिष्ठविषयतानिरूपितनिरूपितत्वनिष्ठविषयतानिरूपिता या घटत्वावच्छिन्नत्वावच्छिन्नघटपदजन्यबोधविषयत्वप्रकारता तन्निरूपितविशेष्यतावान् घट इत्येतादृशशक्तिमानित्यर्थः। तन्मत इतरत्वसमानाधिकरणधर्मावच्छिन्नविषयतानिरूपितसांसर्गिकविषयतानिरूपितघटत्वावच्छिन्नघटपदजन्यबोधविषयतावान् भवत्वित्येतादृशभगवदिच्छाविषयतायाश्शक्तित्वादिति भावः । द्वितीयकल्पे च संसर्गत्वसमानाधिकरणधर्मावच्छिन्नसांसर्गिकविषयतानिरूपिततादृशविशेष्यता निवेश्यत इति। न च संसर्गे शक्तिमत्त्वेऽपि संसर्गताऽवच्छेदके शक्तिविरहात् कथं तस्य शाब्दबोधे भानमिति वाच्यं, तन्मते संसर्गस्य स्वरूपतो भानात्। स्वतन्त्रवृत्तिज्ञानादिति। लोमवल्लाङ्गूलं पशुपदशक्यं; तद्व्यक्तिः पशुपदशक्येत्येवंशक्तिज्ञानाद् उपस्थितयोर्लोमवल्लाङ्गूलतदाश्रययोरित्यर्थः। तद्धर्मप्रकारेण तद्विषयकशाब्दबोध इति। न च तद्धर्मप्र-

कारकतद्विशेष्यकशाब्दबोधे वृत्तिज्ञानजन्यतद्धर्मावच्छिन्नविषयकोपस्थितित्वेन हेतुत्वे घटवद् भूतलमित्यादिवाक्याद् घटप्रकारकभूतलविशेष्यकबोधोत्पत्त्या वृत्तिज्ञानजन्यघटावच्छिन्नभूतलविषयकोपस्थितेरभावाद्व्यभिचार इति वाच्यम् । विधेयताभिन्नतन्निष्ठप्रकारताकतद्विषयकशाब्दबोधत्वस्य जन्यताऽवच्छेदकत्वात्, तथा चोक्तस्थले घटस्य विधेयतया न व्यभिचारः । न च तथाऽपि विधेयताभिन्नतन्निष्ठविषयतानिरूपिततन्निष्ठविषयताकशाब्दत्वस्यैव जन्यताऽवच्छेदकत्वमुच्यतां; किं प्रकारतानिवेशेनेति वाच्यम् । घटपदाद् घटनिष्ठविशेष्यताऽऽत्मकविषयतानिरूपितघटत्वनिष्ठविषयताकशाब्दबोधोत्पत्त्या व्यभिचारादिति ।

विनोदिनी ।

अन्विताभिधानेति । ननु भट्टमते सामान्यलक्षणाऽनभ्युपगमाच्छाब्दबोधेऽपूर्वव्यक्तिभानानुपपत्तिरिति चेद्; न, स्वप्रकाराश्रयत्वसंसर्गेणापि वृत्तिज्ञानाधीनोपस्थितित्वेन कारणत्वस्य भाट्टैः स्वीकारात् । एकपदोपस्थितयोरिति । घटादिपदोपस्थितयोर्घटघटत्वादिरूपयोः । तद्विषयकत्वाभावादिति । संसर्गांशे विशेषणताव्यवहारात्, प्रकारताऽऽख्यविषयता नाभ्युपगताऽभियुक्तैरित्यर्थः ।

---

क्रोडपत्रम् ।

न च शक्तिलक्षणयोर्वृत्तित्वेनानुगमसम्भवात्तदुभयविषयकज्ञानजन्योपस्थित्योरेकरूपेणैव हेतुतया नोक्तव्यभिचारप्रसक्तिरिति वाच्यम्, उभयसाधारणवृत्तित्वस्यानुगतस्य दुर्वचत्वात् ।

यत्तु शक्तिविषयकज्ञानजन्यतदुपस्थितित्वेनैव शक्तिलक्षणाऽधीनपदार्थोपस्थित्योरनुगमसम्भवः घटशक्तं घटपदमित्येतादृशशक्तिज्ञानजन्योपस्थितेरिव घटसम्बन्धिशक्तं पटपदमित्यादिलक्षणाज्ञानजन्योपस्थितेरपि घटादिसम्बन्धिपटादिनिरूपितशक्तिविषयकज्ञानजन्यत्वादिति नोक्तव्यभिचारप्रसक्तिरिति, न च पटशक्तं पटपद-

मित्यादिज्ञानजन्यपटाद्युपस्थितौ यत्रोद्बोधकान्तराद् घटादिभानं तादृशघटादिविषयकोपस्थितेरपि घटादिशाब्दबोधजनकत्वापत्तिरिति तद्विषयकशाब्दबोधे तदर्थविशेषितशक्तिविशिष्टपदविषयकज्ञानजन्यतदुपस्थितित्वेन हेतुता वाच्या, तथा च न तेन रूपेण घटसंबन्धिशक्तं पटपदमित्यादिज्ञानजन्यघटाद्युपस्थितेः सङ्ग्रह इत्युक्तव्यभिचारो दुर्वार एवेति वाच्यं, शक्तिविषयताऽवच्छिन्नकारणताप्रतियोगिकतद्विषयताऽवच्छिन्नकार्यताशालित्वेनोपस्थितेस्तच्छाब्दबोधहेतुतया दर्शितोद्बोधकान्तरप्रयोज्यघटादिविषयताकोपस्थितेर्निरुक्तकार्यताशालित्वविरहेणोक्तातिप्रसङ्गानवकाशात्, तदर्थविशेषितशक्तिविषयतापर्यन्तस्योपस्थितिनिष्ठकारणताऽवच्छेदकेऽनिवेशादननुगमसम्भवादुक्तलक्षणाज्ञानहेतुतायामपि शक्तिविषयताया अवच्छेदकत्वेन प्रवेशादिति ।

---

विनोदिनी ।

इदानीं शक्तिलक्षणाऽधीनार्थोपस्थित्योरनुगममाह—यत्त्विति । तदुपस्थितीति । तदर्थविषयकोपस्थितित्वेनेति भावः । उद्बोधकान्तरेति । साहचर्यादिज्ञानादित्यर्थः । तदर्थविशेषितेति । निरूपितत्वसंसर्गेण तदर्थविशिष्टा या शक्तिस्तद्विशिष्टं यत् पदं विषयितासंसर्गेण तादृशपदविशिष्टं यज्ज्ञानं तज्जन्या या तदर्थोपस्थितिस्तत्त्वेन कारणतेति भावः । निरुक्तकार्यताशालित्वविरहेणेति । शक्तिविषयकत्वावच्छिन्नकारणतानिरूपितकार्यताशालित्वस्योद्बोधकान्तरप्रयोज्योपस्थितावसम्भवेनेत्यर्थः

---

तन्न समीचीनम्, उक्तानुगतरूपेण पदार्थोपस्थितेर्हेतुत्वे घटकालीना या शक्तिस्तद्वत्पटपदमित्यादिज्ञानजन्यघटाद्युपस्थितितोऽपि घटादिशाब्दबोधप्रसङ्गात्, तत्काली-

नशक्तिरूपपरम्परासम्बन्धाविषयताऽन्तःपातिन्याः शक्तिविषयताया अपि तादृशसम्बन्धप्रयोज्यघटादिविषयताप्रयोजकत्वात्, तादृशशक्तिविषयकधियश्च घटादिनिरूपितत्वेन तत्सम्बन्धिनिरूपितत्वोपरागेण च पदे शक्त्यनवगाहितया शाब्दबोधप्रयोजकतच्छक्तपदज्ञानतल्लाक्षणिकपदज्ञानानात्मकतया तज्जन्योपस्थितेः शाब्दबोधजनकत्व इष्टापत्त्यसम्भवाद्, न च किञ्चिन्निरूपितत्वोपरक्तशक्तिविषयताप्रयोज्यतत्तदर्थविषयताकोपस्थितित्वेन शाब्दधीप्रयोजकत्वोपगमान्नायमतिप्रसङ्ग उक्तज्ञानीयशक्तिविषयतायाः किञ्चिन्निरूपितत्वविषयतानिरूपितत्वविरहादिति वाच्यम्, एवमपि घटकालीना या पटनिरूपिता शक्तिस्तद्वत्पटपदमितिज्ञानजन्यघटाद्युपस्थितेरव्यावृत्तेः ।

अथ किञ्चिन्निरूपितत्वेन शक्तिविषयता यादृशकारणताऽवच्छेदिका तादृशकारणताप्रतियोगिकप्रकृतार्थविषयताऽवच्छिन्नकार्यताशालित्वेनोपस्थितेर्हेतुत्वोपगमान्नायमतिप्रसङ्गः, शक्त्यंश उदासीनस्य पटनिरूपितत्वादेर्भानेऽपि घटकालीनशक्तिरूपघटीयपरम्परासम्बन्धविषयकपदज्ञानस्य घटादिस्मारकतया तत्स्मृतिजनकतायाः पटादिनिरूपितत्वविषयतानिरूपितत्वस्य शक्तिविषयकत्वेऽनिवेशादिति चेद्;

एवमपि यत्र घटादेः शक्तत्वसम्बन्धेन पदांशे प्रकारता तज्जन्योपस्थितितोऽपि घटादेः शाब्दबोधोत्पत्त्या

तदनुपपत्तिर्दुर्वारैव, तत्र पदांशेऽर्थसंसर्गतया भासमान-
शक्तावर्थस्य निरूपितत्वरूपसम्बन्धान्तराभानात् ।

वस्तुतो घटत्वाद्युपलक्षितवाचकाद् द्रव्यादिपदाच्छ-
क्त्याऽभ्रान्तस्य घटत्वादिप्रकारकशाब्दबोधवारणाय तद्ध-
र्मप्रकारकशाब्दबोधे शक्तौ तद्धर्मविशिष्टनिरूपितत्वाव-
गाहित्वेन शक्तिज्ञानस्योपयोगिता वाच्या; तथा च त-
त्सम्बन्धिशक्तत्वावगाहिनो लक्षणाग्रहस्य तेन रूपेणा-
सङ्ग्रहादननुगमेन व्यभिचारप्रसक्त्योक्तकार्यकारणभावे
कारणानन्तर्यप्रवेश आवश्यकः ।

एवं शक्तिज्ञानमुभयविधं विनिगमनाविरहाच्छाब्दबो-
धप्रयोजकं पदेऽर्थवाचकत्वावगाहि;अर्थे पदवाच्यत्वावगाहि
च, तयोरपि नानुगमसम्भवः वाच्यत्ववाचकत्वयोः शक्ति-
प्रतियोगित्वशक्त्याश्रयत्वरूपमिथोविलक्षणसम्बन्धरूपत-
याऽनुगताननतिप्रसक्तरूपाभावात्, सम्बन्धत्वादिनाऽनुगमे
तदीयकालिकादिसम्बन्धज्ञानादर्थधर्मिकपदवाचकतायाः
पदधर्मिकार्थवाच्यतायाश्च ज्ञानाच्छाब्दबोधापत्तेः, तज्ज-
न्योपस्थित्योरपि परस्परजन्यबोधे व्यभिचारः ।

एवं लक्षणाज्ञानमपि पदेऽर्थसम्बन्धिवाचकताऽवगा-
हितया;अर्थे पदवाच्यसम्बन्धिताऽवगाहितया च; द्विविधं-
शाब्दबोधप्रयोजकं, तदधीनोपस्थित्योरप्यननतिप्रसक्तरूपे-
णानुगमासम्भवेन परस्परजन्यबोधे व्यभिचार इति कार्य-
ताऽवच्छेदकगर्भे तत्तत्कारणानन्तर्यप्रवेशो ध्रुव इत्यवधेयम्।

मञ्जूषा ।

ननु शक्तित्वावच्छिन्नसांसर्गिकविषयतानिरूपितपदनिष्ठप्रकारतानिरूपितार्थविशेष्यताशालिज्ञानजन्योपस्थितित्वेनानुगमः शक्तिसंबन्धेन शक्यसंबन्धेन वा पदप्रकारकज्ञाने शक्तेः संसर्गत्वात् शक्तित्वानिष्ठावच्छेदकतायां पर्याप्तिः परं न निवेश्यतइत्यत आह–एवमिति ।

पदार्थान्यतरधर्मिकपदार्थान्यतरप्रकारकवाच्यत्ववाचकत्वान्यतरसंसर्गकज्ञानत्वेनानुगमे त्वाह—अर्थधर्मिकेति ।

विनोदिनी ।

तत्कालीनशक्तिरूपेति । घटाद्यर्थाधिकरणकालवृत्तिशक्तिरूपेत्यर्थः । उभयविधमिति । घटपदं घटत्वविशिष्टवाचकमिति, घटो घटपदवाच्य इति च । द्विविधमिति । गङ्गापदं तीरसम्बन्धिवाचकमिति, तीरं गङ्गापदवाच्यसम्बन्धीति च । कार्य्यताऽवच्छेदकगर्भ इति । पदविशेष्यकशक्तिज्ञानाधीनोपस्थित्यव्यवहितोत्तरभाविशाब्दबोधत्वस्य, अर्थविशेष्यकशक्तिज्ञानाधीनोपस्थित्यव्यवहितोत्तरभाविशाब्दबोधत्वस्य च, तथा पदविशेष्यकलक्षणाज्ञानाधीनोपस्थित्यव्यवहितोत्तरभाविशाब्दबोधत्वस्य, अर्थविशेष्यकलक्षणाज्ञानाधीनोपस्थित्यव्यवहितोत्तरभाविशाब्दबोधत्वस्य च, तत्तत्स्थले कार्य्यताऽवच्छेदकतया नोक्तव्यभिचारप्रसक्तिरिति भावः । एवं च तत्तद्विशेषधर्मपुरस्कारेणैव शाब्दबोधकार्यकारणभावस्य वक्तव्यतया वृत्तिं विनाऽपि संसर्गभानसम्भवान्न तदंशे वृत्त्यधीनोपस्थितेरपेक्षेति पर्य्यवसितम् ।

इति क्रोडपत्रम् ।*

---

* क्रोडपत्रमेतन्माथव्यामंशतोऽपि न विवृतम् । मञ्जूषाकृताऽपि तथैवाचरितं केवलमवसानेऽस्यावतरणद्वयमसूचि ।

क्रोडपत्रारम्भे न चेत्यादिर्दुर्वचत्वादित्यन्तो ग्रन्थो न मूलघटको नापि क्रोडपत्रीयः पौनरुक्त्यादिति मन्यमानेन हरिनाथतर्कसिद्धान्तेन पर्य्यत्याज्येव ।

त्यागप्रयोजकपौनरुक्त्यासत्त्वात्, प्राचीनलिखितपुस्तकेषूपलभ्यमानत्वात्, पूर्वापरसंदर्भानुगुणत्वाच्चोपादेयतामर्हति पाठोऽयमिति यथास्थानं समावेश्यतेऽस्माभिः ।

अथ वृत्त्यनुपस्थितस्यापि पदार्थद्वयसंसर्गस्य शाब्दबोधविषयत्वोपगमे सम्बन्धभाने नियामकाभावात् सर्वत्राबाधितयावत्सम्बन्धभानापत्तिरिति चेद्; न, कयोश्चित्पदयोः केन चित्सम्बन्धेन स्वार्थान्वयबोध एव साकाङ्क्षतयाऽऽकाङ्क्षाज्ञानस्यैव पदार्थद्वयसंसर्गभाननियामकत्वाद्, ययोश्च पदयोर्नानासम्बन्धेन स्वार्थान्वयबोधआकाङ्क्षा, तज्जन्यशाब्दबोधे संसर्गविशेषतात्पर्यज्ञानरूपकारणबलादेव सम्बन्धभाननियमोपपत्तेरन्वयांशे शक्त्युपगमेऽप्येकैकस्यैव पदार्थसंसर्गस्य संसर्गविधया क्व चित्कस्य चिद्भानं क्व चित् कस्य चिद्भानमित्यनियमेन सामान्यरूपेणैवान्वयस्य शक्यकोटावन्तर्भावणीयतयोक्तस्यैव संसर्गभाननियामकत्वात् ।

न च संसर्गविशेषानुपस्थितौ तात्पर्यज्ञानासम्भवेन तदुपस्थितेरावश्यकतया तद्गोचरसंस्कारोद्बोधार्थमेव तत्र वृत्तिज्ञानमपेक्षितमिति वाच्यम्, उद्बोधकान्तरोपस्थितेऽपि संसर्गे तात्पर्यग्रहसम्भवात्तत्र वृत्तिज्ञानस्यानपेक्षितत्वात् तस्माद्घटत्वगोत्वादिविशिष्ट एव घटगवादिपदस्य शक्तिः पदार्थद्वयसंसर्गस्त्वाकाङ्क्षाबललभ्य एवेति स्थितम्*

---

*हरिदासास्तु तत्पदबोध्यत्वप्रकारतानिरूपितविशेष्यतासम्बन्धेन भगवदिच्छावत्त्वमेव तत्पदवाच्यत्वम् । गङ्गाऽऽदिपदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यतया मुख्यार्थप्रवाहादावेवेश्वरेच्छासम्बन्धत्वं न तीरादाविति न तीरादौ गङ्गापदवाच्यताऽऽपत्तिः । न च तीरादौ न तत्सम्ब-

घटादिपदस्य पदार्थताऽवच्छेदकीभूतघटत्वादिविशिष्ट एव शक्तिर्न तु घटत्वोपलक्षिते; घटत्वादेरुपलक्षणत्वे तस्य द्रव्यत्वकम्बुग्रीवाऽऽदिमत्त्वाद्यविशेषेण घटादिपदाद् द्रव्यत्वकम्बुग्रीवाऽऽदिमत्त्वादिना न बोधः, अपि तु घटत्वादिनैवेति नियमानुपपत्तेः ।

अथ घटत्वादेरिव द्रव्यत्वादेरपि वैशिष्ट्यस्य घटादौ सत्त्वाद् घटादिपदशक्तावपि घटत्वादिसामानाधिकरण्यरूपवैशिष्ट्यवद्द्रव्यत्वादिवैशिष्ट्यस्याप्यक्षततया घटत्वविशिष्टे शक्तिर्न तु द्रव्यत्वविशिष्ट इत्यस्य कोऽर्थः ?

मञ्जूषा ।

कयोरिति । यथा घटपदाद्यम्पदाद्योः । ययोश्चेति । ब्राह्मणे विद्येत्यादौ । कालिकादिसम्बन्धस्य चाकाङ्क्षातात्पर्यादिजन्यताऽवच्छेदककोटौ प्रायशोऽप्रवेशान्न तेन सम्बन्धेन बोधापत्तिः एवकारेणान्वयांशे

---

न्धत्वमित्यस्य न तीराद्यनुयोगिकसम्बन्धत्वमर्थः स च न सङ्गच्छते तादृशविशेष्यतायास्तीरादावपि सत्त्वात्तीरानुयोगिकत्वस्येश्वरेच्छाप्रतियोगिकत्वस्य तत्र सत्त्वादिति वाच्यम् । तीरादौ न तत्सम्बन्धत्वमित्यस्य न तीरानुयोगिकत्वावच्छेदेन तत्प्रतियोगिकत्वमित्यर्थकतयाऽनुपपत्तिविरहात् । यथा हि समवायैक्यमत एकस्मिन्नेव रूपप्रतियोगिकत्ववाय्वनुयोगिकत्वोभयसत्त्वेऽपि तन्निष्ठसामानाधिकरण्यमात्रं न त्ववच्छेद्यावच्छेदकभावाख्यसम्बन्ध इति न वाय्वादे रूपादिमत्त्वं, तथा गङ्गापदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यताया ईश्वरेच्छाप्रतियोगिकत्वतीरानुयोगिकत्वोभयवत्त्वेऽपि न तयोरवच्छेद्यावच्छेदकभाव इति न तीरादेर्गङ्गापदवाच्यत्वम् ।

केचित्त्ववच्छेद्यावच्छेदकभावानङ्गीकारेऽपि वायू रूपवानिति ज्ञानस्य भ्रमत्वमेव रूपसमवायसत्त्वेऽपि रूपात्मकसम्बन्धसत्त्वाद्, अत्रापि तादृग्विशेष्यतासत्त्वेऽपि पटपदादेर्घटादावभावेनापत्त्यभावात् तादृशसम्बन्धेन पटपदवत्त्वमेव पटपदवाच्यत्वमित्याशयस्तेषाम् । क्वचिदियत्पाठातिरेकः ।

शक्तिव्यवच्छेदः तदुपगमेऽपि सामान्यरूपेणैवान्वयस्य शक्यकोटावन्तर्भाव्यतया पदार्थसंसर्गविधया तत्रैकैकस्यैव भानात्किञ्चित्कस्य चिद्भानमित्यनियमप्रसङ्गेनोक्तस्यैव तद्भाननियामकत्वावश्यकत्वादिति भावः । पदार्थताऽवच्छेदकसंसर्गस्य वृत्तिलभ्यत्वं सूचयित्वाऽऽह–पदार्थद्वयेति । यथा पार्थ एव धनुर्धर इत्यादावन्ययोगव्यवच्छेदयोः सम्बन्धः, तत्र पार्थविशेषितभेदस्यान्यत्रान्वयार्थं खण्डशक्तेः सिद्धान्तितत्वात् । तस्य= उपलक्षणत्वस्य । द्रव्यत्वाद्यविशेषणेति नियमानुपपत्तौ हेतुः । घटत्ववि- शिष्टे शक्तिरित्यत्र सप्तम्या वृत्तित्वार्थकतया पर्यवसन्नं घटत्वसमानाधिकरणशक्तिरित्यर्थमालम्ब्य शङ्कते–अथेति। यत्तु घटत्ववैशिष्ट्याश्रयवृत्तिः शक्तिरित्यर्थनिराकरणमिति; तन्न, घटत्वसमानाधिकरणरूपवैशिष्ट्यवदितिलेखविरोधात् ।

---

अत्र वदन्ति–तद्विशिष्टे शक्तिरित्यस्य तद्धर्मतद्वैशिष्ट्यतदाश्रयेषु त्रिष्वेव शक्तिरित्यर्थः । घटादिपदशक्तिमति द्रव्यत्वादिवैशिष्ट्यसत्त्वेऽपि द्रव्यत्वादौ शक्तिविरहात्तेषामुपलक्षणता घटत्वादौ तत्सत्वाच्च तेषां विशेषणता । एवंच प्रवृत्तिनिमित्तेऽपि शक्तेस्सत्त्वात्तस्यापि वाच्यतया वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वमिति प्रवृत्तिनिमित्तलक्षणे वाच्यत्वे सतीति विशेषणदानं, जात्याकृतिव्यक्तयः पदार्थ इति न्यायसूत्रोक्तं गोत्वादिजातेर्गवादिपदार्थत्वं चोपपद्यते ।

---

मञ्जूषा ।

त्रिष्वेवेति । न च जात्याकृतिव्यक्तयः पदार्थ इतिसूत्र आकृतावपि शक्तिकथनात्तद्विरोध इति वाच्यम् । ग्रन्थकृतैतस्य समाधास्यमानत्वात्। शब्दाश्रयत्वोपलक्षिते गगनपदशक्तेः शब्दाश्रयत्ववारणाय वाच्यत्वे सतीति, अवयवसंयोगरूपाकृतिवारणाय वाच्यवृत्तित्वे सतीति । न च परम्परया कालिकादिसम्बन्धेन च तस्या अपि वाच्यवृत्तित्वमिति वाच्यम् ।सर्वा

धारतानियामकान्यसम्बन्धेन वृत्तित्वस्य निवेश्यत्वात् परंपरायाश्च वृत्य-नियामकत्वात्। स्थूले दध्न्यातिव्याप्तिवारणाय तृतीयम्। न चैवमपि शक्तिभ्रमादिना वाच्योपस्थितिप्रकारत्वं तत्राक्षतमिति वाच्यम्। भ्रमान-धीनप्रकारताया उपादानाद्। वस्तुतस्तु तत्पदवाच्यत्वे तत्पदवाच्यवृत्तित्वे च सति मुख्यविशेष्यतानिरूपिता या तत्पदशक्तिप्रयोज्यसांसर्गिकविष-यता तन्निरूपितप्रकारताऽऽश्रयत्वं तत्पदप्रवृत्तिनिमित्तत्वं, शब्दस्य शब्द-पदवाच्यतयाऽऽकाशपदप्रवृत्तिनिमित्तत्ववारणाय तत्पदवाच्यत्वनिवेशः, गवाद्याकृतेरपि द्रव्यादिपदवाच्यतदवयववृत्तित्वात्तद्वारणाय तत्पद-वाच्यवृत्तित्वप्रवेशः, विशेष्यदलप्रवेशाद्द्ध्यादिपदवाच्यदधिद्व्यणुकादि-वृत्तेर्द्ध्यादिपदवाच्यत्रसरेण्वादौ नातिव्याप्तिः, तत्र पश्वादिपदजन्यबोधे लोमत्वादेर्धर्मिविशेषणतया भासमानलोमाद्यंशे प्रकारतयाऽतिव्याप्तिर-तोमुख्यविशेष्यतानिवेशः, लोमादिपदप्रयोज्यलोमादिरूपमुख्यविशेष्यांशे लोमत्वादिसंसर्गभानमादाय लोमत्वादावतिप्रसङ्गोऽतस्तत्पदशक्तिप्रयो-ज्यत्वं संसर्गविषयताविशेषणं, पश्वादिपदलक्षणया लोमत्वादिना लोमा-दिमुख्यविशेष्यकबोधजननात्तत्पदप्रयोज्यतामात्रनिवेशे तत्रातिप्रसङ्गो-ऽतस्तत्पदशक्तिनिवेशः, तत्पदशक्तिप्रयोज्यमुख्यविशेष्यतानिरूपितप्रका-रतानिवेशे दधि द्रव्यमितिवाक्यजन्यबोधे दधिपदशक्तितो मुख्यविशे-ष्यतया भासमाने दध्यादौ द्रव्यत्वादिना प्रकारे दध्यादावतिव्याप्तिरत-स्तत्पदशक्तिप्रयोज्यसंसर्गविषयतानिवेशः, न च मुख्यविशेष्यतानिरूपि-तप्रकारतायां तत्पदशक्तिप्रयोज्यत्वानवेशादेव तद्दोषवारणसम्भवात्संस-र्गविषयतानिवेशनमफलमिति वाच्यम्। इदं दधीत्यादिवाक्यजन्यबोधी-यमुख्यविशेष्यतानिरूपितप्रकारतायास्तावताऽप्यवारणाद्, न चैवंविधवि-शेष्यदलनिवेशे शक्यत्वविशेषणं व्यर्थमाकाशपदशक्यशब्दाश्रयत्वसं-सर्गभानस्य तत्पदशक्तिप्रयोज्यत्वाभावेनैवानतिप्रसङ्गादिति वाच्यम्। श-ब्दाश्रयत्वतत्संसर्गविषयतयोस्तत्संसर्गेण तत्प्रकारकशक्तिज्ञानजन्यताऽ-वच्छेदकतया तत्पदशक्तिप्रयोज्यताया दुर्वारत्वाद्, न च स्वांशे या तत्प-दशक्तिस्तत्प्रयोज्यत्वं निवेश्यतामिति वाच्यम्। तस्य लक्षणान्तरत्वात्।

माधवी।

वाच्यत्वे सतीति। शब्दाश्रयत्वे शक्यताऽनभ्युपगन्तृमते तत्रातिव्याप्ति-वारणाय प्रथमं सत्यन्तम्। आकृतेः पदार्थत्वमते तत्रातिव्याप्तिवारणाय द्वितीयं सत्यन्तम्। वाच्यवृत्तित्वञ्च साक्षात्सम्बन्धेन ग्राह्यम्, अत आ-कृतेः परम्परया घटादिवृत्तित्वेऽपि न क्षतिः। न चाकृतेः साक्षात्सम्ब-न्धेन घटादिवृत्तित्वसत्त्वात्तद्दोषतादवस्थ्यमिति वाच्यम्। आकृतेर्घटा-

दिरूपवाच्ये येन सम्बन्धेन प्रकारत्वं तादृशसम्बन्धेन वाच्यवृत्तित्वस्य विवक्षितत्वात् । दधिपदप्रवृत्तिनिमित्तलक्षणस्य स्थूलदध्यादावतिव्याप्तिः, स्थूलदध्यादेस्तदवयवदधिसमवेतत्वात् दधिपदवाच्यत्वाच्चातो विशेष्यदलम् ।

विनोदिनी ।

प्रवृत्तिनिमित्तं निर्वक्ति–वाच्येति ।

वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वं प्रवृत्तिनिमित्तलक्षणं; शब्दाश्रयत्वस्याकाशपदप्रवृत्तिनिमित्तत्वं मा भूदिति प्रथमविशेषणमिति केचित्, परे तु घटत्वाद्युपलक्षितघटादौ शक्तिज्ञानतो द्रव्यादिपदतोऽपि घटत्वप्रकारकोपस्थितिसंभवेन घटरूपवाच्यवृत्तित्वेन च द्रव्यपदप्रवृत्तिनिमित्तता घटत्वादावापद्येतेति प्राथमिकविशेषणम् । "जात्याकृतिव्यक्तयः पदार्थः" इतिपारमर्षसूत्रस्वारस्येन जात्याकृतिविशिष्टस्य वाचकत्वेन संस्थानात्मकाकृतौ प्रथमविशेषणविशेष्ययोः सत्त्वादतिव्याप्तिनिरासाय द्वितीयविशेषणम्, आकृतेरवयवसंयोगरूपाया अवयववृत्तित्वेन वाच्यघटादिवृत्तित्वाभावेनादोषात्, न च स्वाश्रयाश्रितत्वसंबन्धेनाकृतेरपि वृत्तित्वमस्त्येवावयविनीति शङ्क्यं-साक्षात्संबन्धेन वृत्तित्वस्य विवक्षितत्वात्, सम्बन्धे साक्षात्त्वं च स्वनिरूपितत्वस्वनिरूपितविशेष्यतानिरूपितत्वोभयसम्बन्धेन प्रकारताविशिष्टसंसर्गीयविषयतावत्त्वं, तथा चात्राकृतिनिष्ठप्रकारतानिरूपितत्वमाश्रयनिष्ठसंसर्गीयविषयतायां तन्निरूपितविशेष्यतानिरूपितत्वं चाश्रितत्वनिष्ठसंसर्गीयविषयतायामतो न साक्षात्सम्बन्धता स्वाश्रयाश्रितत्वस्येति भावः । घटादेर्वाच्यत्वेन वाच्यकपालादिवृत्तित्वेन च कपालादिपदप्रवृत्तिनिमित्तत्वापत्तिरतो विशेष्यदलम्, अस्य च भ्रमान्यशक्तिग्रहाधीनोपस्थितीयमुख्यविशेष्यतानिरूपितप्रकारतावत्त्वमर्थः, तेन द्रव्यपदं द्रव्यवच्छक्तमिति शक्तिभ्रमजोपस्थितीयाया द्रव्यपदं द्रव्यवल्लाक्षणिकमिति लक्षणाग्रहजोपस्थितीयायाः प्रकारताया घटादिवृत्तित्वेऽपि न घटादावतिव्याप्तिः, नापि पशुपदादिप्रवृत्तिनिमित्तता लोमादावापद्येत प्रकारत्वानवच्छिन्नात्मिकया मुख्यविशेष्यतया पश्वादिनिष्ठया निरूपितायाः प्रकारताया लाङ्गूलादावेव सत्त्वान्न लोमादौ, तत्रत्यायाः प्रकारतायाः पश्वादिनिष्ठविशेष्यतानिरूपितप्रकारताऽवच्छिन्नयैव लाङ्गूलादिनिष्ठाविशेष्यतया निरूपितत्वादिति भावः ।

---

अथ घटशब्दाद्घटो बोद्धव्य इत्याकारिकाया भगवदिच्छाया बोधविशेषविषयतात्वेन बोधविषयतानिष्ठप्रकारतानिरूपितविशेष्यता घट एव न तु घटत्वादौ विषयतामात्रं च वस्तुमात्र एवेति कथं घटपदशक्तिर्घटत्वादिषु त्रिष्वेवेति नियम इति चेद्; ईश्वरेच्छायास्तत्पदजन्यशाब्दबोधविषयताप्रयोजकः संबन्ध एव तत्र तत्पदशक्तिरितिव्यपदेशनियामकः, घटपदाद् घटो बोद्धव्यइत्येतादृशेच्छायां च घटत्वावच्छेदेन बोधविषयत्वमवगाहमानायां समवायावच्छिन्नं बोधविषयताऽवच्छेदकत्वं घटत्वे; समवायेन घटत्वावच्छेद्यत्वं वा बोधविषयतायां; संसर्गमर्यादया भासते, एवं चाश्रयत्वसंबन्धावच्छिन्नबोधविषयत्वप्रकारतानिरूपितविशेष्यत्वं घटस्य; अवच्छेदकतासंसर्गावच्छिन्ना घटविशेषणताऽऽपन्नबोधविषयत्वस्य या प्रकारता तन्निरूपिताविशेष्यत्वं घटत्वस्य; घटविशेषणताऽऽपन्नबोधविषयत्वांशेऽवच्छेद्यत्वसंबन्धेन प्रकारत्वं वा घटत्वस्य, घटत्वे बोधाविषयतायाः संसर्गतया भासमानेऽवच्छेदकत्वेऽवच्छेदकतया भासमानत्वं समवायस्येति त्रितयमेव घटपदजन्यबोधाविषयतायां ज्ञातमुपयुज्यत इति त्रयाणां वाच्यतोपपत्तिः, घटघटत्वसंसर्गेषु संकेतविषयतानां मिथोवैलक्षण्येऽपि तन्निरूपकबोधविषयतात्वनिष्ठविषयताया ऐक्याच्छक्त्यैक्यप्रवादो न तु संकेतैक्यात् श,-

क्तशक्यताऽवच्छेदकभेदेनापि शक्तिभेदानुपपत्तेः, भगवत्सङ्केतस्याभेदात, तदंश आश्रयत्वसम्बन्धावच्छिन्नबोधविषयत्वप्रकारतानिरूपितसङ्केतविषयताऽवगाहिज्ञानस्यैव पदार्थान्तरान्वयबोधोपयोगित्वमिति शक्तिभ्रमं-विना पदार्थताऽवच्छेदके न पदार्थान्तरान्वयः ।

---

मञ्जूषा ।

तल्लाभार्थं प्रथमविशेषणमित्याह—बोधविशेषइति पदजन्यतारूपविशेषणवैशिष्ट्यसूचकम् ।वस्तुमात्र इति लक्ष्याणां वाच्यत्वापत्तिसूचकम्। समवायेनेति। घटो घटपदजन्यबोधविषयतावान् भवत्वित्याकारकसङ्केते घटत्वावच्छिन्ने प्रकारीभवति घटपदजन्यशाब्दबोधविषयत्वे धर्मिपारतन्त्र्येण घटत्वस्यापि समवायसम्बन्धावच्छिन्नावच्छेदकतानिरूपकत्वावच्छिन्नत्वसम्बन्धेन भानमङ्गीकार्यमित्यर्थः। घटत्वं घटपदाद्बोद्धव्यमितीच्छायां घटत्वादावच्छेदकतासम्बन्धेन बोद्धव्यत्वभाने घटत्ववविशिष्टस्य शक्यत्वापत्तिरतो घटविशेषणताऽऽपन्नेति। सङ्केतस्य विशेष्यताद्वयशालित्वभयेनाह—घटेति।एवं च घटत्वादेः शाब्दबोधप्रकारतायाः शाब्दबोधविषयताऽवच्छेदकत्वेन सङ्केतविषयत्वज्ञानं प्रयोजकं, तृतीयाऽर्थविषयत्वस्य सङ्केतविषयत्वज्ञानमित्यत्र विषयत्वेऽन्वयाद् घटादिपदजन्यशाब्दबोधविषयत्वनिष्ठप्रकारतानिरूपितावच्छेदकत्वनिष्ठसांसर्गिकविषयतानिरूपिता या सङ्केतीयधर्मिताऽवच्छेदकीभूतघटत्वादिनिष्ठविशेष्यता तज्ज्ञानमिति यावद्, यद्वा घटत्वनिष्ठप्रकारतानिरूपितावच्छेदकत्वनिष्ठसांसर्गिकविषयतानिरूपितनिरूपकत्वनिष्ठसांसर्गिकविषयतानिरूपितविशेष्यत्वावच्छिन्नघटादिपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितसङ्केतीयविशेष्यतावान् घट इति ज्ञानं, तत्र च घटत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ननिष्ठत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रकारत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ननिरूपितत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छेदकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वेनदुभयावच्छिन्नसांसर्गिकविषयतानिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ननिरूपितत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वनिरूपकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ननिष्ठत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वैतदुभयाव-

च्छिन्नसांसर्गिकविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ननिरूपि-
तनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नविशेष्यत्वनिष्ठप्रकारतानिरू-
पितविशेष्यत्वावच्छिन्ननिष्ठत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ना-
वच्छेदकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ननिरूपकत्वनिष्ठप्रका-
रतानिरूपितविशेष्यत्व-घटपदनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-
निष्ठत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रकारत्वनिष्ठप्रकारतानि-
रूपितविशेष्यत्वावच्छिन्ननिरूपितत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाव-
च्छिन्नविशेष्यत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ननिष्ठत्वनिष्ठप्र-
कारतानिरूपितविशेष्यत्वावच्छिन्नावच्छेदकत्वनिष्ठप्रकारतानिरूपितवि-
शेष्यत्वावच्छिन्ननिरूपकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वजन्यत्वनिष्ठप्र-
कारतानिरूपितविशेष्यत्वावच्छिन्ननिष्ठत्वनिष्ठप्रकारतानिरूपितविशेष्य-
त्वैतदुभयावच्छिन्नप्रकारत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ननिरू-
पितत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नविशेष्यत्वनिष्ठप्रकारता-
निरूपितविशेष्यत्वावच्छिन्नावच्छेदकत्वनिष्ठप्रकारतानिरूपितविशेष्य-
त्वावच्छिन्ननिरूपकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रकारत्व-
निष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ननिरूपितत्वनिष्ठप्रकारतानिरूपि
पितविशेष्यत्वावच्छिन्नविशेष्यत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छि-
न्नावच्छेदकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ननिरूपकत्वनिष्ठप्र-
कारतानिरूपितविशेष्यत्वावच्छिन्ननिरूपकत्वनिष्ठप्रकारतानिरूपितविशे-
ष्यत्वावच्छिन्नबोधनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ननिष्ठत्वनिष्ठ-
प्रकारतानिरूपितविशेष्यत्वैतदुभयावच्छिन्नप्रकारत्वनिष्ठप्रकारतानिरूपि-
तविशेष्यत्वावच्छिन्नविशेष्यत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छि-
न्ननिष्ठत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नावच्छेदकत्वनिष्ठप्रका-
रतानिरूपितविशेष्यत्वावच्छिन्ननिरूपकत्वनिष्ठप्रकारतानिरूपितविशे-
ष्यत्व-विषयत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ननिष्ठत्वनिष्ठप्रकार-
तानिरूपितविशेष्यत्वैतत्त्रितयावच्छिन्नप्रकारत्वनिष्ठप्रकारतानिरूपित-
विशेष्यत्वावच्छिन्नसंकेतीयविशेष्यत्वनिष्ठप्रकारतानिरूपितघटत्वावच्छि-
न्नविशेष्यताशालित्वं तत्प्रयोजकमित्यभिप्रेत्यैव विषयताप्रयोजकसंबन्ध-
एवेति प्रतिज्ञायोपसंहरति—त्रितयमेव घटपदजन्यबोधविषयतायामुपयु-
ज्यत इति । विषयतानामिति पूरणीयम् । ऐक्यादिति । नन्वाश्रयतासंबन्धाव-
च्छिन्नाया बोधविषयत्वविषयताया अवच्छेदकत्वसंबन्धावच्छिन्नया तया-
कथमैक्यं; न चेच्छीयत्वात्तदुभयैक्यं यथा हि ज्ञानस्थल आश्रयत्वाव-
च्छेदकत्वादिसंबन्धावच्छिन्नविषयतानां भेद एव; अन्यथा घटत्वं घटपद-

जन्यबोधविषयतावदित्यादिज्ञानं प्रत्याश्रयतासंबन्धावच्छिन्नतादृश-विषयताशून्यत्वज्ञानस्य प्रतिबन्धकत्वापत्तेः; तथेहापि तद्भेद एव; अन्यथा घटत्वादेः पदार्थत्वस्य घटादेस्तदवच्छेदकत्वस्य प्रसङ्गात्, सत्यम्; आश्रय-तासंबन्धावच्छिन्नविषयताया एव शक्त्यैक्यव्यवहारनियामकत्वं नान्य-स्या इत्यर्थाद्, यद्वा संकेतीययोराश्रयताऽवच्छेदकत्वसंबन्धावच्छिन्नवि-षयतयोरैक्येऽपि न क्षतिः, विषयताया आश्रयतासंबन्धावच्छिन्नविषय-तात्वेन पदार्थत्वस्यावच्छेदकतासंबन्धावच्छिन्नविषयतात्वेन च तदव-च्छेदकत्वस्य व्यवहारनियामकत्वात् । वस्तुतस्तु द्वितीयकल्पाभिप्रायेणै-कविशेष्यतानिरूपितप्रकारताया अपरविशेष्यतानिरूपिताविशेष्यतैक्य-मतेनेदम्। वस्तुतस्तु घटत्वादिविषयतानिरूपकविशेष्यत्वावच्छिन्नघटा-दिविशेष्यतानिरूपितप्रकारताया ऐक्यादैक्यव्यपदेशो बोद्धव्यः।शक्तिभे-दानुपपत्तेः घटपदादेर्घटत्वादेश्च सर्वस्यैकशक्त्यापत्तेः । नन्वेवं पशुरपशु-रित्यादौ पदार्थैकदेशे पदार्थान्तरान्वयप्रसङ्गः तदंशे बोधविषयत्वप्रका-रतानिरूपितसंकेतविषयताऽवगाहिज्ञानसंभवादित्याशङ्क्य; तत्र तदनन्व-यनियामकमाह–तदंश इति। पशुरपशुरित्यादौ शक्तिभ्रमेऽप्यपदार्थताऽव-च्छेदकलोमादौ पशुभेदान्वयस्येष्टत्वादाह--शक्तिभ्रमेति । लक्षणाग्र-होपलक्षणमिदम् ।

माधवी ।

तदंश आश्रयत्वसम्बन्धेनेति । आश्रयत्वसम्बन्ध =स्वरूपसम्बन्धः। न पदार्थताऽवच्छेदके पदार्थान्तरान्वय इति । घटो नित्यः पशुर्न पशु-रित्यादौ घटत्वे नित्यत्वस्य लोमादौ पशुभेदस्याबाधितत्वेऽपि नान्वय-बोध इत्यर्थः । अथ पदार्थोपस्थितियोग्यताज्ञानादिसत्त्वेन कथं न पदा-र्थान्तरान्वयबोधः, कार्यकारणभावं विना कथामात्रेण वारयितुमशक्य-त्वाद्, अन्यथा तत्पूर्ववर्त्युदासीनघटज्ञानादेरपि प्रयोजकत्वापत्तिः ।

अत्र केचिद्—आश्रयत्वसम्बन्धावच्छिन्नयत्किञ्चित्पदजन्यशाब्द-बोधविषयत्वप्रकारतानिरूपितविशेष्यताऽऽश्रयनिष्ठप्रकारतानिरूपितवि-शेष्यता सम्बन्धस्तेन शाब्दत्वावच्छिन्नं प्रत्याश्रयत्वसम्बन्धावच्छिन्न-यत्किञ्चित्पदजन्यशाब्दबोधविषयत्वप्रकारतानिरूपिताविशेष्यताग्रह-स्य विशेष्यतासम्बन्धेन हेतुत्वोपगमाद् न घटत्वलोमादौ पदार्थान्तर-नित्यत्वपशुभेदान्वयः, एतादृशकार्यकारणभावग्राहकमेव तादृशं वा-क्यम् । न च गङ्गापदलक्ष्यतीरादौ पदार्थान्तरान्वयानुपपत्तिः तत्राश्रय-त्वसम्बन्धावच्छिन्नयत्किञ्चित्पदजन्यबोधविषयत्वप्रकारतानिरूपितवि-

शेष्यताग्रहस्य विशेष्यतासम्बन्धेनासत्त्वादिति वाच्यम्। ज्ञाने तत्पुरुषीयत्वानिवेशादन्ततो भगवतस्तीरादिपदजन्यबोधविषयत्वप्रकारतानिरूपतविशेष्यताग्रहस्य विषयतासम्बन्धेन तत्र सत्त्वादित्याहुः, तन्न, ज्ञाने तत्पुरुषीयत्वानिवेशे पशुर्न पशुरित्यादौ पदार्थताऽवच्छेदकलोमादौ पशुभेदान्वयापत्तेर्दुर्वारत्वात् तत्राप्यन्ततो भगवतो लोमादिपदजन्यबोधविषयत्वप्रकारतानिरूपिविशेष्यताग्रहस्य विशेष्यतासम्बन्धेन सत्त्वात्। परे तु तद्विशेष्यककिञ्चित्पदार्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति तदवच्छिन्नविशेष्यताकाश्रयत्वसम्बन्धावच्छिन्नपदजन्यशाब्दबोधविषयत्वप्रकारतानिरूपितविशेष्यताग्रहत्वेन सामानाधिकरण्यप्रत्यासत्त्या प्रतिबन्धकत्वकल्पनाद् न पदार्थताऽवच्छेदकघटत्वलोमादौ पदार्थान्तरान्वयः। न च लक्ष्यताऽवच्छेदकेऽपि पदार्थान्तरान्वयस्याव्युत्पन्नतया घटादियत्किञ्चित्पदलक्ष्यताऽवच्छेदकलोमादौ पदार्थान्तरान्वयापत्तिः तत्र लोमाद्यवच्छिन्नविशेष्यताकताद्दशविषयत्वप्रकारतानिरूपितविशेष्यताग्रहस्याभावादिति वाच्यम्। तद्विशेष्यकपदार्थान्तरप्रकारकान्वयबोधं प्रति तदवच्छिन्नविशेष्यकलक्षणाग्रहत्वेनापि प्रतिबन्धकत्वकल्पनात्। न च पशुपदजन्यस्य लोम्नि लाक्षणिकघटादिपदजन्यस्य लोमादिमानेकत्ववांल्लोमैकत्ववदिति समूहालम्बनेन शाब्दबोधे लोमादिमति लाक्षणिकघटादिपदजन्यस्य वा लोमलाक्षणिकपदजन्यस्य लाक्षणिकलोमपदजन्यस्य वा ताद्दशसमूहालम्बनेन बोधे लोम्न्येकत्वभानानुपपत्तिरिति वाच्यम्। तद्विशेष्यकपदार्थान्तरप्रकारकशाब्दबोधे तद्धर्मिकशक्तिग्रहाभावविशिष्टस्य तद्धर्मिकलक्षणाग्रहाभावविशिष्टस्य तदवच्छिन्नविशेष्यकताद्दशप्रकारतानिरूपितविशेष्यताग्रहस्य ताद्दशताद्दशग्रहाभावविशिष्टस्य तदवच्छिन्नविशेष्यकलक्षणाग्रहस्य च प्रतिबन्धकत्वकल्पनात्। न च यत्र लोमत्वेन लोमावच्छिन्नविशेष्यकताद्दशविशेष्यताग्रहः शाब्दबोधे च लोमत्वेनैव घटादिभानं तत्र लोमत्वे न घटपदार्थान्वयप्रसङ्गः तत्र घटत्वावच्छिन्नविशेष्यकताद्दशविशेष्यताग्रहाभावादिति वाच्यम्। यत्र यत्किञ्चित्तदवच्छिन्ना शक्यतावच्छेदकता तत्र शक्यतावच्छेदकता याद्दशधर्मावच्छिन्ना तदवच्छिन्नविशेष्यताकताद्दशग्रहं प्रति तदवच्छिन्नावच्छेदकताकताद्दशग्रहस्य प्रतिबन्धकत्वात्। तत्र स्वरूपतो घटत्वादेर्घटादिपदशक्यताऽवच्छेदकता तदनुरोधेन तद्विशेष्यकताद्दशशाब्दबोधं प्रति स्वरूपतस्तदवच्छिन्नविशेष्यताकताद्दशग्रहस्य प्रतिबन्धकत्वकल्पनम्। एवं पदार्थताऽवच्छेदकताऽवच्छेदके लोमादावितरान्वयबोधवारणाय तद्विशेष्यकशाब्दबोधे तदव-

च्छिन्नावच्छेदकताकविशेष्यताकताद्दशग्रहत्वेन प्रतिबन्धकत्वं कल्पनीयम् । एवमन्यत्राप्यूहनीयम् । न चैतावता लोमाविशेष्यकेतरान्वयबोधवारणेऽपि पशुभेदादौ सामान्यसामग्रीत आश्रयतासम्बन्धेन लोमादिप्रकारकान्वयबोधापत्तिर्दुर्वारा; भेदविशेष्यकेतरान्वयबोधे तदवच्छिन्नविशेष्यकताद्दशग्रहरूपप्रतिबन्धकाभावादिति वाच्यम् । इतरविशेषणतयोपस्थितस्यान्यत्र विशेषणतयाऽनन्वयित्वरूपनियमान्तरेण तस्य वारणीयत्वादिति प्राहुः ।

वस्तुतस्तु पदार्थताऽवच्छेदकलोमादिधर्मिकेतरान्वयबोधस्याप्रसिद्ध्या सामान्यसामग्र्या एव कार्य्योत्पत्तिव्याप्यत्वाद् यत्र पशुपदस्य लोम्नि लक्षणा शक्तिभ्रमो वा तत्र पशुर्न पशुरित्यतो लोम्नि पशुभेदान्वयप्रसिद्धिरिति चेत्; तत्स्थलीयसामग्र्या लोम्नि शक्तिभ्रमलक्षणाग्रहघटिततया तत्स्थलीयसामग्र्या लोमावच्छिन्नवाचकपशुपदघटितताद्दशवाक्यस्थलेऽभावाद् न ताद्दशबोधोपपत्तिरिति, यत्र पशुर्न पशुरितिवाक्यघटकैकपशुपदस्य लोम्नि शक्तिभ्रमो लक्षणाग्रहो वा परपशुपदस्य लोमावच्छिन्नवाचकता तत्र लोम पशुभिन्नमितिवत् पशुभिन्नं यल्लोम तद्वानिति बोधापत्तिः ताद्दशसामग्र्यास्तत्रापि सत्त्वादिति चेत्; ताद्दशबोधस्याप्रसिद्धेरनापत्तिः, पशुभिन्नलोमादिवाचकतदादिपदघटिततद्वानितिवाक्यतस्तत्प्रसिद्धिरिति चेत् तत्स्थलीयसामग्र्या विलक्षणानुपूर्वीप्रकारकज्ञानाघटिततया ताद्दशसामग्र्यास्तत्रासत्त्वाद् न काऽप्यनुपपत्तिः । एवञ्च पशु सुन्दरमित्यादौ क्वचित्; सौन्दर्य्यादिपदार्थताऽवच्छेदकेतरान्वयबोधसंभवेऽपि न क्षतिः ताद्दशबोधस्य पारमार्थिकतया तत्र ताद्दशानुपूर्वीविशेषप्रकारकज्ञानघटितसामग्र्याः प्रयोजकत्वादिति सुधीभिर्ज्ञेयम् ।

विनोदिनी ।

प्रयोजकसम्बन्ध इति । अयं भावः—भगवदिच्छया तत्तत्पदजन्यबोधनिरूपितयाद्दशविषयता यत्रावगाह्यते; शाब्दबोधेऽपि तत्र ताद्दशविषयता प्रयुज्यते, तथा च घटपदाद् घटो बोद्धव्य इत्यत्र घटपदजन्यबोधविषयता; आश्रयत्वसम्बन्धावच्छिन्नबोधविषयत्वप्रकारतानिरूपितेच्छीयविशेष्यतया घटे; अवच्छेदकत्वसम्बन्धावच्छिन्नबोधविषयत्वप्रकारतानिरूपितेच्छीयविशेष्यतया घटत्वे यत्राऽवच्छेद्यत्वसम्बन्धावच्छिन्नघटत्वप्रकारतानिरूपितेच्छीयविशेष्यताऽऽत्मना; अवच्छेदकताऽवच्छेदकत्वसम्बन्धावच्छिन्नबोधविषयत्वप्रकारतानिरूपितेच्छीयविशेष्यतया घटत्वादिसंसर्गे यत्राऽवच्छेदकत्वनिरूपितावच्छेद्यत्वसम्बन्धाव-

च्छिन्नसमवायप्रकारतानिरूपितेच्छीयविशेष्यताऽऽत्मना भासते, एवं-
च घटो घटपदजन्यबोधविषयो भवतु, घटत्वं घटपदजन्यबोधविष-
यताऽवच्छेदकं भवतु यद्वोक्तविषयता घटत्वावच्छिन्ना भवतु समवायो-
घटपदजन्यबोधविषयताऽवच्छेदकताऽवच्छेदको भवतु यद्वा घटत्ववि-
षयता समवायसंबन्धावच्छिन्ना भवतु क्रमेणैत आकारा बोध्याः।

---

यत्तु तदंशे संकेतमुख्यविशेष्यताग्रहस्तत्रेतरान्वय-
बोधप्रयोजकः लोमादिमान्पशुपदाद्बोद्धव्य इत्याकारकसं-
केते लोमाद्यंशे बोधविषयतायाः प्रकारत्वेऽपि लोमादेर्धर्मि-
विशेषणताऽऽपन्नस्यैव तादृशविषयताविशेष्यत्वं न तु मु-
ख्यविशेष्यत्वम्, अतः शक्तिभ्रमं विना न लोमादौ पदा-
र्थान्तरान्वय इति तादृशविषयत्वप्रकारतायामाश्रयत्वसं-
म्बन्धावच्छिन्नत्वानिवेशनमनर्थकमिति ।

तन्न, लोम पशुपदजन्यबोधविषयताऽवच्छेदकं भव-
त्वित्यादिसंकेतविषयकादवच्छेदकतासंसर्गकबोधविषय-
त्वप्रकारकसंकेतमुख्यविशेष्यं लोमेति ज्ञानाल्लोमादि-
मुख्यविशेष्यकशाब्दबोधानुदयेनाश्रयतासम्बन्धावच्छि-
न्नत्वेन तादृशशाब्दबोधविषयत्वप्रकारताऽवगाहिताया-
अवश्यं निवेशनीयत्वात्, तत्र च लोमावच्छिन्नविशेष्यक-
शाब्दबोधस्यैव संकेतविषयतया ग्रहेणान्यादृशबोधोत्प-
त्तेरनुभवविरुद्धतयेष्टापत्तेरयोगाद्, एवं च पदार्थः पदार्थे-
नान्वेति न तु पदार्थैकदेशेनेत्यत्र पदार्थत्वं बोधविषय-
ताऽऽश्रयत्वेन संकेतविषयत्वं, तदेकदेशत्वं च बोधविषय-

ताऽवच्छेदकत्वेन तथात्वरूपं तदेव च शक्यताऽवच्छेदकत्वमित्यवधेयम् ।

---

मञ्जूषा ।

आश्रयतासम्बन्धावच्छिन्नवैयर्थ्यं वदतां मतमाह–यत्विति । लोमादीति । घटो नित्य इति तु नोक्तघटत्वादेरन्वयिताऽवच्छेदकरूपेणानुपस्थितेस्तत्र पदार्थान्तरान्वयाप्रसक्तेः । प्रकारत्वेऽपीति । अवच्छेदकतासम्बन्धेनेत्यादिः । संकेतेति । यदि लोम पशुपदजन्यबोधविषयो भवत्वित्यवच्छेदकतासंसर्गकः संकेतस्तदोक्तज्ञानं प्रमा, अन्यथा भ्रमः, अन्यादृशो लोमादिमुख्यविशेष्यकः । बोधेति । आश्रयतासम्बन्धावच्छिन्नबोधविषयत्वानिष्ठप्रकारतानिरूपितविशेष्यत्वमित्यर्थः, न तु बोधत्वे संकेतमुख्यविशेष्यत्वं, पदार्थताऽवच्छेदकस्य पदार्थत्वापत्तेः । बोधेति । अवच्छेदकतासम्बन्धावच्छिन्नबोधविषयत्वप्रकारतानिरूपितविशेष्यत्वमित्यर्थः । अवच्छेदकतासम्बन्धाप्रवेशे पदार्थे पदार्थताऽवच्छेदकत्वापत्तिर्न तु बोधाविषयत्वेन संकेतमुख्यविशेष्यान्वयित्वे सति बोधविषयत्वेन संकेतविषयत्वं, पदार्थताऽवच्छेदके सत्यन्तार्थाभावात् ।

माधवी ।

प्रकारत्वेऽपीति । अवच्छेदकत्वसम्बन्धेनेत्यादिः । न तु मुख्यविशेष्यत्वमिति । प्रकारताऽनवच्छिन्नविशेष्यताया एव मुख्यविशेष्यतात्वादिति भावः । तन्नेति । अथ लोम पशुपदजन्यबोधविषयताऽवच्छेदकं भवत्वेतादृशाधुनिकसंकेतज्ञानस्य लोमादिमानित्याकारकशाब्दबोधहेतुत्वं दुर्घटं लोमादिमदंशे तादृशसंकेतविषयताया असत्त्वात्, लोमादिमदंशे शाब्दबोधविषताप्रयोजकस्य तदंशे संकेतविषयताकज्ञानस्यासत्त्वाद्, एवं तादृशाधुनिकसंकेतज्ञानस्य तादृशशाब्दबोधहेतुत्वे लोमादिमति भवन्मतसिद्धेतरान्वयप्रयोजकस्य तदंश आश्रयत्वसम्बन्धावच्छिन्नबोधविषयत्वप्रकारतानिरूपितसंकेतविषयताशालिज्ञानस्यासत्त्वाद्; एवं तादृशसंकेतविषयताज्ञानाद् भवन्मते तन्नेतरान्वयबोधानुपपत्तिरेवं लोमत्वावच्छिन्नधर्मिकतादृशसंकेतविषयताज्ञानाल् लोमादिमतोऽनुपस्थित्या कथं वा तादृशसंकेतज्ञानाल् लोमादिमतः शाब्दबोधः? हस्ती हस्तिपकसम्बन्धीत्याकारकज्ञानाद्धस्तिमतोऽस्मृतेरिव तादृशसंकेतविषयताऽऽत्मकसम्बन्धज्ञानाल् लोमादिमतः स्मृतेरनुभवविरुद्धत्वादिति तादृशसंकेतज्ञानस्य

तादृशशाब्दबोधहेतुत्वं भवताऽपि न स्वीकार्यमित्येतन्मतेऽपि न तद्दोष इति महदसमञ्जसम्। मैवं, लोमादिमन्निष्ठा या पशुपदजन्यशाब्दबोधविषयता तदवच्छेदकं भवत्वित्याकारकाधुनिकसंकेतस्वीकाराद् न प्रथमदोषः, आश्रयत्वसम्बन्धावच्छिन्नबोधविषयत्वप्रकारतानिरूपितसंकेतविषयताज्ञानस्येतरान्वयबोधप्रयोजकत्वमिति यदुक्तं तत्राश्रयत्वं न स्वरूपसम्बन्धः किन्त्वाधेयतानिरूपितस्वरूपसम्बन्धावच्छिन्नाधिकरणत्वं; सर्वत्र तादृशाऽधिकरणत्वस्यैव संसर्गतया भानोपगमात्, तथा च बोधविषयत्वविषयतानिरूपितस्वरूपसम्बन्धावच्छिन्नाधेयत्वविषयतानिरूपितसंकेतविषयताग्रह एवेतरान्वयबोधप्रयोजकः, एवञ्च लोम लोमादिमन्निष्ठपशुपदजन्यबोधविषयताऽवच्छेदकं भवत्वित्याकारकसंकेते बोधविषयत्वे स्वरूपसम्बन्धावच्छिन्नाधारतानिरूपिताधेयतासंसर्गेण लोमादिमतो भानेन न द्वितीयदोषस्यावकाशः, अन्यथा घटपदं घटविषयकबोधजनकं भवत्वित्याकारकसंकेतज्ञानस्यापि भट्टाचार्यमते हेतुतया तादृशसंकेतग्रहस्थले तादृशानुपपत्तिरशक्यसमाधिरेवेति तत्रापि तादृशरीत्यैवानुपपत्तिः परिहरणीया, एवं लोमादिमानाधेयतासम्बन्धेन लोमविशिष्टमुख्यविशेष्यतानिरूपितावच्छेदकत्वसम्बन्धावच्छिन्नपशुपदजन्यबोधविषयत्वप्रकारत्वावच्छिन्ना याऽधिकरणत्वसम्बन्धावच्छिन्नप्रकारता तन्निरूपितविशेष्यतावानित्याकारकसंकेतविषयताग्रहोपगमेन न तादृशज्ञानजन्यलोमादिमद्विशेष्यकपदार्थोपस्थितेरनुपपत्तिरिति न तृतीयदोषः पदमादधातीति सुधीभिर्ध्येयम्। इदं त्ववधातव्यम्। भट्टाचार्याननुयायिभिः प्राचीनैरेव सर्वत्राधिकरणत्वस्य संसर्गतायाः स्वीकरणीयतया तदनुयायिभिर्नव्यैः सर्वत्राधिकरणतायाः संसर्गत्वस्यास्वीकरणीयतया; आश्रयत्वस्य स्वरूपसंसर्गपरतया तादृशसंकेतग्रहस्य शाब्दबोधहेतुत्वेन भट्टाचार्यमते तत्रेतरान्वयबोधप्रयोजको घट एवेत्यकामेनापि भट्टाचार्यानुयायिना तादृशसंकेतग्रहस्य शाब्दबोधहेतुत्वमुपगन्तव्यमिति संकेतमुख्यविशेष्यताग्रहस्येतरान्वयबोधप्रयोजकत्वमतेऽपि न दोषः, परन्तु घटपदं घटविषयकबोधजनकं भवत्वित्याकारकसंकेतग्रहस्य शाब्दहेतुतायाः सर्वानुभवसिद्धतया तादृशसंकेतमुख्यविशेष्यतायाः पद एव सत्त्वेन तत्रेतरान्वयबोधप्रयोजको दुर्लभः। न च स्वमतेऽपि तत्रेतरान्वयबोधप्रयोजको दुर्लभ इति वाच्यम्। स्वरूपसम्बन्धावच्छिन्नतादृशविषयतानिरूपितविषयताग्रहतादृशविषयतानिरूपिताधेयतासम्बन्धावच्छिन्नविषयताग्रहयोरन्यतरस्येतरान्वयबोधप्रयोजकत्वोपगमात्। एवञ्च लोमादिमन्निष्ठपशुपदजन्यबोधविषयताऽ-

वच्छेदकं भवत्वित्याकारकसंकेतग्रहस्य शाब्दबोधप्रयोजकत्वोपगमेऽपि भट्टाचार्यमतेऽपि न दोष इति चेद्; एवमप्येतन्मतेऽपि तादृशमुख्यविशेष्यताग्रहतादृशग्रहयोरन्यतरस्य प्रयोजकत्वोपगमे को दोष इति ।

विनोदिनी ।

पदार्थान्तरीयप्रकारतानिरूपितविशेष्यतया शाब्दं प्रति सङ्केतीयमुख्यविशेष्यतया शक्तिज्ञानस्य हेतुतयैव घटत्वादौ नित्यत्वबोधस्य घटो नित्य इत्यादितो वारणे, किमित्याश्रयतासम्बन्धावच्छिन्नत्वं तादृशप्रकारतायां विवक्षणीयमिति मत्वाऽऽह—यत्त्विति । तथा च लोमादौ प्रकारत्वानवच्छिन्नविशेष्यतावैधुर्य्यात् कारणताऽवच्छेदकसम्बन्धेन कारणासत्त्वान्न कार्य्यापत्तिरिति भावः । तन्नेति । लोम पशुपदजन्यबोधविषयताऽवच्छेदकं भवत्विति सङ्केतग्रहे मुख्यविशेष्यत्वस्य लोम्नि सत्त्वेऽपि पशुपदाल्लोमविशेष्यकबोधस्यानुभवविरुद्धतया शाब्दबोधीयप्रकारतायामवश्यमाश्रयत्वसंसर्गावच्छिन्नत्वं विवक्षणीयमित्यर्थः ।

---

अथ घटत्वाद्युपलक्षिते द्रव्यपदशक्त्यवगाहिप्रमातो घटत्वादिप्रकारकस्य; घटादिपदशक्तिप्रमातः कालिकादिसम्बन्धेन घटत्वादिप्रकारकस्य च शाब्दबोधस्य वारणाय तत्सम्बन्धेन तद्धर्मप्रकारकशाब्दबोधं प्रति तेन सम्बन्धेन तद्धर्मविशिष्टांशे तत्पदवाच्यत्वावगाहि ज्ञानं कारणं वाच्यम् । विशिष्टांशे तत्पदवाच्यताऽवगाहित्वं च विशेषणीभूततद्धर्मतत्सम्बन्धतद्धर्म्यंशे तदवगाहित्वं वाच्यं न तु तेन सम्बन्धेन तद्धर्मं धर्मिताऽवच्छेदकीकृत्य तदवगाहित्वं घटत्वादिकं धर्मिताऽवच्छेदकीकृत्य द्रव्यादिपदशक्तिज्ञानस्यापि, कालिकादिसम्बन्धेन घटत्वादिकं-

धर्मिताऽवच्छेदकीकृत्य घटादौ घटपदशक्तिग्रहस्यापि च प्रमात्वेनोक्तातिप्रसङ्गावारणात् ।

एवमपि घटत्वांशे निर्धर्मिताऽवच्छेदककात्प्रमेयत्वादिधर्मिताऽवच्छेदककाच्च घटादिपदनिरूपितवाच्यताग्रहात् तत्प्रकारकबोधवारणाय स्वरूपतो घटत्वादिप्रकारकबोधे घटत्वाद्यवच्छिन्नधर्मिकवाच्यत्वग्रहापेक्षोपेया, तथा च घटत्वत्वाद्यनुपस्थितिदशायां शाब्दबोधानुपपत्तिः ।

न च घटपदांशे घटादिवाचकत्वज्ञानमेव शाब्दबोधहेतुः, एवं च स्वरूपतो घटत्वादिप्रकारकबोधे वाचकतांशे स्वरूपतो घटत्वादिप्रकारकज्ञानस्यैव हेतुत्वमिति घटादिपदजन्यबोधे घटत्वत्वाद्युपस्थितेर्नापेक्षेति वाच्यम् । एवमपि घटादिपदांशे समवायवाचकताप्रकारकज्ञानस्य शाब्दबोधे घटत्वादिसम्बन्धतया स्वरूपतः समवायभानप्रयोजकताया वाच्यतया समवायवाचकताज्ञाने च वाचकतांशे स्वरूपतः समवायस्य प्रकारत्वासम्भवेन नित्यसम्बन्धत्वरूपसमवायत्वेनैव समवायावगाहिताया उक्तसमवायभानप्रयोजकत्वस्योपेयतया तदनुपस्थितिदशायां घटादिपदाच्छाब्दबोधानुपपत्तिरिति चेद्,

मञ्जूषा ।

द्रव्यादिपदवाच्यताऽनवच्छेदकस्यापि घटत्वादेस्तदवच्छेदकत्वभ्रमाच्छाब्दबोध इष्टापत्तेराह्–उपलक्षित इति। तद्धर्मेति। स्वरूपतो घटत्वप्रकारकतत्संसर्गकघटशाब्दबोधे घटांशे तत्पदजन्यशाब्दबोधविषयत्वप्रकारतानिरूपिताश्रयतावृत्तिसंसर्गतानिरूपितविशेष्यत्वस्य; घटत्वांशे तादृशप्रकारतानिरूपितावच्छेदकत्वसंसर्गतानिरूपितविशेष्यत्वस्य; संसर्गांशे तथाविधावच्छेदकतावऽच्छेदकत्वसंसर्गतानिरूपितविशेष्यत्वस्य चावगाहि ज्ञानं कारणं यद्वा घटत्वांशे तत्पदजन्यबोधविषयत्वप्रकारतानिरूपितावच्छिन्नत्वसंसर्गावच्छिन्नप्रकारत्वस्य; संसर्गांशे तन्निरूपितावच्छिन्नत्वसंसर्गावच्छिन्नप्रकारताऽवच्छेदकत्वस्य चावगाहि ज्ञानं कारणं,न चैतादृशावगाहित्वत्रयस्य कारणताऽवच्छेदकत्वे विशेष्यविशेषणभावे विनिगमनाविरहेऽवच्छेदकताया व्यासज्यवृत्तित्वं चान्यत्र दूषितमिति वाच्यं कार्यकारणभावस्य दण्डचक्रन्यायेन परस्परसहकारित्वस्य चोपगमात्। एतेन घटत्वनिष्ठावच्छेदकतायां स्वसामानाधिकरण्यस्वनिरूपकज्ञानविशिष्टज्ञानीयत्वोभयसम्बन्धेन घटत्वत्वावच्छिन्नविषयतावैशिष्ट्यं निवेश्यमिति परास्तं, कारणताऽवच्छेदकं गौरवात्। एवमपि घटत्वादित्रितयांशे पदवाच्यत्वावगाहिज्ञानस्य हेतुत्वेऽपि न तु किंचिद्धर्मं धर्मिताऽवच्छेदकीकृत्यैतादृशज्ञानं वाच्यमित्यत आह्–प्रमेयत्वादीति। वाच्यताऽनवच्छेदकस्यापि धर्मिताऽवच्छेदकत्वं निष्प्रत्यूहं, संसर्गांशे निर्धर्मिताऽवच्छेदककात्सधर्मिताऽवच्छेदकका‌द्वा वाच्यत्वज्ञानात्स्वरूपतः संसर्गभानात्तत्यागः। घटत्वत्वावच्छिन्नधर्मिकेति। यत्तु घटत्वत्वेतरधर्मानवच्छिन्नविशेष्यताकेत्यर्थ इति,तन्न निर्धर्मिताऽवच्छेदककवाच्यत्वज्ञानस्यावाच्यत्वज्ञानाप्रतिबध्यस्य हेतुत्वापत्तेः, न च स्वरूपतो घटत्वशाब्दबोधे जातित्वादिनेव घटत्वत्वेन घटत्वविशेष्यकज्ञानत्वेन न कारणत्वं युक्तमिति वाच्यं धर्मिताऽवच्छेदककोटौ स्वरूपतो घटभानस्यैव शाब्दबोधे तथा तज्ज्ञानप्रयोजकत्वात्,एतेन शाब्दबोधे घटत्वादे स्वरूपतो भानानुरोधेन स्वरूपतो घटत्वावच्छिन्नधर्मिकस्यैव वाच्यत्वज्ञानस्य हेतुता न तु घटत्वत्वविशिष्टधर्मिकस्येत्यपास्तं, घटभानप्रयोजकस्यास्य घटत्वभानानुपयोगित्वात् स्वरूपतः शक्तिविषयताया एव स्वरूपतस्तद्भासकत्वाच्च। वाचकत्वांश इति। तत्संसर्गावच्छिन्नतद्धर्मावच्छिन्नविषयताकबोधजनकत्वप्रकारतानिरूपितसंकेतीयविषयताऽऽश्रयत्वं तेन सम्बन्धेन घटत्वादिविशिष्टवाचकत्वं तन्नावच्छिन्नत्वांशे स्वरूपत एव घटत्वादिभानं, यद्वा घटनिष्ठविशेष्यता·

निरूपिताश्रयत्वनिष्ठसंसर्गतानिरूपितबोधविषयत्वनिष्ठप्रकारतया परम्परया निरूपितत्वं तत्, तत्र प्रकारतायां स्वनिष्ठप्रकारतानिरूपितावच्छिन्नत्वसंसर्गतानिरूपितत्वसम्बन्धेन घटपारतन्त्र्येण घटत्वविशिष्टत्वं स्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठसंसर्गतानिरूपितजन्यतासम्बन्धावच्छिन्नप्रकारताऽऽश्रयत्वम्, अथ वा घटनिष्ठविशेष्यतानिरूपिताश्रयतासम्बन्धावच्छिन्नबोधविषयत्वप्रकारतायाघटत्वनिष्ठविशेष्यतानिरूपितावच्छेदकत्वसम्बन्धावच्छिन्नबोधविषयत्वाप्रकारतयासमवायनिष्ठविशेष्यतानिरूपितावच्छेदकताऽवच्छेदकत्वसम्बन्धावच्छिन्नबोधविषयत्वप्रकारतया वा परम्परया निरूपितत्वं क्रमेण घटादिवाचकत्वं, तत्र विशेष्यतांशे स्वरूपतो घटत्वभानम्। स्वरूपत इति। जात्यतिरिक्तत्वादित्यादिः। उक्तसमवायभानेति। शाब्दबोधे स्वरूपतः समवायभानेत्यर्थः।

केचित्तु वाचकतासंसर्गेण समवायप्रकारकपदधर्मिकज्ञानं कारणं वाचकता च स्वनिष्ठावच्छेदकतानिरूपकावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठसंसर्गतानिरूपकबोधविषयत्वप्रकारतानिरूपितबोधनिष्ठावच्छेदकतानिरूपितजन्यतानिष्ठावच्छेदकतानिरूपितनिरूपितत्वसंसर्गावच्छिन्नावच्छेदकतावत्त्वम्। एवं पदधर्मिकं घटप्रकारकं घटत्वप्रकारकं च ज्ञानं बोध्यं, तत्राद्ये समवायसम्बन्धावच्छिन्नघटत्वनिष्ठावच्छेदकतानिरूपितस्ववृत्तिविशेष्यतानिरूपिताश्रयतासंसर्गतानिरूपितबोधविषयत्वनिष्ठप्रकारतेत्यादि; द्वितीये स्ववृत्तिविशेष्यतानिरूपिततत्संसर्गावच्छिन्नावच्छेदकत्वसंसर्गतानिरूपितबोधविषयत्वनिष्ठप्रकारतेत्यादि वाचकत्वं संसर्ग इत्याहुः।

यद्यपि घटत्वप्रकारित्वावच्छिन्नघटविषयिताविशेषितबोधजनकत्वप्रकारकभगवत्संकेतविशेष्यत्वं तज्ज्ञानस्य हेतुत्वं च घटत्वांशे बोधविशेष्यताऽऽपन्नघटविशेषितविषयताविशेषणताऽऽपन्नप्रकारतांशे विशेषणतया विषयत्वरूपवाच्यत्वभानं घटत्वस्य शाब्दधीप्रकारतानियामकमिति सम्भवति, तथाऽपि घटत्वावच्छेदेन घटपदवाच्यत्वज्ञानहेतुत्वे घटत्वांशे बोधविशेषणताऽऽपन्नविषयिताविशेषणधर्मिविषयिताऽवच्छेदकत्वरूपशक्यताऽवच्छेदकत्वभानमेव तत्र तज्ज्ञाननियामकम्, इतरांशतौल्येऽपि स्वमते घटत्वविशिष्टशाब्दधीहेतुतायां विषयितायां घटविषयकत्वांशे निवेशाधिक्यगौरवं तदनिवेशे भवतां धर्म्यंशे शक्तिधियोऽनपेक्षाऽऽपत्तेः।

माधवी ।

द्रव्यपदशक्यत्वावगाहिप्रमात इति । घटत्वावच्छिन्ने द्रव्यपदशक्यत्वे भ्रमवतो द्रव्यादिपदाद् घटत्वावच्छिन्नप्रकारकशाब्दबोधार्थं घटत्वावच्छिन्ने द्रव्यादिपदशक्तिज्ञानस्य हेतुत्वमावश्यकमेवं च तादृशज्ञानस्य प्रमातयाऽभ्रान्तस्यापि तादृशज्ञानाद् घटादिप्रकारकशाब्दबोधापत्तिरितिभावः। स्वरूपतो घटत्वप्रकारकबोधे वाचकतांशे स्वरूपतो घटत्वादिप्रकारकज्ञानस्यैव हेतुत्वमिति; घटपदं घटत्ववाचकमित्याकारकज्ञानविषयस्य घटत्ववाचकत्वस्य घटत्वनिष्ठविषयतानिरूपितावच्छिन्नत्वविषयतानिरूपितबोधविषयत्वविषयतानिरूपिता या बोधनिष्ठा विषयता तन्निरूपितजनकत्वविषयतानिरूपितविषयतारूपतया तद्घटकावच्छिन्नत्वविषयतानिरूपकविषयतायामाधेयत्वसम्बन्धेन घटत्वस्य स्वरूपतः प्रकारत्वं वाच्यं, समवायातिरिक्तसम्बन्धेन जात्यादेः स्वरूपतः प्रकारत्वोगमादिति भावः। समवायवाचकताज्ञानेऽप्येवंरीत्या समवायस्य प्रकारत्वं बोध्यम् । स्वरूपतः समवायस्य प्रकारत्वासम्भवेनेति । जातीतरस्य स्वरूपतः प्रकारत्वानभ्युपगमादिति भावः ।

विनोदिनी ।

ज्ञानं कारणं वाच्यमिति । तथा च समवायेन घटत्वविशिष्टो घटो घटपदवाच्य इत्यादिरूपमेव शक्तिज्ञानं वाच्यम् , एवं च द्रव्यपदशक्तिप्रमातो घटत्वादिप्रकारकस्य, कालिकेन घटत्वादिप्रकारस्य च बोधस्य नापत्तिः । एवमपीति । अयं भावः—शक्तिज्ञानशाब्दबोधयोः समानप्रकारकत्वस्यानुभाविकतया निर्धर्मिताऽवच्छेदककशक्तिज्ञानतः तादृशशाब्दस्योदयेऽपि तथाभूतस्य विरोध्यप्रतिबन्धकत्वेनाकिञ्चित्करत्वाद् घटत्वप्रकारकबोधे कर्त्तव्ये तत्कारणस्य शक्तिग्रहस्य घटत्वत्वावच्छिन्नधर्मिकस्यैव स्वीकार्यतया घटत्वत्वेन घटत्वोपस्थितेरपेक्षायां तदनुपस्थितौ शाब्दानुपपत्तिरस्त्येवेति भावः ।

सर्वोऽप्ययं प्रपञ्चस्तावदर्थविशेष्यकशक्तिपक्षीयस्तस्मात्पदविशेष्यकएवायमादरणीय इति मत्वाऽऽह—न चेति । एवमपीति—पदविशेष्यकशक्तिपक्षे घटत्वादेर्जातित्वेन स्वरूपतो भानसंभवाद् घटत्वत्वेनोपस्थित्यनपेक्षत्वेऽपि । प्रकारत्वासंभवेनेति । जात्यखण्डोपाध्यतिरिक्ततयेत्यादिः । तथा च नित्यसम्बन्धत्वेनोपस्थितिरपेया, तदभावे शाब्दानुपपत्तिर्दुर्वारेति ।

अत्रोच्यते-तत्सम्बन्धेन तद्धर्मप्रकारकशाब्दबोधे तत्संसर्गावच्छिन्नतद्धर्मनिष्ठावच्छेदकताकस्वजन्यबोधविषयत्वप्रकारतानिरूपितेच्छाविशेष्यतात्वावच्छिन्नसंसर्गकतत्सम्बन्धावच्छिन्नतद्धर्मनिष्ठधर्मिताऽवच्छेदकताकपदप्रकारकज्ञानत्वेन विषयताविशेषसंसर्गकार्थविशेष्यकशक्तिज्ञानस्य हेतुता, ईदृशशक्तिग्रहे च सम्बन्धघटकतयैवावच्छिन्नत्वांशे समवायभानात्स्वरूपतोऽपि तस्य तथा भानसम्भवेन समवायत्वोस्थितेर्नापेक्षेति सामञ्जस्यम् ।

---

मञ्जूषा ।

एवं च बोधविषयत्वप्रकारकभगवत्संकेतविषयत्वरूपवाच्यत्वपक्षेऽप्यर्थधर्मिकवाच्यत्वज्ञानकारणत्वमालम्ब्य समाधत्ते-तत्संम्बधेनेति । स्वंपदं, स्वजन्यत्वप्रकारतानिरूपितबोधप्रकारतानिरूपितविषयत्वप्रकारता प्रकारताऽन्तार्थः, तेन लक्षणास्थले तीरादेर्न गङ्गापदशक्तिप्रमाप्रसङ्गः, तादृशसंबन्धेन घटपदवद् द्रव्यमिति ज्ञानात्कालिकादिसंबन्धेन घटत्वधर्मिताऽवच्छेदकताकघटपदप्रकारकज्ञानाच्च ।

माधवी ।

तत्सम्बन्धेन तद्धर्मप्रकारकशाब्दबोध इति । निर्द्धर्मिताऽवच्छेदकात् द्रव्यत्वादिधर्मिताऽवच्छेदककान्निरुक्तसंसर्गकघटपदप्रकारताकज्ञानाद् घटत्वादिप्रकारकशाब्दबोधवारणाय तत्सम्बन्धावच्छिन्नतद्धर्मनिष्ठधर्मिताऽवच्छेकताकेति ।

विनोदिनी ।

समवायत्वाद्यनुपस्थितावपि शाब्दबोधमुपपादयितुमुपक्रमते-अत्रोच्यत इत्यादिना ।

तत्सम्बन्धावच्छिन्नतद्धर्मप्रकारकशाब्दबुद्धिं प्रति तत्सम्बन्धावच्छिन्नतद्धर्मनिष्ठावच्छेदकतानिरूपकविषयतानिष्ठया तत्पदनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नविषयतानिरूपितजन्यतानिष्ठविषयतानिरूपितबोधनिष्ठविषयतानिरूपितविषयतात्वावच्छिन्नप्रकारतया निरूपितसङ्केतीय-

विशेष्यतासम्बन्धेन तत्पदप्रकारकं तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नार्थविशेष्यताशालिज्ञानं हेतुः, तथा च घटत्वादिधर्मनिष्ठायां धर्मिताऽवच्छेदकतायां संसर्गावच्छिन्नत्वांशे समवायस्य संसर्गतया भानेन प्रकारताभानाभावाद् न समवायत्वभानावश्यकतेति भावः ।

---

द्रव्यपदाद् द्रव्यं बोद्धव्यमित्याकारताप्रयोजकद्रव्यपदजन्यबोधविषयत्वीयभगवदिच्छाप्रकारता न घटत्वावच्छिन्नविषयत्वनिष्ठा; अपि तु द्रव्यत्वावच्छिन्नविषयत्वनिष्ठैवेति द्रव्यपदजन्यबोधीयघटत्वावच्छिन्नविषयत्वनिष्ठप्रकारतानिरूपितभगवदिच्छानिरूपितविशेष्यतात्वावच्छिन्नसंसर्गेण घटत्वाद्यवच्छिन्ने द्रव्यपदप्रकारकं ज्ञानं संसर्गताऽवच्छेदकघटकघटत्वावच्छिन्नत्वांशे भ्रम एव ।

न च द्रव्यपदजन्यविभक्त्युपस्थापितैकत्वादिप्रकारकद्रव्यत्वावच्छिन्नविशेष्यकबोधीया यैकत्वावच्छिन्नविषयता साऽपि द्रव्यपदजन्यबोधीयद्रव्यत्वावच्छिन्नविषयतात्वेन भगवदिच्छाविषयः, एवं च द्रव्यपदजन्यबोधीयैकत्वावच्छिन्नविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेनैकत्वादिमतो द्रव्यपदवत्त्वाद् द्रव्यपदादभ्रान्तस्य पदान्तरानुपस्थितैकत्वप्रकारेणापि शाब्दबोधप्रसङ्गो दुर्वार एवेति वाच्यम् । तादृशविशेष्यतात्वेन तस्याः संबन्धताऽनुपगमात् ।

अथ वा तत्पदजन्यतद्धर्मप्रकारकशाब्दबोधे तद्धर्मा-

वच्छिन्नत्वावच्छिन्नत्वेन तत्पदजन्यबोधविषयत्वप्रकारताऽवगाहि तादृशप्रकारतानिरूपितविशेष्यतासंसर्गकं पदप्रकारकं ज्ञानं हेतुः, एवं चैकत्वादिप्रकारकद्रव्यादिपदजन्यबोधजनकशक्तिग्रहेण द्रव्यादिपदजन्यबोधविषयत्वनिष्ठद्रव्यत्वावच्छिन्नत्वेनैव तादृशविषयत्वमवगाहमानाया भगवदिच्छायाः प्रकारतायां द्रव्यत्वमात्रावच्छिन्नत्वेनावच्छिन्नायां बाधितस्यैकत्वावच्छिन्नत्वावच्छिन्नत्वस्यावगाहनात्तस्य भ्रमत्वनिर्वाहेणातिप्रसङ्गानवकाशात् ।

---

मञ्जूषा ।

घटत्वप्रकारकशाब्दबोधविषयतायास्तत्संबन्धावच्छिन्नतद्धर्मनिष्ठावच्छेदकताकत्वविशेषणाद् द्रव्यपदजन्यबोधविषयतावृत्तिप्रकारतानिरूपितसंकेतविषयतासंबन्धेन द्रव्यपदवान् घट इति प्रमातः घटत्वप्रकारकशाब्दबोधवारणं स्फुटयति–द्रव्यपदादिति । घटत्वाद्यवच्छिन्नत्वांशइति । आदिना विकल्पेन बोधविषयतीयत्वादिग्रहः ।

द्रव्येति । द्रव्यमिति शब्दाधीनाया एकं द्रव्यमितिबोधीयाया द्रव्यत्वावच्छिन्नविषयताया एकत्वावच्छिन्नविषयतयैक्यम् ,अयं घट इत्यादिप्रत्ययानां घटत्वावच्छिन्नविषयताकत्वव्यवहारात् प्रकारावच्छिन्नत्वस्यापि हेत्वाभासादौ व्यक्तत्वाच्च। सा च द्रव्यमित्याकारकपदप्रयोज्येत्यर्थः।द्रव्येति । एकं द्रव्यपदवादिति प्रमातः शाब्दबोधप्रसङ्गादित्यर्थः।इष्टापत्तिं निरस्यति–पदान्तरानुपस्थितेति। पदान्तरजन्यैकत्वानुपस्थितिदशायां द्रव्यमेकमिति बोधस्य प्रतिबन्धकाविशेषेण द्रव्याभानेऽपि; एकमस्तीत्यादिबोधस्य च प्रसङ्ग इत्यर्थः ।

तद्धर्मेति । तद्धर्मावच्छिन्नत्वावच्छिन्नप्रकारतानिरूपिततादृशविषयत्वप्रकारताप्रकारताकेत्यर्थः । तादृशप्रकारतेति । तद्धर्मावच्छिन्नत्वावच्छिन्नप्रकारतेत्यर्थः ।

माधवी ।

तादृशविषयतात्वेन सम्बन्धताऽनुपगमादिति । स्वजन्यबोधीयैकत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतया द्रव्यपदस्य संसर्गताऽनुपगमादित्यर्थः। तादृशविशेष्यतया द्रव्यपदस्य संसर्गताऽनुपगमे विप्रतिपन्नं प्रत्याह—अथ वेति ।

भ्रमत्वनिर्वाहेणातिप्रसङ्गानवकाशादिति । तथा चाभ्रान्तस्य न तादृशशक्तिज्ञानादेकत्वावच्छिन्नप्रकारताकशाब्दबोधो, भ्रान्तस्य भवत्येवेति ध्येयम् । तादृशविशिष्टविशेष्यतासंसर्गताकेति । स्वजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यतासंसर्गताकेत्यर्थः ।

विनोदिनी ।

द्रव्यपदाद् द्रव्यं बोद्धव्यमित्यत्रत्यभगवदिच्छीयप्रकारताया द्रव्यत्वावच्छिन्नविषयत्वनिष्ठतया द्रव्यपदजन्यबोधविषयत्वस्य संसर्गताऽवच्छेदकघटकघटत्वेनानवच्छिन्नतया तस्मिंस्तदवच्छिन्नत्वज्ञाने भ्रमत्वं दुर्वारमिति भावः ।

एकत्वावच्छिन्नद्रव्यत्वावच्छिन्नविषयतेति । द्रव्यत्वावच्छिन्नविशेष्यताया एकत्वरूपप्रकारसमानाधिकरणतया तदवच्छिन्नत्वोक्तिरिति भावः। एकत्वादिमत इति । घटादेरपीति भावः । तस्याः, द्रव्यपदजन्यबोधीयद्रव्यत्वावच्छिन्नविषयतानिष्ठप्रकारतानिरूपितभगवदिच्छीयविशेष्यतायाः ।

तद्धर्मावच्छिन्नावच्छिन्नत्वेति । तद्धर्मेण घटत्वादिनाऽवच्छिन्ना या तत्पदजन्यबोधविषयता, तत्त्वेनावच्छिन्ना या तन्निष्ठप्रकारता तत्त्वेत्यर्थः। तथा च द्रव्यं द्रव्यपदाद् बोद्धव्यमित्यत्र तादृशप्रकारतायामेकत्वावच्छिन्नत्वावच्छिन्नत्वाभाववत्यां तदवगाहनाद् भ्रमत्वं स्यादेवेति भावः ।

---

यत्तु पदार्थांशे घटत्वादिधर्मस्य शाब्दबोधप्रकारतायां तदंशे तत्पदशक्यताऽवच्छेदकत्वमेव प्रयोजकम् । शक्यताऽवच्छेदकत्वं च तत्पदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यताऽवच्छेदकत्वं, न तु बोधविषयतया

संकेतविषयत्वरूपं विशेषणविधया वाच्यत्वं तथा च तद्धर्मप्रकारकशाब्दबोधे तद्धर्मावच्छिन्नत्वविशिष्टतादृश-विषयतासंसर्गकं पदशक्तिज्ञानमेव कारणमास्तां द्रव्या-दिपदजन्यबोधविषयत्वप्रकारतानिरूपितद्रव्यत्वावच्छिन्न-भगवत्सङ्केतविशेष्यताया घटत्वावच्छिन्नत्वेऽपि तस्या-स्तादृशप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यतात्वेनैव सम्बन्धता न तु तादृशप्रकारतानिरूपितघटत्वाद्यवच्छिन्न-विशेष्यतात्वेनेति तादृशप्रकारतानिरूपितभगवदिच्छावि-शेष्यतायां द्रव्यत्वादेरेवावच्छेदकत्वं न तु घटत्वादेरित्येवं-वा स्वीकरणीयमिति नोक्तातिप्रसङ्ग इति शक्यताऽ-वच्छेदके शक्तिं दूषयतां दीधितिकृता प्रत्यक्षमणिदी-धितिप्रदर्शितमतम्,

तन्न शोभनम्—एवं सति शक्तिज्ञानाधुनिक-संकेतज्ञानयोरेकरूपेणैव हेतुत्वाद्यत्र द्रव्यपदाद् गुणव-त्त्वादिना द्रव्यं बोद्धव्यमित्याकारक आधुनिकः कस्य चित्सङ्केतो द्रव्यत्वाद्यवच्छिन्नविशेष्यतासम्बन्धेन गृही-तस्तत्र तादृशसंकेतग्रहाद् द्रव्यत्वेन द्रव्यबोधापत्तेर्गुण-त्वादिप्रकारकबोधानुपपत्तेश्च दुर्वारत्वाद् ।

इति शक्तिवादे सामान्यकाण्डः ।

मञ्जूषा ।

ये तु बोधविषयतायां तद्धर्मावच्छिन्नत्वमनिवेश्य विशेष्यतायां तन्निवेशेनोक्तपूर्वपक्षं समादधति; तन्मतं दर्शयति-यत्त्विति ।

एवं सतीति । सिद्धान्ते चोक्तस्थले विशेष्यताया द्रव्यत्वावच्छिन्नत्वेऽपि गुणवत्त्वाच्छिन्नाया द्रव्यपदजन्यबोधविषयतावृत्तिप्रकारताया द्रव्यत्वावच्छिन्नत्वानवच्छिन्नत्वात्तद्भ्रमं विना न द्रव्यत्वप्रकारकबोधापत्तिः, न वा गुणवत्त्वावच्छिन्नस्वजन्यशाब्दबोधविषयतानिरूपितसङ्केतीयविशेष्यतासंबन्धेन पदप्रकारकस्य गुणवत्त्वावच्छिन्नविशेष्यकशक्तिग्रहस्य सम्भवाद् गुणवत्त्वप्रकारकशाब्दबोधानुपपत्तिः । एवं च तत्र सङ्केतीयविशेष्यतायामधिकस्य द्रव्यत्वावच्छिन्नस्य भानेऽपि हेतुताऽवच्छेदकसत्त्वाद्भवत्येव शाब्दबोधो न तु तादृशसम्बन्धेन पदप्रकारकद्रव्यत्वावच्छिन्नधर्मिकज्ञानादहेतोरिति ।

इति शक्तिवादव्याख्यायां मञ्जूषायां-
सामान्यकाण्डः ।



माधवी ।

द्रव्यपदाद् गुणवत्त्वादिना द्रव्यं बोद्धव्यमित्याकारक = इति,द्रव्यं द्रव्यपदजन्यगुणावच्छिन्नबोधविषयतावद् भवत्वित्याकारक इति । द्रव्यत्वेन द्रव्यबोधापत्तेरिति । द्रव्यत्वप्रकारकशाब्दबोधहेतोर्द्रव्यपदजन्यबोधविषयत्वप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यतासंसर्गेण द्रव्यपदवत्ताज्ञानस्य सम्भवाद् गुणप्रकारकज्ञानस्य तादृशसंकेतेनावगाहनात् द्रव्यत्वप्रकारकशाब्दबोधस्यानुभवविरुद्धत्वादिति भावः । ननु द्रव्यत्वप्रकारकशाब्दबोधे द्रव्यत्वेतरधर्मानवच्छिन्नत्वावच्छिन्नद्रव्यपदजन्यशाब्दबोधविषयत्वप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यतासंसर्गकद्रव्यपदवत्त्वज्ञानस्य हेतुत्वोपगमान्न तादृशसंकेतज्ञानाद् द्रव्यत्वप्रकारकशाब्दबोधापत्तिः, संकेतीयद्रव्यपदजन्यशाब्दबोधप्रकारताया द्रव्यत्वेतरगुणावच्छिन्नत्वावच्छिन्नत्वादित्यत आह—गुणवत्त्वादिप्रकारकशाब्दबोधानुपपत्तेरिति । इदं त्ववधातव्यं—गुणवत्त्वेन द्रव्यं बोद्धव्यमित्याकारकाधुनिकसंकेतज्ञानाद् गुणवत्त्वप्रकारकशाब्दबोधो न भवत्येव, न चैवमनुभवापलापस्तादृशानुभवस्यैवासिद्धत्वादनुभवे वा तादृशाधुनिकसंकेतज्ञानस्य स्वातन्त्र्येण गुणप्रकारकबोधजनकत्वमङ्गीकार्यम् । न च तादृशाधुनिकसंकेतज्ञानस्य स्वातन्त्र्येण हेतुतायां गौरव-

मिति वाच्यम् । गुणवान् द्रव्यपदजन्यबोधविषयतावान् भवत्वित्याकारकस्य बोधविषयत्वांशे गुणावच्छिन्नत्वानवगाह्याधुनिकसंकेतज्ञानस्य भवताऽपि स्वातन्त्र्येण हेतुत्वस्य स्वीकार्यत्वात् । दीधितिकृन्मते गुणविशिष्टे शक्तिभ्रमतादृशसंकेतज्ञानयोर्हेतुत्वसम्भवाद् । भवता तादृशाधुनिकसंकेज्ञानाच्छाब्दबोधानङ्गीकारे दीधितिकृताऽपि भवन्मतासिद्धतादृशाधुनिकसंकेज्ञानाच्छाब्दबोधोऽनङ्गीकरणीयः ।

इति शक्तिवादटीकायां माधव्यां सामान्यकाण्डः ।

विनोदनी ।

दुर्वारत्वादिति । अत्रास्मदध्यापकाः शेषसार्वभौमभट्टाचार्यपादाः—

द्रव्यपदाद् द्रव्यं बोद्धव्यमित्यादौ द्रव्यपदजन्यबोधानिरूपितविषयतात्वपर्याप्तावच्छेदकतानिरूपकप्रकारतानिरूपितसंकेतविषयद्रव्यत्वावच्छिन्नविशेष्यतासम्बन्धेन द्रव्यपदप्रकारकद्रव्यत्वावच्छिन्नविशेष्यताशालिज्ञानस्य कारणत्वाभ्युपगमेन द्रव्यपदाद् गुणवत्त्वेन द्रव्यं बोद्धव्यमित्यादौ संकेतयिप्रकारतायां गुणवत्त्वावच्छिन्नत्वतथाभूतप्रकारतात्वोभयावच्छिन्नत्वसत्त्वान्नोक्तापत्तिसंभवः ।

उक्तानुपपत्तेरपि न दोषता, द्रव्यपदाद् गुणवद् बोद्धव्यमित्याकारकसंकेतादेव गुणवत्त्वेन बोधस्येष्टत्वात्, प्रदर्शिताकारात्तु न तथा बोध इष्टः, न च निर्दिष्टसंकेततस्तथात्वेन बोधो ग्रन्थकृदसंमत इति सांप्रतम्, द्रव्यपदाद् गुणवत्त्वेन द्रव्यं बोद्धव्यमित्यादिसंकेताद् गुणवत्त्वेन बोधो दीधितिकृताऽपि नाङ्गीक्रियत इत्यस्यापि सुवचत्वादिति संक्षेपः ।

इति शक्तिवादव्याख्यायां विनोदिन्यां सामान्यकाण्डः ।

अथ

## टीकात्रयोपेते शक्तिवादे

# विशेषकाण्डः—

अथ पदार्थांश इव प्रकारीभूतधर्मांशेऽपि वाच्यत्वग्रहस्यापेक्षितत्व आकाशपदात् शब्दाश्रयतया बोधो न स्यात्, शब्दाश्रयत्वस्याकाशपदावाच्यतायाः सिद्धान्तसिद्धत्वाद्, अत एव तद्वारणायैव प्रवृत्तिनिमित्तलक्षणे वाच्यत्वे सतीति विशेषणोपादानामिति चेद्? न, शब्दाश्रयत्वस्याकाशपदवाच्यत्वमनङ्गीकर्तृभिः प्राचीनैराकाशपदादाकाशांशे तदुपस्थाप्याप्रकारकशाब्दबुद्धेरेवोपगमात्, तदुक्तम्— "अस्तु वा पदादपि निर्विकल्पकमि"ति, निर्विकल्पकत्वं च तदंशे तत्पदोपस्थाप्याप्रकारकत्वं, न तु तदंशे सामान्यतो निष्प्रकारकत्वं, विभक्त्युपस्थाप्यैकत्वादीनां तदंशे प्रकारताया आवश्यकत्वात्, तेन समं पदार्थान्तरस्य संसर्गानवगाहने तादृशबोधस्य शाब्दत्वासंभवाच्च।

---

मञ्जूषा।

प्रकारीभूतेति। तद्धर्मप्रकारकशाब्दबोधे तद्धर्मांशे वृत्त्यवगाहितद्धर्मप्रकारकवृत्तिज्ञानजन्यतदुपस्थितित्वेन कारणता, तत्पदज्ञानजन्यतदशक्यार्थोपस्थितश्च न तद्धर्मांशे वृत्तिविषयकज्ञानजन्येति भावः। प्राचीनै-

रिति। ननु तद्धर्मप्रकारकशाब्दबोधं प्रति तद्धर्मांशे वृत्त्यवगाहितद्धर्मप्रकारकवृत्तिज्ञानजन्यतदुपस्थितित्वेन हेतुतामपेक्ष्य; तद्धर्मप्रकारकवृत्तिज्ञानजन्यतदुपस्थितेः कारणत्वमुपेयं लाघवाद्, आकाशपदाशक्यशब्दाश्रयत्वनिष्ठतत्पदाधीनोपस्थितिविषयताया उपलक्षणीभूततद्धर्मप्रकारकशक्तिज्ञानजन्यताऽवच्छेदकतया वृत्तिप्रयोज्यत्वादिति कुत आकाशपदाधीनंशाब्दबोधस्य तदुपस्थाप्याप्रकारकत्वमिति चेन्न, तथा सति गवादिपदेऽपि गोत्वादेरशक्यत्वप्रसङ्गात्, तथाऽपि शक्तिग्रहे प्रकारतारूपनियामकवशेन तदुपस्थितिसंभवाद्, अतो गुरुणाऽप्युक्तरूपेण कारणत्वमुपेत्याकाशपदजन्यशाब्दबोधस्य तथात्वमुपगतमिति भावः। नन्वाकाशपदादाकाशस्य विभक्त्या चैकत्वस्य समूहालम्बनशाब्दबोध एवास्त्वित्याशङ्क्याह—तेनेति

माधवी।

शाब्दत्वासम्भवादिति। आकाङ्क्षाऽऽदिमत्पदप्रयोज्यपदार्थविषयतानिरूपितपदार्थविषयताशालिज्ञानस्यैव शाब्दत्वादिति भावः।

विनोदिनी।

अधुना "जात्याकृतिव्यक्तयः पदार्थः" इतिपारमर्षसूत्रस्वारस्यप्राप्तन्यायराद्धान्तानुमोदितशक्तिशालिपदानां शक्तिं निर्णीय; तत्स्वारस्याननुगृहीतशक्तिकपदविशेषाणामेनां विवेक्तुकामः प्रथममाकाशशब्दस्य तां निर्द्धारयितुमुपक्रमते—अथेति।

न स्यादिति। यथा घटादिपदेभ्यो घटत्वादीनां वाच्यतया तत्प्रकारको बोधो भवति तथाऽत्र न स्यादिति भावः। अत्र हेतुः शब्देत्यादिः।

प्रवृत्तिनिमित्तलक्षण इति। वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वमिति हि तदीयं लक्षणम्, अत्राद्यविशेषणानुक्तावाकाशपदे निरवच्छिन्नशक्तिवादिनां प्राचां मते शब्दाश्रयत्वेनोपस्थित्यभ्युपगमादनभिमतप्रवृत्तिनिमित्तत्वके तस्मिन्नुक्तलक्षणातिव्याप्तिः। द्वितीयविशेषणाभावे गवादिपदानामवयवसंस्थानरूपाकृतेर्वाच्यत्वात्, शाब्दबुद्धावौत्सर्गिकभानेनोपस्थितौ प्रकारत्वाच्च तस्यामतिव्याप्तिः, शक्तिव्यावर्तकीभवतः शक्यताऽवच्छेदकस्य प्रवृत्तिनिमित्ततायाः आनुभविकत्वेनातथाभूतायामाकृतौ तत्त्वस्येष्टापत्तेरयोगाद्, निविष्टे चास्मिन्; वाच्यवृत्तित्वस्य साक्षादेव निविवेशयिषितत्वेन स्वसमवायिसमवेतत्वरूपपरम्परया वाच्यवृत्तित्वेऽपि क्षतिविरहः। विशेष्यानुल्लेखे च पृथिव्यादिपदानामवयविषु तत्त्वापत्तिरिति।

वस्तुतस्तु तत्र निर्विकल्पकपदं तत्पदोपस्थाप्यार्थाविशेषितधर्मिविषयकशाब्दानुभवजनकनिर्विकल्पकस्मरणपरम्, अत एव तत्र निर्विकल्पकरूपस्य स्मरणस्यानुपपत्तिः, अनुभवस्य स्वसमानप्रकारकमात्रस्मृतिजनकत्वादित्याशङ्क्य प्रकारान्तरेण तादृशस्मरणमुपपादितं मिश्रैः।

अत्र च मते जात्यातिरिक्तस्य तस्य स्वरूपतः पदार्थान्तरे प्रकारत्वासम्भवादाकाशवासीत्यादौ शाब्दबोधानुपपत्तिः, अन्वयिताऽवच्छेदकावच्छिन्न एव च पदार्थान्तरान्वय इति नियमानुपपत्तिश्चेति पदार्थवत्तत्प्रकारीभूतधर्मांशेऽपि शक्तिग्रहापेक्षायां गोत्वादेर्गवादिपदवाच्यत्ववत् शब्दाश्रयत्वस्याप्याकाशपदवाच्यत्वमावश्यकमित्यभिप्रेत्यैव दीधितिकृता गुणटिपण्यां रूपग्रन्थे-"ऽत्रेदन्तत्त्वमि"त्यादिना गोत्वादिना शब्दाश्रयत्वस्याविशेषं व्युत्पाद्य; प्रकाशस्थप्रवृत्तिनिमित्तलक्षणे वाच्यत्वविशेषणोपादानं दूषितमेव, प्रत्यक्षमणिदीधितौ च पदार्थांशे गोत्वादेः प्रकारतायां शक्यताऽवच्छेदकतायाः प्रयोजकत्वमुपगम्य शक्यताऽवच्छेदके शक्तिर्दूषितैव, तत्रोक्तानुपपत्तिश्चिन्त्या।

---

मञ्जूषा ।

अत्राकाशपदाधीनशाब्दबोधस्य तदुपस्थाप्याप्रकारकत्वे तज्जन्यस्मरणस्य कुतः शब्दाश्रयत्वप्रकारकत्वमुपेयते तत्प्रकारत्वोपगमबीजफलसमानप्रकारकत्वायोगादित्यालोच्य तथैवाह--

वस्तुतस्त्विति। प्रकारान्तरेति। स्वविरुद्धाप्रकारकस्मृतित्वेन कार्यतामुपेत्येत्यर्थः। स्वविरुद्धाप्रकारकत्वं च तद्धर्मांशे स्वप्रकारीभूतधर्मान्यप्रकारानवच्छिन्नतद्धर्मिविषयताकत्वं, तादृशी च निर्विकल्पकस्मृतिरपीति भावः।

इदानीं निर्विकल्पकस्मरणमपि दूषयति–अत्र च मत इति। नन्वाकाशवासीत्यादावाकाशपदावाच्यत्वेनैवाकाशभानान्न शाब्दबोधयोरनुपपत्तिरित्यत आह–गोत्वादिनेति। पदान्नियतोपस्थितिर्वृत्तिसाध्यैवेति नियमः, तत्पदाधीनलक्षणाग्रहशक्तिभ्रमजन्यशाब्दबोधे नियमतः प्रकारत्वं स्वांशे केवलवृत्तिग्रहाधीनमेवेति तदर्थः। न चोपस्थितिपदं स्मृतिपरं,–साक्षाऽऽद्युपलक्षणधर्ममात्रप्रकारकशक्तिग्रहाधीने गवादिपदजन्यस्मरणे साक्षाऽऽदिमात्रस्य प्रकारतया गवादिपदाधीनस्मृतौ गोत्वादेरपि प्रकारत्वनियमाद्, अयं च नियमो गोत्वादेः शक्यत्वनिर्वाहायावश्यकः, तथा चाकाशपदजन्यशाब्दबोधे नियमतः शब्दाश्रयत्वस्य भाननिर्वाहायावश्यके शक्यत्वे गोत्वादिनाऽविशेष इति।

माधवी।

स्वसमानप्रकारकमात्रस्मृतिजनकत्वादिति। स्वसमानप्रकारकत्वञ्च–स्वीयविषयताव्यापकप्रतिबन्धकतावत्त्वम्। व्यापकत्वञ्च–स्वावच्छेदकविषयतावत्त्वसम्बन्धेन। तादृश तिबन्धकता च वह्नित्वावच्छिन्नवह्निनिष्ठप्रकारतानिरूपितपर्वतत्वावच्छिन्नतत्पर्वतनिष्ठविषयताशालीच्छानिरूपितवह्नित्वावच्छिन्नतद्वह्निनिष्ठप्रकारतानिरूपितपर्वतत्वाच्छिन्नतत्पर्वतनिष्ठविशेष्यताशालिज्ञानत्वावच्छिन्नतादृशज्ञाननिष्ठा।

न च पर्वतो वह्निमानितिज्ञाननिष्ठा या पर्वतोव ह्निमान्नेतिज्ञाननिरूपिता प्रतिबन्धकता तस्या अपि स्वीयविषयताव्यापकतया तादृशप्रतिबन्धकत्वाभाववत्त्वस्य वह्नित्वादिना वह्न्यन्तरावगाहिनि पर्वतो वन्हिमान् वन्हिमत्पर्वतवान् देश इति ज्ञानेऽपि सत्त्वात्तादृशज्ञानानामपि पर्वतो वन्हिमान् इत्याकारकज्ञानसमानाकारकत्वापत्तिरिति वाच्यम्।

स्वीयविषयताव्याप्यत्वस्यापि प्रतिबन्धकतायां निवेशनीयत्वाद्, व्याप्यत्वमपि स्वावच्छेदकविषयतासम्बन्धेन ग्राह्यम्।

न च व्याप्यत्वमेव निवेशनीयं किं व्यापकत्वनिवेशनेति वाच्यम्।

माधवी ।

वन्हित्वेन तद्वन्हिविषयकज्ञाननिष्ठा या वन्हित्वेन तद्वन्हिविषयकज्ञानं जायतामितीच्छानिरूपिता प्रतिबन्धकता तस्या अपि वन्हित्वेन तद्वह्न्यवगाहिपर्वतोवन्हिमानितिज्ञानीयविषयताऽव्याप्यत्वेन वन्हिरितिज्ञानस्यापि पर्वतोवन्हिमानितिज्ञानसमानाकारकत्वापत्तेः । न च वन्हिः पर्वतश्चेति समूहालम्बनज्ञानसमानाकारकत्वं पर्वतो वन्हिमानिति ज्ञाने स्यात् तादृशसमूहालम्बनज्ञानीयविषयतासमनियतप्रतिबन्धकतावत्त्वादिति वाच्यम् ।

स्वीयविषयतासमनियतस्वनिष्ठप्रतिबन्धकतावत्त्वस्य विवक्षितत्वात् पर्वतवन्हिमन्निष्ठा या तादृशेच्छानिरूपितप्रतिबन्धकता तस्याः समूहालम्बनज्ञानीयविषयतासमनियतत्वेऽपि तादृशसमूहालम्बनज्ञाननिष्ठत्वाभावात् ।

न च पर्वतो वन्हिमानिति ज्ञानस्य तादृशज्ञानप्रकारीभूतवन्हिविषयकवन्हिरितिज्ञानस्य समानाकारकत्वापत्तिः; तादृशज्ञानस्य वह्निरितिज्ञानीयविषयतासमनियततया वन्हित्वेन तद्वन्हिविषयकज्ञानं जायतामितीच्छानिरूपितप्रतिबन्धकतावत्त्वादिति वाच्यम् ।

स्वीयविषयतासमनियतस्वनिष्ठप्रतिबन्धकतावत्त्वं समानाकारकत्वं, प्रतिबन्धकतावत्त्वं च स्वाश्रयप्रतिबन्धकतावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदस्वरूपोभयसम्बन्धेन । प्रतिबन्धकतायां स्वाश्रयत्वं च स्वाभाववद्वृत्तित्वस्वव्यापकत्वोभयसम्बन्धेन, तथा च वन्हिरितिज्ञानीयविषयतासमनियता वन्हिरितिज्ञाननिष्ठा या निरुक्तप्रतिबन्धकता तद्वत्त्वस्य स्वरूपसम्बन्धेन पर्वतो वन्हिमान् इति ज्ञाने सत्त्वेऽप्युभयसम्बन्धेन तत्सम्बन्धघटकप्रथमाभावेन तद्वत्त्वविरहात् , तथा हि स्वाभाववद्वृत्तित्वस्वव्यापकत्वोभयसम्बन्धेन प्रतिबन्धकताऽऽश्रयीभूता या पर्वतोवन्हिमानितिज्ञाननिष्ठा वन्हित्वावच्छिन्नतद्वन्हिनिष्ठप्रकारतानिरूपितपर्वतत्वावच्छिन्नतत्पर्वतनिष्ठविशेष्यताशालिज्ञानं जायतामितीच्छानिरूपितप्रतिबन्धकता तद्वत्त्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वविरहात् । पर्वतोवन्हिमानितिज्ञानीयविषयतासमनियता या तादृशेच्छानिरूपितप्रतिबन्धकता निरुक्तसंबन्धेन स्वाश्रयप्रतिबन्धकतावत्त्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसंबन्धेन तद्वत्त्वस्य वन्हिरिति ज्ञानेऽपि सत्त्वाद् वन्हिरिति ज्ञानस्यापि पर्वतोवन्हिमानितिज्ञानसमानाकारकत्वापत्तिरतः स्वरूपनिवेशनमिति सदेकपरिचिन्तितपद्धतिः, अन्यत्सुधीभिः शोधनीयम् ।

प्रकारान्तरेणेति । तद्धर्मनिष्ठप्रकारत्वान्यप्रकारत्वानिरूपिततद्विषय-

माधवी ।

ताशालिस्मृतिं प्रति तद्धर्मप्रकारेण तद्धर्मानुभवः कारणमिति कार्यकारणभावकल्पनेन ।

न चैतादृशकार्यकारणभावकल्पनेऽपि क्व चित्तद्धर्मप्रकारेण क्व चित्तद्धर्मप्रकारेण स्मृतिरित्यत्र विनिगमकाभाव इति वाच्यम् । तत्रोद्बोधकविशेषस्यैव नियामकत्वात् । आकाशवासीत्यादावाकाशपदस्य शब्दाश्रयत्वविशिष्टे लक्षणोपगमेनैव तादृशस्थले शाब्दबोधानुपपत्त्यभावादाह--अन्वयिताऽवच्छेदकावच्छिन्न एवेति । अत्रोक्तानुपपत्तिरिति । गुणवत्त्वेन द्रव्यं बोद्धव्यमित्याकारकाधुनिकसंकेतग्रहाद् द्रव्यत्वरूपेण शाब्दबोधापत्तिर्गुणरूपेण तदनुपत्तिरूपा । अत्राप्युक्तदीधितिकृतभाववर्णनमनुसर्तव्यम् ।

विनोदिनी ।

पूर्वं तदुपस्थाप्यधर्मप्रकारकेत्याद्युक्त्या सूचितामाकाशपदाच्छब्दाश्रयत्वप्रकारिकामुपस्थितिमुपगच्छतां प्राचामुपस्थितिशाब्दबोधयोः समानप्रकारकत्वनियमभङ्गमाशङ्क्य, तत्रत्यनिर्विकल्पकपदस्य विशेषपरतामुपपादयति--वस्तुतस्त्विति ।

प्रकारान्तरेणेति । तद्धर्मनिष्ठप्रकारत्वान्यप्रकारत्वानिरूपिततद्धर्मिनिष्ठविषयताकस्मरणत्वेन तद्धर्मनिष्ठप्रकारतानिरूपिततद्धर्मिनिष्ठविषयताकानुभवत्वेन कार्यकारणभावकल्पनरूपेणेत्यर्थः । यत्र प्रकारांश एवोद्बोधकासमवधानं तत्रैतादृशकार्यकारणभावः फलबलेन कल्प्यत इति भावः । यत्त्वाकाशादिपदस्थले शब्दाश्रत्वप्रकारकसंस्कारप्रमोषतस्तत्प्रकारकस्मरणवारणं, तदतिस्थवीयः, संस्कारप्रमोषस्य नियतत्वे गमकाभावादित्याशयः ।

अत्र च मत इति । आकाशादिपदेषु स्वरूपतः शक्तिमत इत्यर्थः ।

---

यत्तु शक्त्याऽऽकाशपदादष्टद्रव्यातिरिक्तद्रव्यत्वादिनाऽप्याकाशबोधो भवति न तु नियमतः शब्दाश्रयत्वेनैव तथा सत्याकाशः शब्दाश्रय इति सहप्रयोगस्य मुख्यताऽनुपपत्तिः प्रत्येकं नानाधर्मविशिष्ट एवाकाशे त-

त्पदस्य नानाशक्तिकल्पनं तु न संभवति, नानाधर्मावच्छिन्नैकधर्मिण्येकपदवाच्यतायाः क्वाप्यदृष्टत्त्वादिति शब्दाश्रयत्वोपलक्षित एवाकाशपदशक्तिरिति प्राचीनमतमेव साधु, उपलक्षणस्यापि विशिष्टावाचकपदजन्यशाब्दबोधप्रकारत्वे न किं चिद् बाधकम् ।

न च शब्दाश्रयत्वस्योपलक्षणत्वे तस्यैवाविशेषात्प्रमेयत्वादेरप्याकाशपदजन्यानुभवप्रकारताऽऽपत्तिरिति वाच्यम् ? तत्प्रकारकशाब्दबोधे तदंशेऽनतिप्रसक्तत्वरूपशक्यताऽवच्छेदकत्वावगाहित्वेनोपलक्षिते शक्तिज्ञानस्य हेतुत्वादिति,

---

मञ्जूषा ।

ये तु गोत्वादेर्नियतोपस्थितावपि न शब्दाश्रयत्वं तथेति ततो विशेषं वदन्ति, तन्मतं दर्शयति–यत्त्विति ।

मुख्यतेति । आकाशपदवाच्यत्वादिपरत्वे च न मुख्यतेति भावः । ननु शक्त्या चेदाकाशपदजन्यबोधः कदा चिच्छब्दाश्रयत्वेन कदा चिदष्टद्रव्यान्यद्रव्यत्वादिना तथा च तथाविधनानाधर्मविशिष्ट एकस्मिन्नाकाशे नाना शक्तिरायाता, यदा यद्धर्मांशे यच्छक्तिग्रहस्तदा तच्छक्त्यधीनतद्धर्मप्रकारकबोध इत्युपगमान्नातिप्रसङ्ग इत्यतस्तादृशनानाशक्तिं दूषयति–प्रत्येकमिति ।

ननु शब्दाश्रयत्वादेरशक्यत्वे शाब्दबोधे भानं न स्यादित्यत आह–उपलक्षणस्यापीति । शक्यविषयस्यापीत्यर्थः ।

माधवी ।

शब्दाश्रयत्वोपलक्षित एवाकाशपदस्य शक्तिरिति । शब्दाश्रयत्वस्याकाशपदशक्तावुपलक्षणत्वं शब्दाश्रय आकाशपदजन्यबोधविषयतावान् भवत्वित्याकारकभगवदिच्छायां शाब्दबोधविषयतायामवच्छिन्नत्वसंबन्धेना-

माधवी ।

नन्वयित्वात्, तथा चाष्टद्रव्यातिरिक्तद्रव्यत्वप्रकारकज्ञानस्यापि संकेतविषयत्वाद् आकाशपदात्ताद्रूप्येणापि शाब्दबोधनिर्वाहः ।

उपलक्षिते शक्तिज्ञानस्य हेतुत्वादिति । शब्दाश्रय आकाशपदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यतावानित्याकारकशक्तिज्ञाने विशेष्यतांशे व्यापकत्वसंबन्धेन धर्मिताऽवच्छेदकस्य शब्दाश्रयत्वादेः प्रकारताशालिशक्तिज्ञानमेव हेतुः; न तु शब्दाश्रयत्वे ताद्दृशविशेष्यताऽनतिरिक्तवृत्तित्वावगाहिशक्तिज्ञानं, तथा सत्यष्टद्रव्यातिरिक्तद्रव्यत्वस्य द्रव्यत्वानतिरिक्ततया तत्र ताद्दृशशक्यताऽनतिरिक्तवृत्तिताविरहादसंगतिः स्यादिति ध्येयम् । अथैतन्मत आकाशपदादाकाशनिष्ठतद्व्यक्तित्वेन शाब्दबोधापत्तिः; तत्रापि तत्पदशक्यताऽनतिरिक्तवृत्तित्वस्य सत्त्वाद्, यदि चाकाशनिष्ठतद्व्यक्तित्वं शब्दाश्रयत्वमेव तद्रूपेणाकाशपदाच्छाब्दबोधो भवत्येवेत्युच्यते तदा शब्दध्वंसवत्त्वेनाकाशपदाच्छाब्दबोधापत्तिरिति चेन्न । एतन्मते तद्रूपेणापि शाब्दबोधस्येष्टत्वादिति ।

विनोदिनी ।

"आकाशः शब्दाश्रयः" इत्यादिष्वाकाशपदस्य मुख्यतामुपगच्छतांमतमनूद्य, निराकरोति—यत्त्विति ।

सहप्रयोगस्येति । अयं भावः-मुख्यत्वं हि प्रकृतेऽभिधाप्रतिपाद्यत्वं-, तच्च न संभवति, सहान्वाययितुमिष्टयोरुद्देश्यविधेययोस्तत्ताऽवच्छेदकयोर्भेदेनोपस्थितेः प्रयोजकतायाः क्लृप्तत्वाद्, अत एव "घटो घट" इत्यादौ नान्वयबोध इत्यन्यत्र बिस्तरः, तथा चाकाशपदस्य शब्दाश्रयनिरूपितशक्तिमत्त्वपक्षे भेदाभावादुद्देश्यताऽवच्छेदकविधेयताऽवच्छेदकयोराकाशः शब्दाश्रय इत्येवं सहप्रयोगो नोपपद्यत इति भावः । न किंचिद् बाधकमिति । घटत्वादिविशिष्टघटादिवाचकघटादिपदस्थले नियमेन भासमानानां घटत्वादीनामेव प्रकारत्वौचित्यं, विशिष्टावाचकाकाशादिपदस्थले तु निष्प्रकारकसविकल्पकज्ञानस्यासंभवदुत्पत्तिकतयोपलक्षणीभूतधर्मेऽपि प्रकारतामवगाहमानं ज्ञानं न विरुध्यत इति भावः । हेतुत्वादिति । तथा चात्राकाशमाकाशपदजन्यबोधविषयतावद् भवत्वित्याकारो भगवत्संकेतः, स्ववाच्यत्वानतिरिक्तवृत्तित्वरूपावच्छेदकत्वोपलक्षितशब्दाश्रयनिष्ठप्रकारतानिरूपितविशेष्यतासंसर्गेणाकाशपदवान् शब्दाश्रय इति ज्ञानं हेतुः, सुतरां प्रमेयत्वादीनां ताद्दृशावच्छेदकत्वानुपलक्षिततया न तेषां ताद्दृशानुभवप्रकारताऽऽपत्तिरित्याशयः ।

तन्न, आकाशः शब्दाश्रय इति प्रयोगस्य मुख्यत्वासिद्ध्याऽष्टद्रव्यातिरिक्तद्रव्यत्वाकाशपदवाच्यत्वाद्येकतररूपेण लक्षणाया एव तत्रोपगमादिति।

यदि चाकाशः शब्दाश्रय इति वाक्यस्थमाकाशपदं मुख्यमेव; निर्धर्मिताऽवच्छेदककश्चान्वयबोधो न कुत्रापि, तदाऽऽकाशपदाच्छक्त्याऽष्टद्रव्यातिरिक्तद्रव्यत्वादिना बोधनिर्वाहाय विशिष्टावाचकाकाशादिपदस्य प्रकारांशे वाच्यत्वानवगाहिशक्तिग्रहस्यैव तद्धर्मावच्छिन्नविशेष्यकस्य तत्प्रकारकान्वयबोधे हेतुत्वमगत्याऽङ्गीकार्यं, विशिष्टवाचकगवादिपदस्य प्रकारांशे वाच्यत्वावगाहिशक्तिज्ञानमेव तत्प्रकारकान्वयबोधहेतुरिति न शक्तिभ्रमलक्षणाग्रहमन्तरेण गवादिपदाद् गोपदवाच्यत्वाद्यवाच्यधर्मप्रकारको बोधः, आकाशादिपदमिव गवादिपदमपि विशिष्टावाचकमिति भ्रमवतो गवादिपदादवाच्यधर्मप्रकारकबोधनिर्वाहाय तद्धर्मप्रकारकशाब्दबोधे तद्धर्मसामानाधिकरण्यमात्रावगाहितत्पदवाच्यताऽवगाहिग्रहस्य हेतुत्वेऽपि तद्धेतुतायां वाच्यतांऽशे विशेषणानन्तर्भावित्वावगाहित्वमप्यवच्छेदकमुपेयमतोऽवाच्यधर्मप्रकारकबोधहेतुगवादिपदशक्तिग्रहस्य भ्रमत्वनियमः, अतो नाभ्रान्तस्य ततस्तादृशबोध इति ध्येयम्।

---

मञ्जूषा ।

प्रकारांशे; अष्टद्रव्यातिरिक्तद्रव्यत्वादिरूपेत्यादिः, तादृशधर्मप्रकारकशाब्दबोधे तद्धर्मं धर्मिताऽवच्छेदकीकृत्य पदप्रकारकजन्यशाब्दबोधविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यतासंसर्गकशक्तिज्ञानं हेतुरित्यर्थः । नन्वेवं गोत्वादेर्गवादिपदाशक्यत्वप्रसङ्गः तथात्वेऽप्युक्तरीत्या शाब्दबोधे तद्भानसंभवादित्याङ्क्य; तथा सति गवादिपदादुक्तशक्तिज्ञानवशाद्गोपदवाच्यत्वादिपदधर्मप्रकारकशाब्दबोधापत्तिरिति विशिष्टवाचकत्वमुपेत्यान्यान्यादृशहेतुतां दर्शयति–विशिष्टेति । प्रकारांश इति । तद्धर्मावच्छिन्नत्वावच्छिन्नत्वेन तादृशप्रकारत्वावगाहिशक्तिज्ञानत्वेनैव हेतुत्वादित्यर्थः। विशिष्टवाचकभेदेन कार्यकारणभावभेदेऽपि तदवाचकत्वभ्रमदशायां यादृशकार्यकारणभावबलादवाच्यधर्मप्रकारकबोधस्तद्बलात्तादृशभ्रमविरहदशायां-तादृशबोधापत्तिमाशङ्क्य परिहरति–आकाशादिपदमिवेति। तद्धर्मेति।तद्धर्मं धर्मिताऽवच्छेदकीकृत्य वाच्यतासंसर्गेण पदप्रकारकेत्यर्थः। संसर्गघटकप्रकारतांऽशे तद्धर्मावच्छिन्नत्वावगाहित्वव्यवच्छेदाय मात्रपदम्। वाच्यत्वांशइति। वाच्यताघटकबोधविषयत्वप्रकारत्वांशे किञ्चिद्धर्मावच्छिन्नत्वानवच्छिन्नत्वावगाहित्वमपि कारणताऽवच्छेदककोटौ निवेश्यम्, एवं च गोपदजन्यशाब्दबोधविषयत्वनिष्ठप्रकारताया गोत्वावच्छिन्नत्वावच्छिन्नतया तदभावभाने भ्रमत्वमावश्यकम्, आकाशादिपदजन्यशाब्दबोधविषयत्वनिष्ठप्रकारतायाश्च किंचिदवच्छिन्नतया तद्भाने न तथात्वमित्यर्थः ।

माधवी ।

तद्धर्मावच्छिन्नविशेष्यकस्य प्राक्तनशक्तिग्रहस्येत्यनेनान्वयः । वाच्यत्वांशे विशेषणानन्तर्भाविताऽवगाहित्वमिति । वाच्यत्वांशे गवादिपदजन्यशाब्दबोधविषयत्वप्रकारतानिरूपितविशेष्यतारूपगवादिपदवाच्यत्वघटकप्रकारतांऽशे विशेषणानन्तर्भावित्वावगाहित्वं विशेषणमवच्छिन्नत्वावच्छिन्नत्वरूपं; तदन्यत्वरूपं तदनन्तर्भावित्वावगाहित्वं तदभावावगाहित्वमित्यर्थः, तथा च गवादिवाच्यधर्मप्रकारकशाब्दबोधे तादृशधर्मावच्छिन्नविशेष्यत्वावच्छिन्नत्वावच्छिन्नत्वाभावाद् गवादिपदजन्यशाब्दबोधविषयत्वप्रकारतानिरूपिततादृशवाच्यस्वधर्मव्यापकविशेष्यताप्रकारकशक्तिज्ञानं हेतुः पर्यवसितम् । एवं च गौर्गोपदजन्यबोधविषयतावान् भवत्वित्याकारकभगवदिच्छायां शाब्दबोधविषयतायां गोत्वावच्छिन्नत्वस्य भानात् तन्निष्ठप्रकारतायामवच्छिन्नत्वावच्छिन्नत्वस्य सत्त्वात् तदभावावगाहित्वं तत्र भ्रम एवेत्यभ्रान्तानां गवादिपदवाच्यधर्मप्रकारकबोधः । शब्दाश्रयः आकाशपदजन्यशाब्दबोधविषयतावान् भवत्वि-

त्याकारकभगवदिच्छायां शाब्दबोधविषयत्वांशे किञ्चिदवच्छिन्नत्वाभावात् तत्र तादृशज्ञानं प्रमारूपमेवेति। एवं च गोत्वादिप्रकारकशाब्दबोध उपलक्षितशक्तिज्ञानविशिष्टशक्तिज्ञानयोः पृथगेव हेतुत्वं, परस्परव्यभिचारश्च विचिन्त्य वारणीयः सुधीभिः। उक्तानुपपत्त्या गुणवत्त्वेन द्रव्यं बोद्धव्यमित्यादिनोक्तानुपपत्तेरित्यर्थः। तत्रापि दीधितिकृतोऽभिप्रायवर्णनमनुसर्त्तव्यम्।

विनोदिनी।

लक्षणाया इति। तथा चाकाशः शब्दाश्रय इत्यत्रोक्तान्यतररूपेण लक्षणयाऽऽकाशोपस्थितौ शब्दाश्रयत्वेन च शक्त्योपस्थितौ विरूपेणोपस्थितयोराकाशशब्दाश्रययोरभेदबोधे बाधकाभाव इति भावः।

यदि चेति। प्रकृतवाक्यीयाकाशपदस्य शक्तत्वे विवादास्पदत्वव्यक्त्यर्थं यद्युक्तिः। नान्वयबोध इति। तादृशबोधस्य विरोधिज्ञानाप्रतिबन्धकत्वेनाकिञ्चित्करत्वादित्याशयः। वाच्यत्वानवगाहीति। आकाशादिपदेषु स्वरूपतः शक्तिमते तथैवौचित्यादिति भावः।

तत्तद्धर्मसामानाधिकरण्येति। गोपदवाच्यत्वादिसमानाधिकरणगोपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासंसर्गेण गोपदप्रकारकगोपदवाच्यविशेष्यकादिज्ञानस्येति यावत्। विशेषणानन्तर्भावित्वेति। तथा च हेतुताऽवच्छेदककुक्षिस्थप्रकारता किञ्चिद्धर्मावच्छिन्नत्वानवच्छिन्नत्वविशिष्टा विवक्षणीयेत्यभिप्रायः।

भ्रमत्वनियम इति। तादृशशक्तिग्रहकुक्षिप्रविष्टप्रकारतायां किञ्चिद्धर्मावच्छिन्नत्वावच्छिन्नत्वसत्त्वेऽपि तदभावावगाहितायां भ्रमत्वं नाप्राप्तमिति भावः।

---

एवं च यत्र सुवर्णहलवहनयोग्यगवादिरूपविशेषपरं सामान्यवाचकपदघटितं द्रव्यं नास्ति गौर्नास्तीति वाक्यं प्रयुज्यते; तत्र विशेषधर्मावच्छिन्ने लक्षणैव, विशेषधर्मस्य सामान्यपदावाच्यतया शक्त्या तद्रूपप्रकारकबोधानिर्वाहात्।

एवं यत्र दुःखासंभिन्नसुखत्वधानकर्मगोत्वा-

दिविशिष्टवाचकस्वर्गधेन्वादिपदं केवलसुखत्वगोत्वाद्यवच्छिन्नतात्पर्यात्प्रयुज्यते तत्र लक्षणैव, शक्त्या प्रवृत्तिनिमित्तैकदेशं परित्यज्य न बोध इत्यनुभवनिर्वाहाय शुद्धतद्धर्मप्रकारकबोधे तदन्यरूपावच्छिन्नत्वानवच्छिन्नबोधविशेषाविषयत्वीयप्रकारतात्वेन प्रकारताघटितसंबन्धावगाहिशक्तिज्ञानस्य कारणत्वमुपगन्तव्यम् । शक्यताऽवच्छेदके शक्यत्वानभ्युपगन्तृमते तादृशबोधे तद्रूपांशे संकेतविशेष्यताऽवच्छेदकतापर्याप्त्यवगाहिज्ञानत्वेन हेतुत्वान्नातिप्रसङ्ग इति तूक्तानुपपत्त्या हेयम् ।

---

मञ्जूषा ।

एवं चेति । स्वजन्यशाब्दबोधविषयत्वनिष्ठप्रकारतायाः सम्बन्धघटकत्वे चेत्यर्थः । तत्र संकेतस्य; बोधो द्रव्यपदजन्यः,सुवर्णं बोद्धव्यमित्याकारस्वीकारेण स्वजन्यत्वस्य शाब्दबोधविषयतात्वावच्छिन्नप्रकारतागर्भसंसर्गत्वासिद्धेरिति भावः । तत्संसर्गकपदप्रकारकशक्तिभ्रमोपलक्षणमिदम् ।

एवमिति । क्व चिच्छक्तिज्ञानस्य प्रमात्वं निराकरोति-लक्षणैवेति । तद्धर्मपर्याप्तप्रकारताकशाब्दबोधे तद्धर्मपर्याप्तावच्छेदकताकत्वावच्छिन्नप्रकारतात्वेन प्रकारताघटितसंबन्धावगाहिशक्तिज्ञानस्यैव हेतुता; तेन शुद्धसुखत्वादिशाब्दबोधासंभवादिति भावः । ननु शुद्धतद्धर्मप्रकारकशाब्दबोधे शुद्धतद्धर्मावच्छिन्नत्वावच्छिन्नप्रकारतागर्भसंसर्गकस्वर्गादिपदप्रकारकशक्तिज्ञानस्य हेतुत्वेन तत्र कुतो लक्षणेत्यत आह-शक्त्येति । उक्तानुपपत्त्येति । द्रव्यपदाद् गुणवत्त्वादिना द्रव्यं बोद्धव्यमित्याकारकाधुनिकसंकेतस्थले केवलद्रव्यत्वप्रकारकबोधाप्रसङ्गेनेत्यर्थः । तत्र च तद्धर्मावच्छिन्नत्वावच्छिन्नत्वस्य संसर्गघटकतया शक्यताऽवच्छेदकतद्धर्मे शक्तिमनङ्गीकुर्वन्तो निरस्ता इति बोध्यम् ।

विनोदिनी ।

विशिष्टवाचकाकाशादिपदस्थले लक्षणया निर्वाहमुपपाद्य, विशिष्ट-

विनोदिनी ।

वाचकपदस्थलेऽपि यत्र सामान्यवाचकपदानां विशेषपरत्वेन प्रयोगस्तत्रापि लक्षणैव शरणीकरणीयेत्यभिप्रेत्याह–एवं चेति ।

तुल्ययुक्त्या विशेषवाचकपदानामपि सामान्यपरत्वे लक्षणैवोपगन्तव्येत्याह–एवमिति ।

शुद्धेति । तद्धर्मनिष्ठप्रकारत्वनिरूपिततदन्यधर्मनिष्ठप्रकारत्वानिरूपितविशेष्यताकशाब्दबोधे तद्धर्मावच्छिन्नत्वावच्छिन्नतदितरधर्मानवच्छिन्नत्वावच्छिन्नस्वजन्यबोधविषयतात्वावच्छिन्नेच्छीयप्रकारतानिरूपितविशेष्यतासंसर्गेण स्वर्गादिपदवत् सुखमितिज्ञानस्य हेतुत्वमिति फलितोऽर्थः।

मत इति । दीधितिकृन्मत इत्यर्थः । पर्य्याप्त्यवगाहीति । तथा च स्वर्गादिपदस्थले हि दुःखासंभिन्नत्वसुखत्वोभयस्मिन्नेव संकेतीयविशेष्यताऽवच्छेदकता पर्य्याप्नातीति न स्वर्गादिपदादेकधर्मप्रकारकबोधापत्तिरिति निष्कर्षः ।

उक्तानुपपत्त्येति । द्रव्यपदाद् गुणवत्त्वेन द्रव्यं बोध्यमित्यादौ गुणवत्त्वप्रकारकबोधानुपपत्त्येति तूक्तमेव ।

---

प्राभाकरास्तु धेनुपदस्य धानकर्मताविशिष्ट एव शक्तिर्न तु गोत्वविशिष्टे, गोत्वस्य शक्त्युपाधित्वेन शक्तिनियन्त्रकत्वाद्, धानकर्मत्वस्य महिष्यादिसाधारणत्वेऽपि धेनुपदान्न तद्बोधः, न च धेनुपदाद्गोत्वप्रकारकबोधस्यानुभविकतया धानकर्ममहिष्यादिमति देशे धेनुर्नास्तीति विशेषदर्शिनां प्रयोगस्य मुख्यतया च धेनुपदजन्यबोधे गोत्वभानमवश्यमङ्गीकरणीयं, तथा च धानकर्मत्व इव गोत्वेऽपि शक्तेरावश्यकता, अशक्यस्यापि शाब्दबोधे भानोपगमे द्रव्यत्वप्रमेयत्वादेरपि प्रकारतया शाब्दबोधे भानापत्तिरिति वाच्यं, शाब्दबोधेऽशक्यस्य गोत्वादेः प्रकारतया भाने शक्यताऽवच्छेदकत्वस्य नियामकत्वाद्,

गोत्वस्य चाशक्यत्वेऽपि शक्यतायामवच्छेदकताऽऽत्मकसम्बन्धविशेषोपगमाद् द्रव्यत्वादेश्चातथात्वेनातिप्रसङ्गविरहाद्, न च गोत्वस्य वृषभादिसाधारणस्यातिप्रसक्ततया शक्तौ नावच्छेदकतासम्भव इति वाच्यम्, अवच्छेदकत्वस्य प्रकृतेऽनतिप्रसक्तत्वानियतत्वाद्, नियतत्वे वा धानकर्मत्वसहितस्यैव तस्यावच्छेदकत्वोपगमाद्। अथ गोत्वमेव शक्यं धानकर्मत्वमेव शक्त्युपाधिरिति वैपरीत्यमेव कुतो न स्याद् ? वस्तुतो धानकर्मत्वापेक्षया लाघवेन गोत्वस्यैव शक्यत्वमुचितं, न च गोत्वमतिप्रसक्तं धानकर्मत्वं तु धानकर्मव्यक्तिभेदेन भिन्नं भिन्नमिति गोनिष्ठं तदनतिप्रसक्तमिति न वैपरीत्यमिति वाच्यं, तस्यातिप्रसक्तत्वेऽपि शक्यत्वोपगमे क्षतिविरहाद्, वृषभादिबोधस्य शक्त्युपाधिधानकर्मत्वस्यापि प्रकारतया वारणाद्, न च गोत्वस्यैव शक्यत्वे जातिशक्त्यैव व्यक्तिलाभसम्भवेनान्यलभ्यतया गवादिपदवद् व्यक्तिशक्त्युच्छेदप्रसङ्गः; तथा च धानकर्मत्वस्य जातिनिष्ठशक्यताव्यधिकरणत्वेन शक्यताऽवच्छेदकत्वानुपपत्त्या वृषभादिबोधो दुर्वार एवेति वाच्यम्, एतदनुरोधेनान्यलभ्यत्वेऽपि व्यक्तौ शक्तिस्वीकारादिति चेद् ? न, यद्धर्मविशिष्टे शक्तिस्तद्धर्माश्रयस्य यावत एव शक्यत्वनियमेन गोत्वस्य शक्यत्वे वृषभादेरपि तथात्वापत्तेः, धानकर्म-

त्वविशिष्टाया गोः शक्यत्वे च गोनिष्ठधानकर्मताव्यक्तीनामेव विशेषणतया; तासां च महिष्यादिव्यावृत्ततया महिष्यादेः शक्यताऽऽपत्तिविरहादिति वदन्ति ।

---

मञ्जूषा ।

धानकर्मता=वत्सकर्तृकदुग्धपानकर्मता, "धेट्, पाने" इति धातुस्मरणात् पानं च दुग्धविभागावच्छिन्नगलाधःसंयोगानुकूलव्यापारः, कर्मत्वस्याश्रयानवच्छिन्नत्वरूपविशेषणगर्भत्वान्न दुग्धादेः कर्मतेति न स्तनं दुग्धं धयतीति द्विकर्मकता, न च जातिशक्तिवादिनामत्र विशिष्टे शक्तिकल्पने किं बीजमिति वाच्यं, तन्मते यद्येन विना न भासते तद्भासकस्यैव तद्भासकता, जातिश्चाश्रयं विना न भासत इति तत्र नाश्रये शक्तिः, धानकर्मतायाश्चाश्रयं विनाऽपि भानान्न तद्भासकस्य व्यक्तिभासकत्वमिति विशिष्टशक्तिरावश्यकी, न च धीयतेऽसौ धेनुरिति व्युत्पत्त्या धेनुशब्दस्य धानकर्मताविशिष्टे योगशक्तिरेव न तु रूढिः, पङ्कजपदस्येव पङ्कजनिकर्तरीति वाच्यम्, औणादिकानां योगार्थानुपगमाद्, रूढ्यैवार्थबोधकत्वाद्, अत एव भगवान् पाणिनिर्"उणादयो बहुलमि"त्येकेनैव सूत्रेण कारुः वायुः धेनुरित्यादीन्सस्मारेति। शक्त्युपाधित्वेनेति। अशक्यः सन् शक्यताऽवच्छेदकः शक्त्युपाधिः, स च शाब्दबोधविषयः, शक्यताऽनवच्छेदकः सन्प्रतियोगिनियन्त्रकः शाब्दबोधाविषयः प्रयोगोपाधिरित्यनयोर्भेदः, व्यक्तिवचनानां सन्निहितविशेषपरत्वमिति न्यायेन यत्किंचिद्व्यक्तेर्विषयत्वेन महिष्यादिभानं स्यादित्यत्राह-शक्तिनियन्त्रकत्वादिति। गोनिष्ठशक्तिताविषयतायाः शाब्दबोधविषयत्वनियामकत्वादित्यर्थः। अनुभवे विवादादाह-धानेति। घटो नास्तीत्यादौ यत्किंचित्प्रतियोगिनो भानेऽप्यभानप्रतियोग्यधिकरणे तदप्रत्ययादिति भावः। गोत्वस्य शाब्दबोधे भानमिष्टमेव न च तावता वाच्यत्वापत्तिरिति समाधत्ते-अशक्यस्येति ।

शक्यताऽवच्छेदकत्वानुपपत्त्येति। जातिनिष्ठशक्यताव्यधिकरणत्वेनेति शेषः। क चित्तथैव पाठः। धानकर्मरूपधर्मिणोऽशक्यत्वेन धानकर्मत्वस्य न तदवच्छेदकत्वसंभव इति भावः ।

माधवी ।

धानकर्मता=वत्सकर्तृकदुग्धपानकर्मता, विशिष्ट इति । शक्यत्वे सति शक्यताऽवच्छेदकं विशेषणम्, अशक्यं सत् शक्यताऽवच्छेदकं शक्त्युपाधिः,

गोत्वस्योपाधित्वेन शक्तिनियन्त्रकत्वात् शक्तिनिष्ठविशेषणताऽतिरिक्तगवेतरावृत्तित्वप्रयोजकत्वाद् विशेषणभिन्नवृत्तित्वविशिष्टशक्तिव्यापकत्वादिति यावत् । धानकर्मताविशिष्टायां गवि लक्षणयाऽपि विशेषदर्शिनामपि प्रयोगसंभवादाह–मुख्यतया चेति । अनतिप्रसक्तत्वानियतत्वादिति । अथ गोत्वस्येव धानकर्मत्वस्यापि शक्यताऽवच्छेदकतया शक्यताऽवच्छेदकतापर्य्याप्त्यधिकरणयोर्महानसीयवन्ह्यभावप्रतियोगिताऽवच्छेदकतापर्य्याप्त्यधिकरणमहानसीयत्ववन्हित्वयोरिवातिरिक्तवृत्तित्वसम्भवात् कथमवच्छेदकतायामनतिरिक्तवृत्तित्वस्वीकारः कथं च धानकर्मताविशिष्टगोत्वस्यावच्छेदकत्वोपगम इति चेद्? न, धानकर्मत्वे विशेषणविधया विलक्षणावच्छेदकत्वं शक्यताऽवच्छेदकत्वं गोत्व उपाधितया विलक्षणावच्छेदकत्वं स्वशक्यताऽवच्छेदकत्वमित्युभयसाधारणस्यासत्त्वात्, तादृशतादृशावच्छेदकतापर्य्याप्त्यधिकरणं प्रत्येकमेवेति गोत्वस्य शक्यताऽतिरिक्तवृत्तितया तादृशावच्छेदकत्वासंभवादवच्छेदकताया अनतिप्रसक्तत्ववृत्तित्वनियतत्वस्वीकाराद् धानकर्मत्वसहितगोत्वस्यावच्छेदकत्वस्वीकाराच्च । शक्यत्वे सति शक्यवृत्तित्वं विशेषणं, न त्ववच्छेदकत्वघटितमिति धानकर्मत्वेऽवच्छेदकत्वस्यैवाभावात् तथा स्वीकार इति केचित् । धानकर्मत्वसहितस्यैव गोत्वस्यावच्छेदकत्वोपगमात् तथा च धानकर्मत्वगोत्वोभयमेव शक्यताऽवच्छेदकमिति भाव इत्यपि पङ्क्तिव्याख्यां कुर्वन्त्यन्ये । अथ गोत्वमेव शक्यमिति । यद्यपि गोत्वविशिष्टमेव शक्यमित्येव वक्तुमुचितं तथाऽपि गोत्वविशिष्टस्य शक्यत्वे गोत्वस्यापि शक्यत्वमावश्यकमिति ।

विनोदिनी ।

धेनुपदशक्तिविषये गुरुमतं दर्शयति–प्राभाकरास्त्विति ।

धानकर्मताविशिष्ट इति । धानस्य = दुग्धप्रतियोगिकविभागजनकत्वविशिष्टदुग्धप्रतियोगिकगलाधःसंयोगानुकूलव्यापाररूपपानस्य, कर्मता=फलं, तच्च दुग्धप्रतियोगिकविभागानुयोगित्वात्मकं, तया विशिष्टे=तत्फलस्याश्रये पदार्थे ।

गुरूणामपि मते शक्तेः पदार्थान्तरतया पदानुयोगिकार्थप्रतियोगिकसंबन्धपरतायाः एव वक्तव्यत्वेन तत्प्रतियोग्यर्थो जातिशक्त्युपगमाद् यथा घटत्वादिस्तथा प्रकृतेऽपि धानकर्मत्वमेव कुतो न धेनुपदशक्यमुक्तमिति तु न चोद्यम्, ऋते घटादिकं घटत्वादि भानानर्हमिति घटत्वादिभासकभास्यता घटादौ सूपपादा, धानकर्मता तु व्यक्तिं विनाऽपि भानार्हेति वैषम्याद् विशिष्टानुसरणमिति हृदयम् ।

विनोदिनी ।

शक्त्युपाधित्वेन=अशक्यत्वविशिष्टशक्यताऽवच्छेदकत्वेन । अनतिप्रसक्तत्वानियतत्वादिति । कारणत्वाभाववत्यपि दण्डत्वादौ कारणताऽवच्छेदकत्ववत्; शक्यत्वाभाववत्यपि शक्यताऽवच्छेदकत्वसत्त्वे बाधकाभाव इति भावः ।

---

तन्मते यद्यपि शक्तिज्ञानाधुनिकसङ्केतज्ञानयोः कारणताभेदेन गौरवं न बाधकं, भगवद्विद्वेषिणांमीमांसकानां शक्तेः सङ्केतानात्मकतया तयोरेककारणतायाः कथमप्यसम्भवात्; तथाऽपि गोनिष्ठधानकर्मताव्यक्तीनामनतिप्रसक्तानुगमकरूपाभावान्न शक्यत्वप्रसङ्गः। न च सामानाधिकरण्यसंबन्धेन गोत्वमेव धानकर्मत्वसहितंधानकर्मताविशेषाणामनुगमकमिति वाच्यम्, अशक्येन शक्यानुगमे सर्वत्रैव विशेषणशक्त्युच्छेदप्रसङ्गाद्, अतिप्रसक्तेनापि धानकर्मतात्वेन विशिष्टे धानकर्मताविशेषे शक्तिग्रहोपगमे लाघवाद्गोत्वविशिष्ट एव गोविशेषे शक्तिर्धानकर्मत्वमेव शक्त्युपाधिरित्येवोचितम् । अननुगतेन तत्तद्धानकर्मतात्वेन शक्तिग्रहोपगमे चापूर्वव्यक्तेरलाभप्रसङ्ग इत्यनुपपत्तिश्चिन्त्या ।

---

मञ्जूषा ।

शक्तिज्ञानेति । धेनुपदाद्धानकर्म गौर्बोद्धव्येत्याकारकशक्तेर्गोपदाद्धानकर्मगोत्वेन गौर्बोद्धव्येत्याधुनिकसंकेतस्य च धानकर्मगोत्वावच्छिन्नत्वावच्छिन्नप्रकारतागर्भसंबन्धेन पदप्रकारकधानकर्मगोत्वावच्छिन्नविशेष्यकज्ञानस्यैकहेतुत्वानुरोधेन नैयायिकानां धानकर्मत्वगोत्वयोः शक्यत्वसिद्धिः । बोधविषयत्वप्रकारतानिरूपितसंकेतीयधर्मिताऽवच्छेद-

कत्वरूपशक्यताऽवच्छेदकत्वस्य शाब्दबोधप्रकारताप्रयोजकत्वमते शक्तिज्ञानाधुनिकसंकेतज्ञानयोर्नैकरूपेण कारणत्वसंभवः, तथा सति घटपदाद् द्रव्यत्वेन घटो बोद्धव्य इत्याधुनिकसंकेतज्ञानादपि घटत्वप्रकारकशाब्दबोधापत्तेः। गुरूणां तु धेनुपदस्थले विशेषणीभूतगोत्वाद्यंशे शक्त्यनुपगमादुक्तशक्यताऽवच्छेदकत्वस्यैव शाब्दबोधप्रकारताप्रयोजकत्वाभ्युपगमापत्त्या शक्तिज्ञानाधुनिकसंकेतज्ञानयोः कारणताभेदो दुर्वार इत्यर्थः। गुरूणां तद्बोधौपयिकसामर्थ्यं शक्तिरिति मते गोत्वशक्तित्वं दुर्वारमिति तु विचार्यम्। सामानाधिकरण्येनेति। सामानाधिकरण्यस्वरूपोभयगर्भेणेत्यादिः। शक्त्युपाधिरिति। नैयायिकनये शक्त्युपाधेरपि शक्यत्वं, तैरशक्यस्य संसर्गताऽन्यशाब्दबोधविषयत्वानुपगमाद्, अत एव तन्मते पङ्कजादिपदे रूढ्या पद्मत्वबोधः।

प्राभाकरास्तु पद्मत्वं प्रयोगोपाधिः, तत्त्वं च तत्पदाधीनशाब्दबोधे भासमानत्वे सति तत्पदाधीनशाब्दबोधहेतुत्वं, पङ्कजमित्यादौ चावयवशक्तिज्ञानाधीनशाब्दबोधे हेतोः पद्मत्वादेः पङ्कजनिकर्तरि पद्म एव सत्त्वाच्छाब्दबोधो; न तु तादृशेऽपि कुमुदादौ, पद्मान्वयानुपपत्तिज्ञानदशायां च कुमुदादौ लक्षणया पङ्कजपदप्रयोगः, तथा चोक्तं गुरुमतस्थचिन्तामणौ "यथा तत्त्वमहमित्यादिसर्वनामपदेषु बुद्धिस्थत्वबोध्यत्वोच्चारयितृत्वादीनि प्रयोगोपाधयस्तेन बुद्धिस्थत्वादिकं न बोध्यते; तथा पङ्कजादिपदेष्वपि पद्मत्वादिकं प्रयोगोपाधिः, अतस्तत्र पद्मत्वादिकं न बोध्यत" इति। न च बुद्धिस्थत्वोपलक्षितधर्मविशिष्टे सर्वनामपदशक्तिरिति कल्पे कथं प्रयोगोपाधित्वं? विषयताऽवच्छेदकतासंबन्धेन शाब्दबुद्धिं प्रति धर्मानुगमकस्य बुद्धिस्थत्वादेर्हेतुत्वाद्। नन्वेवं सोऽयं न वेति संशयो न स्यात्? चैत्रत्वादिधर्मविशिष्टस्य तादृशधर्मस्य वा बुद्धिस्थत्वेन तदिदंपदेनोपस्थापने चैत्रश्चैत्रो न वेत्युल्लेखे नियमत आहार्यत्वप्रसङ्गः स्याद्, तत्संशयस्येदंपदादिबोद्धव्यत्वप्रकारकत्वोपगमादित्याहुः।

तन्न—तथा सति कुमुदादिमति पद्मं नास्तीतिशाब्दबोधानुपपत्तेः, एवं च धेनुपङ्कजपदादीनामविशेषाद् दर्शितव्युत्पत्त्या धानकर्मपङ्कजनिकर्त्रादौ यौगिकी शक्तिः गोत्वपद्मत्वादिकं तु शाब्दाप्रकारत्वेऽपि स्वाभाववत्तासंबन्धेन स्वशून्यविषयकशाब्दबोधप्रतिबन्धकं न तु शक्यमित्यपास्तम्। धेनुपपदस्यौणादिकतया योगाभावेन केवलरूढेरुपगमात् पङ्कजादिपदस्यानौणादिकतया योगसत्त्वेऽप्युक्तशाब्दबोधानुपपत्तिवारणाय रूढेरप्यावश्यकत्वाद्।

माधवी ।

सामानाधिकरण्येन गोत्वमेवेति । तथा च तादृशसंबन्धेन गोत्वविशिष्टधानकर्मत्वमेव गोनिष्ठधानकर्मत्वव्यक्तीनामनुगमकमिति भावः । अशक्यं शक्यानुगमकमिति मीमांसकसिद्धान्तानुसारेणोत्तरयति-शक्येनेति । शक्त्युच्छेदकप्रसङ्गादिति । तथा च तादृशनियमानुसारेणैव तेषां विशेषणे शक्तिस्वीकारः, अशक्येन शक्यानुगमे च विशेषणे शक्तिविरहेऽपि तेन रूपेण शक्त्यनुपगमसम्भवाद् व्यर्थो विशेषणे शक्ति स्वीकार इति भावः ।

विनोदिनी ।

शक्तिज्ञानाधुनिकसंकेतज्ञानयोरिति । धानकर्मताविशिष्टगोत्वोपाहितशक्तं धेनुपदमितिशक्तिज्ञानस्य धेनुपदाद् धानकर्मगवी बोध्येत्याधुनिकसंकेतज्ञानस्य चेत्यर्थः । अपूर्वेति । शक्तिग्रहविषयताऽनापन्नधानकर्मतारूपेत्यर्थः ।

---

यथा नानाधर्मविशिष्टैकधर्मिवाचकपदाच्छक्तिप्रमातो नैकधर्मं परित्यज्य धर्मी प्रतीयते तथा चन्द्रत्वसूर्यत्वनानाधर्मविशिष्टनानाधर्मिवाचकपुष्पवन्तादिपदाच्चन्द्रत्वादिकं परित्यज्य न सूर्यत्वादिप्रकारको बोधः । अथात्र हरिपदशक्तिज्ञानादिव दिवाकरः पुष्पवन्तपदवाच्य इत्याकारकशक्तिज्ञानात्केवलसूर्यत्वप्रकारकबोधो दुर्वारः । न च पुष्पवन्तादिपदशक्तिज्ञानेन सूर्यत्वादिप्रकारकशाब्दबोधजनने चन्द्रत्वादिप्रकारकशक्तिज्ञानस्यापि सहकारितोपगमान्नातिप्रसङ्ग इति वाच्यम् । तस्य हर्यादिपदवन्नानार्थताग्रहदशायां भ्रान्तस्य केवलसूर्यत्वादिप्रकारकग्रहस्याप्युत्पत्तेः । एवं तत्पदस्य हर्य्यादिपदवन्नानाधर्मवच्छिन्नवाचकतया नानार्थताप्रसङ्गो दुर्वारः । न

चार्थद्वये तस्यैकस्या एव शक्तेरुपगमान्न नानार्थता; नानाशक्तिमत एव नानार्थत्वोपगमादिति वाच्यम् । शक्यताऽवच्छेदकभेदेन शक्तिभेदस्यावश्यकत्वाद्, अवच्छेदकभेदस्यावच्छेद्यभेदनियतत्वाद्, अन्यथा हर्यादिपदेष्वपि शक्त्यैक्यापत्तेः ।

---

मञ्जूषा ।

नानाधर्मेत्यादि । यथा स्वर्गधेन्वादिपदं दुःखासंभेदसुखत्वोभयधानकर्मत्वगोत्वोभयादिविशिष्टार्थकम् । नानाऽर्थतेति । विरुद्धनानाऽर्थधर्मवृत्तिनानाशक्यताऽवच्छेदकताकत्वेत्यर्थः । भ्रान्तस्येति । तत्र नानाशक्यताऽवच्छेदकनिष्ठव्यासज्यवृत्त्येकशक्यताऽवच्छेदकतांशे नानात्वज्ञानं भ्रमः । उत्पत्तेरिति । तथा च व्यभिचारात्तस्य सहकारित्वमेवासिद्धमित्याशयः । नानाऽर्थतेति । नानाशक्यताऽवच्छेदकताकत्वेत्यर्थः ।

माधवी ।

पुष्पवन्तपदशक्तिं विचारयितुं भूमिकां रचयति–यथा नानेति ।

विनोदिनी ।

पुष्पवन्तेति । मतुबन्ततया पुष्पवदादीत्यादिपाठः साधुः पुष्पवन्तेत्याद्युक्तिस्तु प्रमादागतेति केषांचित्कथनं तु शब्दस्वरूपानभिज्ञताप्रयुक्ततयोपेक्षणीयं वैयाकरणैः । साधुत्वं चास्य भौवादिकाद्रक्षणाद्यर्थकादवते "जॄविशिभ्यां झजि"त्यानुशासनिके झच्यौणादिकताप्रयुक्तधात्वन्तरप्रकृतिकत्वस्याप्यवगमेऽवन्तपदस्य प्रकाशपरघञन्तपुष्पपदेन षष्ठीतत्पुरुषे शकन्ध्वादित्वात्पररूपे च निर्विवादमेवेति शाब्दिकरूपा विदाङ्कुर्वन्तु, न चेष्टकाक्षेपलिप्तकर्दमक्षालनमनुहरतीयं परिपाटीति सांप्रतम्, "प्राक्प्रत्यग्धरणीधरशिखरस्थितपुष्पवन्ताभ्यामि" त्यादिनाऽस्य महाकविपरिशीलितचरत्वाकलनादित्यलमनत्यावश्यकविचारेण ।

शक्यताऽवच्छेदकभेदेनेति । अत्र भावप्रधाननिर्देशादरेण शक्यताऽवच्छेदकताभेदेनेत्यर्थो बोध्यः, तेन दुःखासंभेदसुखत्वयोः स्वर्गपदशक्यताऽवच्छेदकयोर्भेदेऽपि स्वर्गपदस्यैकशक्तिकत्वम्, अत्र शक्यताऽवच्छेदकताया व्यासज्यवृत्तितया भेदाभावादिति भावः ।

---

अत्र शक्त्याख्यपदपदार्थसंबन्धान्तरवादिनो मीमांसकानुयायिनः—यथा धानकर्मत्वगोत्वादिरूपशक्यताऽवच्छेदकभेदेऽपि धेन्वादिपदानां न शक्तिभेदः, अवच्छेदकताया व्यासज्यवृत्तित्वात्, तथा प्रकृतेऽपि चन्द्रत्वसूर्यत्वयोर्व्यासज्यवृत्तिशक्यताऽवच्छेदकतास्वीकारान्न शक्तिभेदः, न वैकं परित्यज्यान्यप्रतीतिः । केवलसुर्यत्वादिप्रकारकबोधे केवलतद्धर्मे शक्यताऽवच्छेदकतापर्याप्त्यवगाहिज्ञानस्य हेतुत्वात् । चन्द्रत्वसूर्यत्वोभयांशे शक्यताऽवच्छेदकतापर्याप्त्यवगाहिज्ञानस्य चोभयप्रकारकबुद्धित्वं कार्यताऽवच्छेदकमतस्तादृशशक्तिज्ञानाच्चन्द्रत्वावच्छिन्नान्वयबोधौपयिकयोग्यताज्ञानाद्यसत्त्वे न सूर्यत्वावच्छिन्नान्वयबोधप्रसङ्गः । नानाऽर्थपदाच्च प्रत्येकधर्मावच्छिन्नस्यापि प्रतीत्या तत्र प्रत्येकमेवावच्छेदकत्वपर्याप्तिरवश्योपगन्तव्यतया शक्यताऽवच्छेदकताभेदेन शक्तिभेदः

---

माधवी ।

केवलतद्धर्मे शक्यताऽवच्छेदकत्वपर्य्याप्त्यवगाहिज्ञानस्य हेतुत्वादित्यनन्तरं नाभ्रान्तानां शक्तिप्रमातः पुष्पवन्तपदात् केवलसूर्यत्वादिप्रप्रकारको बोध इति पूरणीयम्, अतो न पञ्चम्यर्थद्वयासङ्गतिरति । उभयप्रकारकबुद्धित्वमिति । अत्र घटपदं चन्द्रत्वसूर्यत्वावच्छिन्नशक्यताकमितिज्ञानजन्यचन्द्रत्वसूर्यत्वप्रकारकबोधे चन्द्रसूर्य्यपदाधीनबोधे च व्यभिचारवारणाय पुष्पवन्तपदधर्मिकतादृशशक्तिज्ञानाव्यवहितोत्तरत्वनिवेशस्यावश्यकतया चन्द्रत्वसूर्यत्वोभयप्रकारकत्वस्य प्रत्येकविषयकत्वस्य निवेशनं निष्प्रयोजनमिति चेद् ? न, तादृशशक्तिज्ञानाव्यवहितोत्तरत्वमात्रस्य तादृशशक्तिज्ञानकार्यताऽवच्छेदकत्वे तादृशशक्तिज्ञानधर्मिकाप्र-

माण्यग्रहदशायां तादृशशक्तिज्ञानाव्यवहितोत्तरत्वावच्छिन्नस्योत्पन्नतयाऽप्रामाण्यग्रहाभावविशिष्टतादृशज्ञानस्य व्यभिचारात् कार्यताऽवच्छेदके चन्द्रत्वसूर्यत्वादिरूपविषयविशेषनिवेशस्यावश्यकत्वात्। न चाप्रामाण्यग्रहास्कन्दिततादृशशक्तिज्ञानोत्तरं चन्द्रसूर्यादिपदाधीनचन्द्रत्वसूर्यत्वादिप्रकारकबोधे तत्र तादृशविषयविशेषनिवेशेऽपि व्यभिचारः, अतस्तद्वारणायाप्रामाण्यग्रहाभावविशिष्टतादृशशक्तिज्ञानाव्यवहितोत्तरत्वस्याप्रामाण्यग्रहाभावविशिष्टतादृशशक्तिज्ञानकार्यताऽवच्छेदके निवेशनीयतया विषयविशेषनिवेशेऽपि नोक्तस्थले व्यभिचार इति वाच्यम्। अप्रामाण्यज्ञानात्तत्तद्व्यक्तित्वेनोत्तेजकत्वपक्षे तादृशस्थले तत्तदप्रामाण्यज्ञानानामुत्तेजककोटावप्रवेशादेव तत्र व्यभिचाराभावात्। एवञ्च तादृशशक्तिज्ञानाव्यवहितोत्तरत्वमात्रस्य कार्यताऽवच्छेदकत्वे तादृशशक्तिज्ञानधर्मिकाप्रामाण्यग्रहदशायां तादृशाप्रामाण्यज्ञानव्यक्तेरनुत्तेजकत्वे तदुत्तरं चन्द्रत्वसूर्यत्वप्रकारकशाब्दबोधापत्तेः; उत्तेजकत्वे तादृशशक्तिज्ञानाव्यवहितोत्तरत्वावच्छिन्नस्योत्पन्नतया व्यभिचार इति तद्वारणाय तादृशाप्रामाण्यज्ञानाभावविशिष्टतादृशशक्तिज्ञानाव्यवहितोत्तरत्वावच्छिन्नं प्रति तादृशतादृशाप्रामाण्यग्रहाभावविशिष्टतादृशशक्तिज्ञानत्वेन कार्यकारणभावकल्पने कार्यताऽवच्छेदके तत्तदप्रामाण्यग्रहाभावनिवेशापेक्षया लाघवात् कार्यताऽवच्छेदके चन्द्रत्वसूर्यत्वप्रकारकशाब्दत्वनिवेशो युक्त इति दिक्।

न सूर्यत्वावच्छिन्नान्वयबोधप्रसङ्ग इति। न च चन्द्रत्वसूर्यत्वोभयांशे शक्यताऽवच्छेदकत्वपर्याप्त्यवगाहिज्ञानस्य सूर्यत्वादिप्रत्येकविषयत्वस्य कार्यताऽवच्छेदकत्वेऽपि चन्द्रत्वावच्छिन्नान्वययोग्यताविरहेण तादृशशक्तिज्ञानाद् न सूर्यत्वावच्छिन्नान्वयबोधप्रसङ्गः, पारमार्थिकसामग्र्या एव कार्योत्पत्तिव्याप्यत्वात्, पारमार्थिकसूर्यत्वावच्छिन्नान्वयबोधसामग्री च चन्द्रत्वसूर्यत्वोभयांशे शक्यताऽवच्छेदकतापर्याप्त्यवगाहिज्ञानघटितचन्द्रत्वसूर्यत्वावच्छिन्नान्वयबोधसामग्री, केवलसूर्यत्वे पुष्पवन्तादिपदशक्यताऽवच्छेदकत्वे पर्याप्त्यवगाहिभ्रमात्मकज्ञानघटितसामग्र्यपि, तथा च तादृशतादृशपारमार्थिकयत्किञ्चिद्व्यक्तिसामग्रीविरहाद् नोक्तापत्तिसम्भवः। न च प्रत्येकविषयकत्वमन्तर्भाव्य कार्यकारणभावद्वयकल्पनामपेक्ष्य चन्द्रत्वसूर्यत्वोभयविषयकत्वमन्तर्भाव्यैककारणकल्पनैव लघीयसी, एतन्मते व्यासज्यवृत्तिकारणताऽवच्छेदकत्वानङ्गीकारान्न गुरुतरकार्यकारणभावद्वयशङ्काऽपीति वाच्यम्। तथा सत्युभयविषयकत्वस्य कार्यताऽवच्छेदकत्व उक्तयुक्त्यभिधानस्यैवोचितत्वेन सूर्यत्वावच्छिन्नान्वयबोधप्रसङ्गरूपयुक्त्यभिधानस्योन्मत्तप्रलपित-

त्वापत्तिरिति वाच्यम् । पारमार्थिकसामग्र्याइव विशेषसामग्रीसमवहितायास्सामान्यसामग्र्या अपि कार्योत्पत्तिव्याप्यत्वात् , अत एव मथुरानाथतर्कवागीशेनापि सामान्यलक्षणायां ज्ञानलक्षणाविचारे विशेषसामग्रीसमवहितायाः सामान्यसामग्र्याः फलोपधायकत्वाद्यभिहितम् । तथा च चन्द्रत्वसूर्यत्वोभयांशे शक्यताऽवच्छेदकतापर्याप्त्यवगाहिज्ञानस्य प्रत्येकविषयकत्वस्य कार्यताऽवच्छेदकत्वे चन्द्रत्वाद्यन्वययोग्यताविरहे तादृशतादृशविशेषसामग्रीसमवहितायाः सूर्यत्वादिप्रकारकान्वयबोधजनकबाधनिश्चयाभावादिघटितसामग्रीसत्त्वात् सूर्यत्वादिप्रकारकान्वयबोधप्रसङ्गो दुर्वार एवेति दिक् ।

विनोदिनी ।

स्वीकारान्नेति । शक्तिभेदस्य शक्यताऽवच्छेदकभेदनियम्यत्वादिति भावः । अत इति । चन्द्रत्वसूर्यत्वोभयत्वत्रये पुष्पवन्तपदशक्तिज्ञानकार्यतावऽवच्छेदकतायाः पर्य्याप्तेरित्यर्थः ।

---

अथावच्छेदकताग्राहकमानेनैकधर्मिनिष्ठैकविशेष्यतानिरूपितविशेषणताऽऽपन्नेष्वेव नानाधर्मेष्ववच्छेदकतापर्याप्तिर्गृह्यतेऽतो महानसीयो नास्ति वन्हिर्नास्तीत्याकारकं महानसीयत्ववन्हित्वादिविशेषणपुरस्कारेण पृथक् पृथक् प्रतियोगिविषयकं ज्ञानं महानसीयत्ववन्हित्वादिपर्याप्तप्रतियोगिताऽवच्छेदकताकं विशेषाभावं नावगाहते, अपि तु शुद्धवन्हित्वावच्छिन्नाभावमेवेति कथं दिवाकरनिशाकरशक्तं पुष्पवन्तपदमित्यादिशक्तिग्रहे चन्द्रत्वसूर्यत्वोभयस्मिन् शक्यताऽवच्छेदकतापर्याप्तिभानं , तत्र धर्मिणोश्चन्द्रसूर्ययोर्भेदेन तन्निष्ठविशेष्यताया ऐक्यासम्भवादिति चेद् ?

न, यतो यत्रावच्छेदकीभूतव्यासज्यवृत्तिधर्मान्तरधर्मि-

ताऽवच्छेदकतया धर्मद्वयादेर्भानं तत्र भिन्नधर्मिविशेषणताऽऽपन्नेष्वपि तावद्धर्मेष्वेकावच्छेद्यतानिरूपितावच्छेदकत्वपर्याप्तिः प्रतयिते, कथमन्यथा घटपटौ न स्त इत्याकारकोभयत्वावच्छिन्नाभावप्रतीतौ घटपटादिरूपप्रातियोगिविषयताया भेदेऽप्यभावीयविषयताया ऐक्यात्समूहालम्बनविलक्षणायामुभयत्वादिधर्मिताऽवच्छेदकतया भासमानघटत्वपटत्वादिषु तादृशाभावप्रतियोगिताऽवच्छेदकतापर्याप्तिभानम् ?

एवं च दिवाकरनिशाकरयोः शक्तमेतत्पदमित्याकारकशक्तिग्रहे विषयताया ऐक्यात्समूहालम्बनाविलक्षणे;उभयत्वधर्मिताऽवच्छेदकताऽऽपन्नचन्द्रत्वसूर्यत्वयोः शक्यताऽवच्छेदकत्वपर्याप्तिभानमविरुद्धमिति न दोषः। न चैवमुभयाभावप्रतियोगितायामुभयत्वस्येव प्रकृतउभयत्वस्याप्यवच्छेदककोटिप्रवेशप्रसङ्ग इति वाच्यम्। अभावबुद्धौ प्रतियोग्यंश उपलक्षणस्याप्रकारत्वनियमादुभयत्वस्य प्रतियोगिताऽवच्छेदकत्वध्रौव्यात, शक्तिग्रहे च शक्यांश उपलक्षणस्योभयत्वस्य प्रकारत्वोपगमेन तस्य शक्यताऽनवच्छेदकत्वात्।

अस्तु वा प्रकृत उभयत्वसहितमेव चन्द्रत्वसूर्यत्वोभयं शक्यताऽवच्छेदकं द्वावित्यत्रेव पुष्पवन्तावित्यत्रापि प्रकृतिविभक्तिभ्यामुपस्थितस्य द्वित्वस्य सकृदेव

भानं, विरुद्धयोरेकावच्छेदकत्वपर्याप्तिरपि घटत्वपटत्वाद्योरुभयाभावप्रतियोगिताऽवच्छेदकत्वपर्याप्तिवत्प्रकृतं न विरुध्यते । न च घटपटौ न स्त इत्यत्रोभयत्व एव प्रतियोगिताऽवच्छेदकत्वं भासते न तु विरुद्धघटत्वपटत्वादाविति वाच्यम् । केवलोभयत्वे तादृशाभावप्रतियोगिताऽवच्छेदकतायाः पर्याप्तौ यत्किंचिदुभयवति तादृशाभावप्रतीत्यनुपपत्तेः । न च सामानाधिकरण्यसम्बन्धेन घटत्वपटत्वरूपावच्छेदकधर्मेण व्यावृत्तस्योभयत्वविशेषस्यैव तत्रावच्छेदकत्वं प्रतीयत इति वाच्यम् । तेन प्रकारेण तत्रोभयत्वस्याभानात्, तत्तद्रूपाणां तत्तद्धर्मिविशेषणतयैव भानात् । अतिप्रसक्तधर्मप्रकारेण भासमाने चावच्छेदकत्वपर्याप्तिभानानुपगमात् । तत्रोभयत्वविशेषेऽभावप्रतियोगिताऽवच्छेदतापर्याप्त्युपगमेऽत्राप्युभयत्वविशेषे शक्यताऽवच्छेदकतापर्याप्तिसम्भवाच्चन्द्रत्वसूर्यत्वयोरवच्छेदकताऽवच्छेदकतयैव शाब्दबोधे भानोपपत्तिः । न च शक्यताऽवच्छेदकताऽवच्छेदकमवच्छेदकविशेषणतयैव भासत इति चन्द्रत्वसूर्यत्वयोस्तथात्वे चन्द्रसूर्यांशे प्रकारतया शाब्दबोधे भानानुपपत्तिरिति वाच्यम् । तयोः शक्यताऽवच्छेदकताऽवच्छेदकत्वेऽपि शक्तिग्रहेऽवच्छेदकाश्रयचन्द्रसूर्यविशेषणतयैव भानात् शाब्दबोधेऽपि तद्विशेषणतया भानसम्भवात् ।

अथ शक्तिग्रहे साक्षाच्छक्यताऽनवच्छेदकस्य तदुभयस्य शक्यचन्द्रसूर्यांशे साक्षात्प्रकारतया भानं न सम्भवतीति चेद् ? घटपटौ न स्त इत्यादौ घटत्वपटत्वयोः साक्षात्प्रतियोगिताऽवच्छेदकत्वमन्तरेण प्रतियोगिविशेषणतया भानासम्भवस्तुल्य एवेत्याहुः ।

---

मञ्जूषा ।

उभयाभावप्रतियोगितायामिति । घटपटौ न स्त इत्यादावभावप्रतियोगितायां घटत्वपटत्वोभयत्वानां प्रतियोगिताऽवच्छेदकत्ववत्प्रकृते चन्द्रत्वसूर्यत्वोभयत्वानां शक्यताऽवच्छेदकत्वप्रसङ्ग इत्यर्थः । ननु व्यासज्यवृत्तिधर्मस्यावच्छेदककोट्यप्रवेशे तद्धर्मिताऽवच्छेदकतया भासमानयोस्तदप्रवेशप्रसङ्ग इत्यत आह—अस्तु वेति । ननूभयत्वेऽपि शक्यताऽवच्छेदकतास्वीकारे पुष्पवन्तावित्यादौ विभक्त्यर्थद्वित्वानन्वयप्रसङ्गः, उद्देश्यताऽवच्छेदकविधेययोरैक्यादित्यत आह—द्वावितीति । पुष्पवन्तावित्यत्र पदसाधुत्वार्थं द्विवचनं प्रत्येकं द्वित्वोपस्थितिरिति भावः । मतदूषणाय दृष्टान्तः, तथा सति द्वावित्यादावपि विभक्तेरशक्यत्वापातात् । केवलोभयत्व इति । अथ प्रतियोगिताऽवच्छेदकतापर्याप्तिमप्रवेश्य प्रतियोगिताऽवच्छेदकावच्छिन्नतया विरोधोपगमे घटत्वपटत्वाद्येकतरप्रतियोगिताऽवच्छेदकावच्छिन्नवति तदुभयाभावासत्त्वप्रसङ्गः, तत्प्रवेशे चावच्छेदकतापर्याप्त्यधिकरणधर्मत्रयविशिष्टाप्रसिद्ध्या तदुभयाभावस्य केवलान्वयित्वं स्यादिति चेद् ? न, समानाधिकरणाधिकरणताद्वयनिरूपिताधेयतयोर्घटपटनिष्ठयोः प्रत्येकं घटत्वपटत्वावच्छिन्नत्ववदुभयत्वावच्छिन्नत्वमपि व्यासज्यवृत्त्युपेयते घटपटोभयवदिति प्रमाऽनुरोधात्, तथा च घटत्वपटत्वोभयावच्छिन्नवत्ताभ्यामेवाभावस्य विरोधः । शाब्दप्रतीतौ धर्मिपारतन्त्र्येण तत्तद्रूपाणां कथं चिदुभयत्वांशे भानोपगमेऽप्याह—अतिप्रसक्तधर्मेति । उभयत्वरूपेत्यादिः । घटत्वपटत्ववैशिष्ट्योपलक्षितोभयत्वस्यानतिप्रसक्तत्वेऽप्याह—तत्रेति । तथात्वे=शक्यताऽवच्छेदकताऽवच्छेदकत्वे । तदुभयस्य=चन्द्रत्वसूर्यत्वोभयस्य । तुल्य एवेति । यदि च; "घटत्वपटत्वयोः,साक्षात्प्रतियोगिताऽनवच्छेदकत्वेऽपि प्रतियोगिविशेषणत्व चन्द्रत्वसूर्यत्वयोः साक्षाच्छक्यताऽनवच्छेदकत्वेऽपि शक्तिग्रहे शक्यचन्द्रसूर्यांशे भानमव्याहतं-तुल्य एवेत्याहुरि"ति पाठस्तदा तुल्य एवेत्यनन्तरम् "अथ द्वित्वान्तर्भावेण

पुष्पवन्तपदशक्तौ विभक्त्युपस्थापितद्वित्वानन्वयप्रसङ्ग इति चेदेवमेव द्वाविति वद् द्विवचनस्य साधुत्वोपगमादि"ति पाठस्तु पूर्वोक्तं विस्मृत्योक्तमिति योज्यः ।

माधवी ।

व्यावृत्तस्य=विशिष्टस्य । अतिप्रसक्तधर्मपुरस्कारेण=उभयत्वेन । ननु घटपटोभयं नास्तीतिप्रतीतौ घटत्वपटत्वोभयधर्मिताऽवच्छेदकत्वोभयत्वभान उभयत्वेऽपि सामानाधिकरण्यसम्बन्धेन घटत्वपटत्वयोर्भाननैयत्यात् तद्रूपेणोभयत्वविशिषेऽवच्छेदकत्वभानसम्भवादाह–उभयत्वविशेष इति । शक्तिग्रहे=चन्द्रसूर्योभयं पुष्पवन्तपदशक्यमिति ग्रहे ।

भानसम्भवादिति । तथा च चन्द्रत्वसूर्यत्वावच्छिन्नविशेष्यतानिरूपितद्वित्वप्रकारकशाब्दबोधं प्रति चन्द्रसूर्योभयत्वावच्छिन्नविशेष्यकसामानाधिकरण्यसम्बन्धावच्छिन्नचन्द्रत्वसूर्यत्वावच्छिन्नोभयत्वविशिष्टावच्छेदकताकपुष्पवन्तपदशक्यताज्ञानत्वेन हेतुतोपगमे शाब्दबोधे तादृशशक्तिज्ञानसम्भवादिति भावः । भानासम्भवस्तुल्य एवेत्याहुरिति । तथा च साक्षात्प्रतियोगिताऽनवच्छेदकस्य प्रतियोग्यंशेऽभानवत्साक्षाच्छक्यताऽनवच्छेदस्य शक्यांशेऽभानमविरुद्धमिति भावः । न च तादृशकार्यकारणभावबलाच्छाब्दबोधे शक्यताऽवच्छेदकचन्द्रत्वसूर्यत्वोभयप्रकारेण चन्द्रसूर्योभयोर्भानोपपादनेऽपि शक्यताऽवच्छेदकप्रकारतया शक्यताऽवच्छेदकंप्रकारताऽवच्छेदकतया शाब्दबोधे भासत इति नियमभङ्ग इति वाच्यम् । सामानाधिकरण्यातिरिक्तसम्बन्धेन शक्यताऽवच्छेदकताऽवच्छेदकस्थल एव तथा नियमादित्यभिप्रायः ।

---

ज्ञानशक्तिवादिनस्तु–चन्द्रत्वसूर्यत्वोभयप्रकारकज्ञानमेव पुष्पवन्तपदशक्यं, पुष्पवन्तपदमुभयप्रकारकज्ञाने शक्तमित्याकारकशक्तिग्रहस्य तादृशज्ञानत्वमेव कार्यताऽवच्छेदकमिति तादृशव्युत्पत्तिमता नैकैकबोधापत्तिरतादृशस्य च भवत्येव तादृशो बोधः । न चैवमपि पुष्पवन्तपदं चन्द्रत्वप्रकारकज्ञाने शक्तमित्यादिबोधस्य प्रमात्वाच्छक्तिभ्रमं विना प्रत्येकबोधानुदय इति कथमु-

पपद्यत इति वाच्यम् । केवलचन्द्रत्वादिप्रकारकबोधे तत्तत्प्रकारकबोधत्वांशे शक्तिनिरूपकताऽवच्छेदकत्वपर्याप्तिग्रहस्य हेतुत्वात्, प्रकृते तूभयप्रकारकबोधत्वांशे शक्तिनिरूपकताऽवच्छेदकत्वपर्याप्त्यभ्युपगमात्, तादृशस्य चन्द्रत्वप्रकारकज्ञाने शक्तमित्यादिज्ञानस्य भ्रमत्वनियमादित्याहुः ।

---

मञ्जूषा ।

व्युत्पत्तिः=शक्तिग्रहः । शक्तिनिरूपकताऽवच्छेदकत्वं=शक्त्यवच्छिन्नजनकतानिरूपितजन्यताऽवच्छेदकत्वम् । भ्रमत्वनियमादिति । केवलचन्द्रत्वप्रकारकबोधत्वे शक्तिनिरूपकताऽवच्छेदकत्वपर्याप्त्यभावादिति भावः ।

माधवी ।

अतादृशस्य=शक्तिज्ञानशून्यस्य। तादृशो बोधः=चन्द्रसूर्यत्वोभयप्रकारको बोधः ।

---

ईश्वरेच्छारूपस्य संकेतस्य शक्तित्वमङ्गीकर्तृसिद्धान्तिपक्षे पुष्पवन्तपदाच्चन्द्रत्वावच्छिन्नविषयकसूर्यत्वावच्छिन्नविषयकशाब्दबोधो भवत्वित्याकारक एव तादृशपदे भगवत्सङ्केतः केवलचन्द्रत्वाद्यवच्छिन्नविषयकबोधश्च न तत्पदजन्यत्वेन तद्विषय इति तादृशपदान्न तथाविधो बोधः । न च तादृशपदजन्यत्वेन केवलचन्द्रत्वाद्यवच्छिन्नविषयकबोधस्य सङ्केताविषयत्वेऽपि चन्द्रत्वाद्यवच्छिन्नविषयकबोधविषयकत्वेन सङ्केतविषयकग्रहस्य चन्द्रत्वादिप्रकारकबोधजनकस्य सूर्यत्वाद्यवच्छिन्नविषयकबोधाविषयकत्वेन सङ्केतग्रहादिघटितसूर्यत्वाद्यवच्छिन्नबोधसामग्र्याम-

सत्यामपि सम्भवात्तद्बलेनाभ्रान्तस्य केवलचन्द्रत्वाद्यव-च्छिन्नविषयकशाब्दबोधो दुर्वार एवेति वाच्यम् । तत्प-दजन्यकेवलचन्द्रत्वादिप्रकारकबोधे तत्पदजन्यकेवलच-न्द्रत्वाद्यवच्छिन्नविषयकबोधत्वपर्याप्तविषयताऽवच्छेदकता-कत्वप्रकारकसङ्केतविषयकज्ञानस्य हेतुत्वात् । पुष्पवन्तप-दजन्यत्वघटितभगवत्सङ्केताविषयताऽवच्छेदकशरीरे च सू-र्यत्वावच्छिन्नविषयकत्वचन्द्रत्वावच्छिन्नविषयकत्वयोर्द्वयो-रेकत्र निवेशात् तत्पदजन्यप्रत्येकधर्मावच्छिन्नविषयकबोध-त्वे संकेतविषयताऽवच्छेदकत्वपर्याप्तिविरहात् तदंशे त-त्पर्याप्त्यवगाहिग्रहो भ्रम एवेति न शक्तिप्रमातः प्र-त्येकधर्मप्रकारकबोधापत्तिः । तत्पदजन्यचन्द्रत्वावच्छि-न्नविषयकसूर्यत्वावच्छिन्नविषयकबोधत्वपर्याप्तविषयताऽव-च्छेदकताकत्वप्रकारकसंकेतग्रहस्य चोभयधर्मप्रकारकबु-द्धित्वमेव कार्यताऽवच्छेदकमतो न तद्घटितसामग्रीब-लादेकधर्मावच्छिन्नान्वयबोधस्य यत्किंचित्कारणविर-हदशायामपरधर्मप्रकारकशाब्दबोधापत्तिः । उभयविष-यकत्वावच्छिन्नाया बोधनिष्ठसंकेतविषयताया ऐक्याच्छ-क्तेरैक्यमिति न तत्पदस्य नानाऽर्थतेति रम-णीयः समाधिः ।

"एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरावि"त्यमर-कोश उक्तिपदं शक्तिपरम्, पुष्पवन्तपदं पुष्पवन्तपदप्र-

तिपाद्यपरं, तथा च सूर्याचन्द्रमसावेकशक्त्या पुष्पवन्तपदप्रतिपाद्यावित्यर्थः । उद्देश्यताऽवच्छेदकावच्छेदेन विधेयान्वये तात्पर्याच्चन्द्रत्वसूर्यत्वयोरेकशक्त्यधीनप्रतिपत्तिविषयताऽवच्छेदकत्वलाभो नातस्तस्मान्नानाऽर्थादिव तादृशैकधर्ममात्रप्रकारको बोधः, नानाऽर्थे शक्तिभेदेन विशेषादिति लभ्यते । अथ वा—एकयोक्त्या=एकोच्चारणेन, सूर्याचन्द्रमसौ=पुष्पवन्तपदप्रतिपाद्यावित्यर्थः, तथा च नानाऽर्थस्थले यथा नावृत्तिमन्तरेण नानाऽर्थबोधः तथा न प्रकृते, अत्र शक्त्यैक्येन सकृदुच्चरितात्सकृदर्थप्रत्यय एवेत्यस्याविषयत्वादिति भावः।

---

मञ्जूषा ।

स्वमतानुसारेणाह—ईश्वरेति । चन्द्रत्वावच्छिन्नविषयकेत्यादिः । पुष्पवन्तपदजन्यचन्द्रत्वावच्छिन्नविषयकसूर्यत्वावच्छिन्नविषयकबोधत्वावच्छिन्नविषयतानिरूपितविषयताप्रकारकसंकेतविषयताऽश्रयौ चन्द्रसूर्याविति शक्तिग्रहः, तस्य च तादृशबोधत्वपर्याप्तावच्छेदकत्वप्रकारतानिरूपितविषयताप्रकारताशालित्वमक्षतम्, एतादृशरीत्या पुष्पवन्तपदवन्तौ चन्द्रसूर्याविति शक्तिग्रहपक्षे, एकविषयतायां चन्द्रत्वसूर्यत्वावच्छिन्नत्वसम्भवेऽपि तद्विषयकबोधत्वावच्छिन्नप्रकारतानिरूपितविषयत्वप्रकारतागर्भसंसर्गो द्रष्टव्यः ।

अत्रेदं रहस्यं–वृक्षात्पतति वृक्षाद्विभजत इतिवद् वृक्षात्त्यजतीत्यादिप्रयोगप्रसङ्गः, विभागावच्छिन्नक्रियारूपत्यागे तद्घटकविभागे वा पञ्चम्यर्थस्य विभागजनकत्वस्यावधिमत्त्वस्य वाऽन्वये बाधकाभावाद् । न च विभागजनकत्वान्वयबोधे धातुजन्यविभागरूपफलानवच्छिन्नव्यापारोपस्थितिर्हेतुः; अवधिमत्त्वान्वयबोधे च विभागमुख्यविशेष्यकोपस्थितिः; त्यजधातुजन्यविभागावच्छिन्नव्यापारोपस्थितिसत्त्वे चैकतरकारणस्याप्यसम्भवान्नोक्तपञ्चम्यर्थान्वयसम्भव इति वाच्यम् । फलव्यापारयोः पृथग्धात्वर्थतामते त्यज्धातुलोऽपि प्राधान्येन विभागस्य तदनवच्छिन्नस्य-

न्दस्य चोपस्थितेः; तद्विषयतादृशार्थयोस्तत्तत्पञ्चम्यर्थान्वयसम्भवादतस्तयोः पृथग्धात्वर्थव्यापारविषयको बोधो भवति, तथा सति शक्तेः समूहालम्बनात्मकबोधनिष्ठतत्तद्विषयत्वावच्छिन्नविभिन्नविषयताकत्वापत्त्या नानाऽर्थवत्कदा चित् फलव्यापारयोरैक्यं परित्यज्याप्यपरबोधप्रसङ्गात्, तथा च विभागे पञ्चम्यर्थावधिमत्त्वान्वयबोधे सङ्केतीयबोधनिष्ठविषयतांशे विभागेतरविषयकत्वानवच्छिन्नत्वावगाहिधातुशक्तिज्ञानं; क्रियांशे पञ्चम्यर्थविभागजनकत्वान्वयबोधे च तादृशबोधनिष्ठविषयतांशे विभागविषयकत्वानवच्छिन्नत्वावगाहिधातुशक्तिज्ञानं हेतुरुपेयत इति न त्यजधातोस्तादृशज्ञानमभ्रान्तस्य सम्भवतीत्यनतिप्रसङ्गाद्, वृक्षात्स्पन्दत इति प्रयोगमनभ्युपगच्छतां मते तादृशप्रयोगवारणाय तादृशविषयतांशे विभागविषयकत्वानवच्छिन्नत्वफलान्तरविषयकत्वावच्छिन्नत्वोभयावगाहिधातुशक्तिज्ञानमिति विशेषः । ईदृशैकशक्तेरपि कर्मप्रत्ययस्थले फलव्यापारयोर्विशेषणविशेष्यभाववैपरीत्येन शाब्दबोधः सम्भवति, विशिष्टशक्तावेव विशेषणविशेष्यभावविपर्यासानिर्वाहात् । अथैवमपि पुष्पवन्तपदादिव शक्त्यविशेषेण सकर्मकधातोरपि विशेष्यविशेषणभावानापन्नयोरेव फलव्यापारयोरन्वयबोधः स्याद् न तु तदापन्नयोरिति चेत्? तर्हि संकेतस्य बोधांशे विशेषणतया भासमानयोः फलव्यापारविषयकत्वयोरवच्छेद्यावच्छेदकभावावगाहित्वमपि निवेश्यं विशेषणविशेष्यभावेन भासमानयोरेव फलव्यापारयोर्विषयिताद्वयमप्यवच्छेद्यावच्छेदकभावापन्नमिति तथैव तयोर्भानं, पुष्पवन्तपदसंकेते च चन्द्रसूर्यविषयतयोरवच्छेद्यावच्छेदकभावस्याभानात्तयोर्विशृङ्खलमेव भानमिति विशेषः। पुष्पवन्तपदस्य संकेतैक्ये चन्द्रसूर्ययोरैक्यं परित्यज्यापराबोधरूपे तत्फले च ग्राहकं कोशं दर्शयति-एकयेति । कोश उक्तिपदस्य शक्तिपरत्वे मानाभावान्न शक्तेरैक्यमिति वादिनं प्रति; उक्त्यैक्यस्य शक्त्यैक्ये पर्यवसायित्वमाह—अथ वेति । सकृदिति। एकानुसंधानावच्छिन्नात्पदादेकशक्यताऽवच्छेदकताऽवच्छिन्नबोध इत्यर्थः ।

माधवी ।

इत्याकारक इति । चन्द्रत्वावच्छिन्नचन्द्रनिष्ठविशेष्यताकसूर्यत्वावच्छिन्नसूर्यनिष्ठविशेष्यताकबोधो भवत्वित्याकारक एवेत्यर्थः। अतश्चन्द्रसूर्ययोर्भगवतः सङ्केते तद्विषयतारूपशक्तेर्नानुपपत्तिरिति ध्येयम् । तादृशशक्तिज्ञानं च चन्द्रसूर्योभयं चन्द्रत्वावच्छिन्नविषयताकसूर्यत्वावच्छिन्नविषयताकबोधत्वपर्याप्तावच्छेदकताका स्वजन्यत्वप्रकारतानिरूपिता या विशेष्यता तन्निरूपितविषयतानिरूपितवृत्तित्वविषयतानिरूपि-

तन्निरूपितत्वसम्बन्धावच्छिन्नविषयतासम्बन्धेन पुष्पवन्तपदवदित्याकारकम्, अतो न चन्द्रसूर्योभयत्वप्रकारकस्मरणविरोध इति ध्येयम्। बोधनिष्ठसङ्केतविषयताया ऐक्यादिति। बोधनिष्ठसङ्केतविषयतानिष्ठपुष्पवन्तपदजन्यत्वप्रकारतानिरूपितचन्द्रत्वसूर्यत्वावच्छिन्नविषयताकबोधत्वपर्याप्तावच्छेदकताकविषयतात्वस्यैक्यादित्यर्थः, अतो बोधभेदेन सङ्केतविषयताया भेदेऽपि नानुपपत्तिः। नानाऽर्थे शक्तिभेदेन विशेषादिति लभ्यत इति। न च पुष्पवन्तपदस्य नानाऽर्थत्वेऽप्यकत्वाश्रयशक्तिप्रयोज्यपुष्पवन्तपदजन्यप्रतीतिविषयताऽवच्छेदकत्वस्य चन्द्रत्वसूर्यत्वयोः सत्त्वाद् नानाऽर्थत्वशङ्काऽनवकाश इति वाच्यम्। सूर्याचन्द्रमसौ प्रयोज्यतासम्बन्धेनैकशक्तिमत्पुष्पवन्तपदजन्या या प्रतीतिः तद्विषयावित्यन्वयबोधे शक्तिनिष्ठैकत्वस्यापि स्वानाश्रयशक्तिप्रयोज्यत्वस्वाश्रयशक्तिप्रयोज्यत्वोभयसम्बन्धेन प्रतीतावन्वयतात्पर्यात्। वस्तुतस्तु चन्द्रत्वसूर्यत्वोभयत्वावच्छिन्नस्वविषयकपुष्पवन्तपदजन्यज्ञानप्रयोजकशक्तिनिष्ठान्योन्याभावप्रतियोगी प्रकृत एकपदार्थः, अन्योन्याभावश्च प्रतियोग्यवृत्तिर्बोध्यः, तेनोभयाभावमादाय नाप्रसिद्धिः, तथा च तत्र सूर्याचन्द्रमसौ तादृशान्योन्याभावाप्रतियोगिशक्तिप्रयोज्यपुष्पवन्तपदजन्यप्रतीतिविषयावित्यन्वयबोधः। इत्थञ्च पुष्पवन्तपदजन्यनानाशक्तिसत्त्वतादृशोभयत्वविषयताज्ञानप्रयोजकशक्तिनिष्ठान्योन्याभावप्रतियोगित्वं शक्तौ बाधितमेव स्यादतस्तादृशकोशाच्छक्तयैक्यलाभः। उक्तिपदस्य शक्तिपरत्वे लक्षणाऽऽपत्तिरत आह—अथ वेति। तत्रापि पूर्वोक्तरीत्याऽर्थः परिष्कार्य इति।

विनोदिनी।

न तथाविधबोध इति। शक्तिप्रमयेति शेषः। शरीर इति। स्ववृत्तिविषयतावृत्त्यवच्छेदकतानिरूपितचन्द्रत्वावच्छिन्नविषयकत्वसूर्य्यत्वावच्छिन्नविषयकत्वबोधत्वैतत्त्रितयावच्छिन्नभगवदिच्छानिरूपितविशेष्यतानिरूपितजन्यत्वप्रकारतानिरूपितपुष्पवन्तपदत्वावच्छिन्नावच्छेदकताकत्वसंबन्धेन चन्द्रसूर्यवत् पुष्पवन्तपदमितीदृशसंकेतज्ञानस्य हेतुतया चन्द्रसूर्योभयस्य यौगपद्येन भानादेकशक्तिविषयकत्वमिति भावः।

---

पुष्पवन्तपदवत्सर्वनामपदानामपि शक्तेरैक्यान्न नानाऽर्थता।

अथ सर्वनामपदेन विशिष्य घटत्वपटत्वादिनैव

बुद्धिस्था घटपटादयः प्रत्याय्यन्ते न तु बुद्धिस्थत्वेन, अत्र घटोऽस्ति तमानयेत्यादिवाक्यजन्यघटकर्मकानयनादिबोधानन्तरं विशिष्टानयनं घटकर्मकं न वेति संशयानुत्पादस्य सर्वानुभवसिद्धतया दुरपह्नवत्वात् । तथा च वक्तृबुद्धिस्थत्वं न सर्वनामपदशक्यताऽवच्छेदकमपि तु घटत्वपटत्वादिकमेवेति तादृशनानाधर्मावच्छिन्नेषु पुष्पवन्तादिपदवन्नैकशक्तिसम्भवः, एकैकधर्ममात्रप्रकारकतत्तदर्थबोधानुपपत्तेरिति सर्वनाम्नां नानाऽर्थत्वं दुर्वारमेव । न वा नानाऽर्थतोपगमेऽपि निर्वाहः, यद्रूपावच्छिन्नगोचरव्यवहारजनकत्वं येन पुंसा तदादिपदे न गृहीतं तदवच्छिन्ने तेन तच्छक्त्यग्रहेण प्रक्रान्तस्यापि तदवच्छिन्नस्य तत्पुरुषीयतदादिपदजन्यबोधविषयत्वानुपपत्तेः ।

न च बुद्धिस्थत्वं प्रकारीभूतघटत्वादीनामनुगमकं तथा च बुद्धिस्थप्रकारवांस्तत्पदशक्य इत्याकारकशक्तिग्रहः, स च तद्धर्मप्रकारेण सामान्यप्रत्यासत्त्या सकलधर्मविषयक एवेति नापूर्वधर्मप्रकारेण बोधानुपपत्तिः, सामान्यप्रत्यासत्त्यनभ्युपगमे तु शक्तिग्रहविशेष्यताऽवच्छेदकप्रकाराश्रयस्यापूर्वधर्मिणः शक्तिग्रहाविषयत्वेऽपि शाब्दबोधे भानवच्छक्तिग्रहधर्मिताऽवच्छेदकताऽवच्छेदकानुगतरूपाश्रयस्यापूर्वधर्मस्यापि शक्तिग्रहविषयतां विना न

शाब्दबुद्धौ भानानुपपत्तिः, शक्तिधियः शाब्दज्ञानसमानविषयकत्वस्यातन्त्रत्वादिति वाच्यम् ।

बुद्धिस्थत्वस्य शक्यताऽवच्छेदकताऽनवच्छेदकत्वेन शक्यताऽवच्छेदकानुगमकत्वायोगाद्, तदवच्छेदकत्वे च तस्यापि शाब्दबुद्धौ शक्यताऽवच्छेदकघटत्वादिविशेषणतया नियमतो भानप्रसङ्गात् स्वरूपतो घटत्वादिप्रकारकशाब्दबोधानिर्वाहाद्, उपलक्षणेनापि शक्यताऽवच्छेदकानुगमे शक्यस्याप्युपलक्षणेनैवानुगमोऽस्तु किं विशिष्टे शक्त्या ?

अथ द्रव्यादिपदाच्च घटत्वादिप्रकारकबोधप्रसङ्गभङ्गाय विशिष्टे शक्तिरभ्युपेयते; प्रकृते च बुद्धिस्थत्वस्योपलक्षणत्वेऽपि तेनानुगमे न किं चिद् बाधकमिति चेद् ? अस्तु बुद्धिस्थत्वेनानुगतधर्मेणाननुगतानां प्रकाराणां शक्तिधीविषयत्वं; तथाऽपि सर्वनाम्नां नानाऽर्थत्वं दुर्वारमेव, साक्षात्परंपरया वा यदवच्छेदकन्तदैक्यादेवावच्छेद्यैक्याद्; बुद्धिस्थत्वस्य चातथात्वाद्, उपलक्षणैक्येन शक्तेरैक्ये हरिपदादिशक्यताऽवच्छेदकानामप्युपलक्षणीभूतेनान्ततो बुद्धिविशेषविषयत्वादिनाऽनुगमसम्भवेन नानाऽर्थमात्रोच्छेदप्रसङ्गात् । एवं बुद्धिस्थप्रकारवांस्तत्पदशक्य इत्याकारकशक्तिज्ञानात् स्वरूपतो घटत्वादिप्रकारकस्मरणशाब्दबोधौ न सम्भवतः, जातिमान् हस्तिपकसम्बन्धीत्या-

दिज्ञानात् स्वरूपतो हस्तित्वादिप्रकारकस्मरणानुदयात् स्वरूपतस्तद्धर्मप्रकारकस्मरणे स्वरूपतस्तद्धर्मप्रकारेण यस्य सम्बन्धो गृहीतस्तादृशसम्बन्धिज्ञानस्य हेतुत्वाद्, यथा याभ्यां रूपाभ्यां धर्मिणोः सम्बन्धो गृहीतस्तदेकतररूपप्रकारकसम्बन्धिज्ञानादपरतद्रूपप्रकारेणैव सम्बन्ध्यन्तरस्मरणमित्यनुभवस्तथा यादृशरूपाभ्यां धर्मिणोः सम्बन्धो गृहीतस्तादृशैकधर्मप्रकारकसम्बन्धिज्ञानात् तादृशापरधर्मप्रकारेणैव धर्मिस्मरणमित्यपि; तथा च यत्र किंचिद्विशेषितधर्मप्रकारकं सम्बन्धिज्ञानन्तत्राविशेषिततद्धर्मप्रकारकस्मरणस्यानुभवविरुद्धतयेष्टापत्तेरयोगात् । अन्यथा कदा चित् स्वरूपतस्तत्प्रकारिका कदा चिद्धर्मान्तरावच्छिन्नतत्प्रकारिका स्मृतिरित्यत्र नियामकाभावप्रसङ्गात् ।

सामान्यलक्षणप्रत्यासत्तिमनङ्गीकुर्वतां पुनरनिष्कृतिरेव, शक्तिग्रहाविषयस्यापूर्वधर्मस्य स्वरूपतः कथमपि भानासम्भवाद्, न हि बुद्धिविषयताऽवच्छेदकत्वेन धर्मान्तरविषयकं ज्ञानं स्वरूपतोऽपरधर्मप्रकारेण बुद्धिञ्जनयितुम्प्रभवति, तथा सति समानप्रकारतानियमस्यापि भङ्गप्रसङ्गादिति ।

---

मञ्जूषा ।

यद्रूपं चैत्रत्वादि । व्यवहारः, प्रवृत्त्यौपयिकबोधः । प्रकृतस्यापीति । प्रक्रान्तस्यापीत्यपपाठः। अपूर्वधर्मस्यापूर्ववाक्यजन्यशाब्दबोधाविषयत्वात् । शक्तिग्रहेति । काश्यां गौरस्तीत्यादौ गवि गृहीतशक्तेर्देशान्तरस्थले गोबोधवदित्यर्थः । तस्यापीति । बुद्धिस्थत्वस्य शक्यताऽवच्छेदकताऽवच्छे-

दकत्वेऽपि शक्यताऽवच्छेदककोटिप्रविष्टतया शक्यताऽवच्छेदकत्वं तस्यावच्छेदकताऽवच्छेदकसाधारण्यात् । अवच्छेद्येति । शक्तिरित्यर्थः । अतथात्वात्=साक्षात्परंपरया वा शक्यताऽवच्छेदकत्वाभावात् । बुद्धिविशेषः=इन्द्रचन्द्रादिमात्रसमूहालम्बनबुद्धिः । अन्यतमत्वसंग्रहायान्तत इति ।

माधवी ।

तादृशसम्बन्धिज्ञानस्य हेतुत्वादिति । तदेवानु भवेन दृढयति—यथेति । धर्मिणोः=सम्बन्धप्रतियोग्यनुयोगिनोः ।

सम्बन्धो गृहीत इति । तथा च निरवच्छिन्नयद्रूपावच्छिन्नविशेष्यतानिरूपिता यद्रूपावच्छिन्नप्रकारतानिरूपिता च या सम्बन्धविषयता तच्छालिग्रहः । तदेकतररूपप्रकारकसम्बन्धिज्ञानादिति । निरवच्छिन्नतदेकतरधर्मावच्छिन्नविषयतानिरूपितसम्बन्धविषयतानिरूपितनिरवच्छिन्नतद्धर्मावच्छिन्नविशेष्यताशालिज्ञानात् । अपरतद्रूपप्रकारेण=निरवच्छिन्नतद्रूपप्रकारेणेत्यर्थः । यादृशरूपाभ्यां धर्मिणोः सम्बन्धोगृहीत इति । यद्रूपावच्छिन्नयन्निष्ठावच्छेदकतानिरूपितविशेष्यतानिरूपितयद्रूपावच्छिन्नयद्धर्मनिष्ठावच्छेदकताकप्रकारतानिरूपितसम्बन्धविषयताशालिग्रह इत्यर्थः । तादृशैकधर्मप्रकारकसम्बन्धिज्ञानात् । तद्धर्माच्छिन्नतन्निष्ठावच्छेदकतानिरूपितप्रकारतानिरूपितसम्बन्धविषयतानिरूपिततद्धर्मावच्छिन्नतन्निष्ठावच्छेदकतानिरूपितविशेष्यताशालिज्ञानादित्यर्थः। तादृशापरधर्मप्रकारेणेति । इदमुपलक्षणं-धर्मिताऽवच्छेदकतायां सावच्छिन्नत्वं सम्बन्धग्रहप्रकारताऽवच्छेदकांशे निरवच्छिन्नत्वं निवेश्यैको नियमः, अपरश्च धर्मिताऽवच्छेदकतायां निरवच्छिन्नत्वं सम्बन्धग्रहप्रकारताऽवच्छेदकतांशे सावच्छिन्नत्वं निवेश्य च नियमः कार्य इति ।

विनोदिनी ।

संशयेति । अयं भावः-अत्र घटोऽस्ति तमानयेति वाक्यतो यदि बुद्धिस्थकर्मकानयनस्यैव बोधो भवेत्तर्हि बुद्धिस्थकर्मकानयननिश्चयस्य बुद्धिस्थत्वेन घटादेरभावमनवगाहमानां बुद्धिं प्रत्यप्रतिबन्धकतया संशयस्यापि प्रतिबन्ध्यताऽवच्छेदकानवच्छिन्नत्वमर्थादेवेति तादृशसंशयो भवितुमर्हति ।

इत्यपीति । एवं च यथा हस्ती हस्तिपकसंबन्धीत्यादौ हस्तित्वहस्तिपकत्वान्यतरधर्मप्रकारकसंबन्धिज्ञानादन्यतरधर्मप्रकारकसंबन्धिस्मरणमानुभविकं, तथा जातिमान् जातिमत्संबन्धीत्यादावपि विशिष्टान्यतरधर्मप्रकारकसंबन्धिज्ञानाद् विशिष्टान्यतरधर्मप्रकारकसंबन्धिस्मरणमप्यानुभविकम्, उपलक्षणं चैतद् यत्तादृशरूपीययादृशयद्रूपीयस्य-

लयोरपि, ततश्च हस्ती जातिमत्संबन्धी, जातिमान् हस्तिपकसंबन्धी-त्यत्रापि दर्शितविधयैवैकसंबन्धिज्ञानतोऽपरसंबन्धिस्मरणव्यवस्थोपपादनीयेति संक्षेपः ।

---

मैवम्, भगवत्सङ्केतरूपायां शक्तौ शक्यताऽवच्छेदकघटत्वादावुपलक्षणीभूतबुद्धिविषयताऽवच्छेदकत्वप्रकारेण भासमाने तदादिपदजन्यबोधविषयताऽवच्छेदकत्वम्भासते । एवं च बुद्धिविषयताऽवच्छेदकधर्मावच्छिन्नस्तत्पदाद् बोद्धव्य इत्याकारकस्य; तत्पदम्बुद्धिविषयताऽवच्छेदकरूपावच्छिन्नं बोधयत्वित्याकारकस्य वा संकेतस्य विषयतायाअननुगतघटत्वपटत्वादिनिष्ठाया अप्यनुगतस्वप्रयोगानुकूलवक्तृबुद्धिविषयताऽवच्छेकत्वरूपावच्छिन्नतया शक्त्यैक्यं घटादिपदसंकेतविषयतानां नानाघटव्यक्तिनिष्ठानां घटत्वाद्यनुगतधर्मावच्छिन्नत्वेन पश्वादिपदसंकेतविषयतानां प्रकारीभूतनानालोमादिव्यक्तिनिष्ठानां लोमत्वाद्यनुगतधर्मावच्छिन्नत्वेन तत्तत्पदशक्त्यैक्यवत् ।

इयांस्तु विशेषः—तत्र घटत्वलोमत्वादिषु तत्तत्पदजन्यबोधविषयताऽवच्छेदकत्वं भासत इति तानि विशेषणान्युच्यन्ते प्रकृते च बुद्धिविषयताऽवच्छेदकत्वे सर्वनामपदजन्यबोधविषयताऽवच्छेदकत्वं संकेतेन नावगाह्यतेऽपि तु तादृशविषयतासामानाधिकरण्यमात्रमिति तदुपलक्षणमिति गीयते । अननुगतहस्तित्वसिंहत्वादिनिष्ठानां नाना-

हर्यादिपदसङ्केतविषयतानामनुगतकिञ्चिद्धर्मावच्छिन्नत्वाभावान्न शक्तेरैक्यं, तत्रोपलक्षणीभूतकिञ्चिद्धर्मप्रकारेणाभासमानस्यैव हरित्वादेर्भगवत्सङ्केतरूपायां शक्तौ हर्यादिपदजन्यबोधविषयताऽवच्छेदकत्वम्भासत इति न नानाऽर्थमात्रोच्छेद इति ।

यद्यपि घटादिपदसंकेतस्य घटत्वादिविशिष्टविषयकत्ववत्सर्वनामसंकेतेन बुद्धिविषयताऽवच्छेदकत्वे तत्पदजन्यबोधविषयताऽवच्छेदकत्वानवगाहनेऽपि संकेतस्य तद्विशिष्टविषयकत्वमक्षतमेवेति संकेतविषये तद्विशेषणमेव,एवं शक्यविशेषणघटत्वादिनिष्ठे बोधविषयताऽवच्छेदकत्वरूपबोधविषयतानिष्ठसंकेतीयविषयतानिरूपितविषयतारूपशक्यत्वे तदवच्छेदकमपि; तथाऽपि बोधविषयतया संकेतविषयत्वरूपशक्यतायास्तत्रासत्त्वेन शक्ये न तद्विशेषणं, शक्यत्वे सति शक्यव्यावर्तकस्यैव शक्यविशेषणत्वादिति तस्य शक्योपलक्षणतयाऽऽकाशपदजन्य बोधे शब्दाश्रयत्वभानानियमवत्तदादिपदजन्यबोधे तदभाननिर्वाहः । एतद्बीजं तु तदुपलक्षितघटत्वादिविषयकत्वेन तदविषयकघटत्वादिबोधस्यापि संकेतविषयत्वम् । घटादिपदसंकेतस्य च घटत्वादिविशिष्टविषयकबोध एव विषय इति तज्जन्यबोधे तादृशधर्मभाननियमः । यथा यद्विशिष्टविशेष्यकबोधविषयत्वं सङ्केतविष-

यस्तच्छक्यताऽवच्छेदकतया व्यवह्रियते; तथा यद्विशिष्ट-प्रकारविशिष्टविषयकत्वं तथा तच्छक्यताऽवच्छेदकताऽवच्छेदकमित्युच्यते, प्रकृते बुद्धिविषयताऽवच्छेदकत्वं न तथेति न तच्छक्यताऽवच्छेदकं न वा तत्त्वावच्छेदकमिति, जातित्वादिविशिष्टघटत्वाद्यवच्छिन्नस्य तदादिपदाद्यधीनबोधे तु बोधांशे बुद्धिविषयताऽवच्छेदकताऽवच्छेदकत्वोपलक्षितधर्मविशिष्टावच्छिन्नविषयत्वावगाही संकेतः प्रयोजक इति तत्र जातित्वावच्छिन्नघटत्वादिनिष्ठप्रकारताकबोध एव विषय इति न जातिमानित्याकारकबोधकाले घट-इत्याकारको बोधः।

---

मञ्जूषा।

भासत इति। घटत्वलोमत्वादीनां शाब्दबोधविषयत्वादिति भावः। उपलक्षणमिति। अत एव पूजाऽऽराधना सा च गौरवितनिष्ठप्रीतिहेतुक्रिया, तत्र गौरवितवृत्तित्वमुपलक्षणमिति मिश्रटिप्पण्याम्। संकेतशक्तिमते भगवदिच्छायां बोधविषयतयाऽभासमानत्वे सति भासमानविषयांशे प्रकारत्वमुपलक्षणत्वं, शाब्दानुभवजनकताऽवच्छेदकीभूतपदार्थान्तरं शक्तिरिति गुरुमते च विषयित्वाविशेषणतया विषयविशेषणतया पदजन्यताऽवच्छेदकनिष्ठत्वं तदिति स्वयमुक्तम्। अत्रोपलक्षणीभूतधर्मावच्छिन्नतयाऽनुगतनानाधर्मविशिष्टे सर्वनामपदस्यैकशक्तिस्वीकारे बुद्धिविशेषविषयत्वादिनाऽनुगतीकृतेन्द्रत्वचन्द्रत्वादिविशिष्टे हरिपदस्यैकशक्तिप्रसङ्ग इत्युक्तं, तत्र किं हरित्वसिंहत्वादिनिष्ठानां संकेतविषयतानां किंचिद्धर्मावच्छिन्नत्वं लोमादिव्यक्तिनिष्ठानां तासां लोमत्वावच्छिन्नत्ववदुपेयते? उत किञ्चिद्धर्मोपलक्षितवृतित्वं? तत्राद्यं निरस्यति–अनुगतेति। द्वितीयं–निरस्यति–तत्रोपलक्षणीभूतेति।

ननु सर्वनामपदे शक्यतावऽच्छेदकानामनुगमकं भासते न तु हर्यादिपद इति निर्युक्तिकं प्रवादं कुतः श्रद्दधीमहीति चेत्? सर्वनामपदेऽपूर्वचैत्रत्वादेर्भानानुरोधेनावश्यानुगमनीयत्वादनायत्योपलक्षणे संकेतविषय-

तोपेयते, नानाऽर्थे च नापूर्वभानमिति न तत्र तदुपगमः। न च नानाऽर्थे-उपलक्षणोपगमे संकेतविषयतैक्यसंपत्त्या लाघवमिति वाच्यं, फलाभावेनोपलक्षणासत्त्वे शक्तिभेदरूपतद्विषयतानानात्वस्यैव प्रामाणिकत्वादिति। एतदभिप्रेत्योपलक्षणीभूतकिंचिद्धर्मप्रकारेणाभासमानस्यैवेति पश्वादिपदेषु लोमादीनामननुगता या किञ्चिद्धर्मावच्छिन्ना संकेतविषयता न त्विह तथेति विशिष्य व्युत्पादनाय प्रथमतोऽनुगतेति चोक्तम्। तदादिपदजन्यबोधे बुद्धिविषयताऽवच्छेदकत्वभानं शङ्कते- यद्यपीति। अवच्छेदकत्वरूपेति। अवच्छेदकतासम्बन्धावच्छिन्ना संकेतविषयता तदात्मिकेत्याशयेन। तदवच्छिन्नत्वमपीति। बुद्धिविषयताऽवच्छेदकत्वं तदवच्छेदकमपीत्यर्थः। बोधविषयतयेति। बोधविषयतानिष्ठप्रकारतानिरूपितसंकेतविषयतेत्यर्थः। तत्र=बुद्धिविषयताऽवच्छेदकत्वादौ। तदभानेति। बुद्धिविषयताऽवच्छेदकत्वाभानेत्यर्थः। कदा चिदपि तस्य भानासम्भवान्नियमपदम्, अयमेव दृष्टान्ताद्विशेषः। बोधस्यापीत्यपिकारेण घटत्वादिबोधस्य नियमतस्तद्विषयत्वे तत्र संकेतविषयत्वं स्यान्न तथाऽस्य इति सूचितं, बुद्धिविषयताऽवच्छेदकत्वविशिष्टघटत्वाद्यवच्छिन्नबोधश्च शक्तिभ्रमेण, बुद्धिविषयताऽवच्छेदकताऽवच्छेदकतोपलक्षितबुद्धिविषयताऽवच्छेदकताऽऽपन्नघटत्वावच्छिन्नसंकेतप्रमया वा, एतेनाकाशपदजन्यबोधे शब्दाश्रयत्वभानवत्सति तात्पर्ये तदादिपदजन्यबोधेऽपि बुद्धिविषयताऽवच्छेदकत्वं भासत इत्यावेदनायापिकार इत्यपास्तम्। स्वरूपतो घटत्वादिविशिष्टविषयकबोधौपयिकशक्तिप्रमया तात्पर्यसहस्रैरपि तद्भानासम्भवात्. बुद्धिविषयताऽवच्छेदकत्वस्य शक्यतायां तदवच्छेदकतायां वाऽनवच्छेदकत्वं दर्शयितुं घटपश्वादिपदादौ घटत्वलोमत्वादेर्भानं सयुक्तिकमाह—घटादीति। आदिना पश्वादिपदग्रहः। न तथा=न यच्छब्दार्थो जातित्वादीति।

यत्तु तदादेर्नानाऽर्थत्ववारणाय बुद्धिविषयताऽवच्छेदकतापर्याप्त्यधिकरणत्वोपलक्षितधर्मावच्छिन्नविषयकत्वावगाही एक एव संकेत उपेतव्यः तादृशधर्मानवच्छिन्नघटत्वं जातित्वादिविशिष्टघटत्वादिकं तथा च स्वरूपतो घटत्वांशे शक्तिग्रहात् स्वरूपतस्तद्बोधः जातित्वादिविशिष्टांशे तद्ग्रहाज्जातित्वादिना तद्बोध इति न फलभेदानुपपत्तिरिति, तदयुक्तं, बोधस्तदादिपदवान् भवत्विति संकेतैक्यस्य सम्बन्धभेदसहस्रैरपि वक्तुमशक्यत्वात्, अन्यथा पर्याप्तिभेदेन शक्तिभेदस्य दुरुद्धरतया तथाप्यप्रतीकारात्, अविशेषितघटत्वादिविशिष्टसविशेषितघटत्वादिविशिष्टादिभेदेन शक्तिभेदस्यावयोरिष्टापत्तिग्रस्तत्वाच्च, किं च शक्तिग्रहधर्मिताऽवच्छेदकविषयतायाः शाब्दबोधविषयतानियामकत्वस्य दूषितत्वात् स्वरूपतो घ-

त्वशाब्दबुद्धित्वजातित्वादिना घटत्वशाब्दबुद्धित्वं च पृथक्कार्यताऽवच्छेदकीकृत्यानुगतशक्तिज्ञानकारणत्वं न युज्यते ।

---

अथ किंचित्प्रकारेण भासमाने धर्मेऽवच्छेदकताभाने तद्विशिष्ट एव भासते न तु तदुपलक्षित इति नियमः; कथमन्यथा स्वरूपतो घटत्वावच्छिन्नाभावस्य न जातिमान्नास्तीत्याकारिका प्रतीतिः, एवं च बुद्धिविषयताऽवच्छेदकत्वोपलक्षिते कथं बोधविषयताऽवच्छेदकत्वं संकेतेनावगाहनीयमिति चेद् ?

न-अवच्छेदकताया अवच्छेद्याश्रयविशेषणताऽऽपन्ने संसर्गविधया भान एव तथाविधनियमाद्, अन्यथा धूमव्यापकताऽवच्छेदकरूपावच्छिन्नप्रतियोगिताकाभाववानित्याकारकव्यापकताऽवच्छेदकत्वोपलक्षितवन्हित्वावच्छिन्नाभावप्रतीत्यनुपपत्तेः ।

प्रकृते च तत्पदं बुद्धिस्थप्रकारावच्छिविषयताकबोधञ्जनयत्वित्याकारकोऽवच्छेद्यावच्छेदकभावप्रकारक एव सङ्केतोऽङ्गीकार्य इत्यनुपपत्तेरभावात् ।

स्वरूपतो घटत्वादिप्रकारकस्मरणशाब्दबोधाद्युपयोगी शक्तिग्रहः स्वरूपतो घटत्वादिप्रकारक एव, यदा स्वरूपतो यद्धर्मप्रकारकज्ञानसामग्री तदैव स्वरूपतस्तद्धर्मप्रकारेण शक्तिं गृहीत्वा स्वरूपतस्तत्प्रकारेण धर्मिणं स्मरत्यनन्तरमनुभवति च ।

मानसे च शक्तिग्रहे न व्यवहारदर्शनादेरपेक्षा, अपि त्वसंसर्गाग्रहसहितोपस्थितेरेवेति यद्धर्मावच्छिन्ने तदादिपदघटितवाक्याद् व्यवहारो न दृष्टस्तदवच्छिन्नस्यापि मानसशक्तिग्रहाद् बोधः सुघट एव ।

अथ व्यवहारदर्शनाद्यविषये मनसा शक्तिर्निश्चेतुं न शक्यते, विपरीतकोटेरप्युपस्थितिमात्रेण भानसंभवाद्, न चोपस्थितस्यापि बाधितस्य दोषमन्तरेणाभानान्निश्चयस्याप्युपपत्तेरिति वाच्यम् । एवं सति शक्तिग्रहे व्यवहारदर्शनादेरुच्छेदापत्तेरिति चेद् ?

न—कतिपयविषयेषु सर्वनामघटितवाक्यात् प्रयोज्यस्य प्रवृत्तिमुपलभमानः प्रवर्तकज्ञानविषये शक्तिङ्कल्पयन् बुद्धिविषयताऽवच्छेदकधर्मावच्छिन्नस्तत्पदशक्य इत्येव सामान्यतोऽवधारयति, एवञ्च चैत्रोऽस्य बुद्धिविषयताऽवच्छेदकधर्मवानिति यदा तेन गृह्यते तदानीमस्य चैत्रस्तत्पदवाच्यो न वेति सन्देहो नावतरति, यादृशधर्मावच्छेदेन यदवधारितं तादृशधर्मानिश्चयस्य स्वसमानधर्मिताऽवच्छेदकतद्विरोधिकोटिभानविरोधित्वादिति संभवत्येवापूर्वेऽपि विषये मानसः शक्तिनिश्चयः ।

अथैवमपि तत्पदे चैत्रत्वादिविशिष्टवाचकत्वसन्देहस्य दुरुच्छेदतया तत्पदाद् व्यवहारदर्शनाविषयचैत्रत्वाद्यवच्छिन्नविषयकशाब्दबोधो दुरुपपाद एव, तद्धर्मप्र-

कारकशाब्दबोधे तद्धर्मविशिष्टवाचकतानिश्चयस्य हेतुत्वाद्, अन्यथा गवादिपदादभ्रान्तस्यापि शक्त्या सास्नाऽऽदिमत्त्वप्रकारेण शाब्दबोधापत्तेरिति चेद्? न—तत्पदप्रयोजकबुद्धिप्रकारतया गृहीतघटत्वादिविशिष्टे व्यवहारदर्शनात् तत्पदस्य शक्तिं गृहीत्वा; यद्यत्पदं यादृशयादृशधर्मावच्छिन्नविषयकबुद्ध्या प्रयुज्यते तत्तत्पदं तादृशतादृशधर्मविशिष्टशक्तमिति सामान्यतो व्याप्तिमवधारयति, तदनन्तरं च प्रत्यक्षगृहीतचैत्रत्वादिविशिष्टविषयकबुद्धिप्रयोज्यत्वम्प्रकरणादिना यत्र तत्पदे गृह्णाति तत्र पक्षे तादृशहेतुना चैत्रत्वादिविशिष्टवाचकत्वस्य प्रागसिद्धस्यापि पक्षधर्मताबलादनुमित्यात्मकनिश्चयेनावगाहनसंभवान्न काऽप्यनुपपत्तिरिति* ।

---

मञ्जूषा ।

नन्वेवं बुद्धिस्थप्रकारवांस्तत्पदशक्य इति शक्तिग्रहाद् बुद्धिस्थप्रकारत्वेनैवोपस्थितिप्रसङ्गः संबन्धग्रहे संबन्धिनो यादृशभानं तादृशोपस्थितिजननस्यैव तेनोचितत्वात् तथा च तदादिपदात्स्वरूपतो घटत्वादिना घटादिशाब्दबोधो दुरुपपाद इत्यत आह—स्वरूपत इति । घटस्तदादिपदवा-

---

* न चैवमपि तद्धर्मप्रकारकबोधे पदजन्यबोधविषयत्वांशे विशिष्य तद्धर्मावच्छिन्नत्वावगाहितया संकेतनिश्चयोऽपेक्षितः प्रमेयत्वादिना घटादिविषयकबोधविषयत्वांशे तदवच्छिन्नत्वावगाहित्वेन संकेतनिश्चयेऽपि विशिष्य घटत्वाद्यवच्छिन्नावगाहित्वसंशयसम्भवात्तत्प्रकारकबोधानुदयादिति विशिष्य घटत्वाद्यवच्छिन्नावगाहित्वस्य सर्वनामसंकेते निश्चयासम्भवात्कथं तत्प्रकारकबोधस्ततो भविष्यतीति वाच्यम् । बुद्धिविषयताऽवच्छेदकतावद्धर्मावच्छिन्नविषयत्वावगाहितया निश्चितस्य चैत्रत्वादेर्बुद्धिविषयताऽवच्छेदकत्वग्रहस्यैव विशिष्य तदवच्छिन्नत्वावगाहित्वसंशयविरोधित्वात् । न च तादृशग्रहस्य तथाविधसंशयविरोधित्वमप्रसिद्धमिति वाच्यम् । द्रव्यत्वे पृथिवीवृत्तिनिखिलधर्मसामानाधिकरण्यनिश्चये विशिष्य घटत्वे पृथ्वीवृत्तित्वनिर्णयस्य द्रव्यत्वे विशिष्य घटत्वसामानाधिकरण्यसंशयविरोधित्ववत्तस्याप्यनुभवसिद्धस्य दुरपह्नवत्वात् ।

अत्रैवमितिप्रभृति न काऽप्यनुपपत्तिरित्यन्तस्य स्थाने पाठान्तरम् । एतदेव मुख्यं मत्वा मञ्जूषाकृता व्याख्यानम् ।

नित्याकारक एवेत्यर्थः। तत्र स्वोच्चारणानुकूलबुद्धिविषयताऽवच्छेदकत्वं न भासते, तदगर्भ एव स्वजन्यशाब्दबोधीयघटत्वावच्छिन्नविषयतावृत्तिप्रकारतानिरूपितसंकेतीयविषयता पदसंबन्धः। व्यवहारदर्शनादिस्थलआनुमानिकं शक्तिग्रहं प्रदर्श्य तददर्शनस्थले मानसं तमाह--मानसे चेति।

यद्धर्मः=अपूर्वचैत्रत्वादिः। दोषमिति। आनुमानिकशक्तिग्रहे व्यवहारदर्शनापेक्षासत्त्वान्न तदुच्छेदप्रसङ्ग इति भावः।

इदानीमपूर्वविषयेऽपि शक्तिग्रहस्य व्यवहारदर्शनापेक्षामालम्ब्य विपरीतकोटिभानवारकं व्यावर्तकधर्मदर्शनमाह-यादृशधर्मेति। यद्रूपविशिष्टधर्मेत्यर्थः। तादृशधर्मेति। तद्रूपविशिष्टधर्मेत्यर्थः। तत्पदशक्यत्वरूपग्राह्याभावावच्छेदकत्वेन बुद्धिविषयताऽवच्छेदकताविशिष्टधर्मग्रहादिति भावः।

ननु तदाद्यन्यपदस्थले शक्तिकल्पकस्य घटत्वावच्छिन्नस्तत्पदशक्य-इत्येवावधारणं तत्र नोपस्थितविपरीतकोटेर्भानप्रसङ्गः, अमानसत्वात्, तदेव च स्वरूपतो घटत्वस्मारकं, न चैवं तदादिपद इत्यतस्तदादिपदे व्यावर्तकधर्मदर्शनेन चैत्रस्तत्पदवाच्य इति शक्तिनिश्चयो मानसो न तु तत्सन्देह इत्याह-एवं चेति।

क्व चित्पुस्तके-अथैवमपि तत्पदे चैत्रत्वादिविशिष्टवाचकत्वसंदेहस्य दुरुच्छेदतया तत्पदाद् व्यवहारदर्शनाविषयचैत्रत्वाद्यवच्छिन्नविषयकशाब्दबोधो दुरुपपाद एव, तद्धर्मप्रकारकशाब्दे तद्धर्मविशिष्टवाचकतानिश्चयस्य हेतुत्वाद्, अन्यथा गवादिपदादभ्रान्तस्यापि शक्त्या सास्नाऽऽदिमत्त्वप्रकारेण शाब्दापत्तिरिति चेद्? न-तत्पदप्रयोजकबुद्धिप्रकारतया गृहीतघटत्वादिविशिष्टे व्यवहारदर्शनात्तत्पदस्य शक्तिं गृहीत्वा यद्यद्यादृशयादृशधर्मावच्छिन्नविषयकबुद्ध्या प्रयुज्यते तत्तत्पदं तादृशतादृशधर्मविशिष्टशक्तमिति सामान्यतो व्याप्तिमवधारयति, तदनन्तरं च प्रत्यक्षेण गृहीतचैत्रत्वादिविशिष्टविषयकबुद्धिप्रयोजकत्वं प्रकरणादिना गृह्णाति तत्र पक्षे तादृशहेतुज्ञानाच्चैत्रत्वविशिष्टवाचकत्वस्य प्रागसिद्धस्यापि पक्षधर्मताबलादनुमित्यात्मकनिश्चयेनावगाहनसंभवान्न काऽप्यनुपपत्तिरितिपाठो दृश्यते, अर्थधर्मिकशक्तिज्ञानस्यैव हेतुतायाः ग्रन्थकारसंमततया पदे वाचकत्वसंदेहस्याविरोधित्वमालोच्यान्यैरयमुत्तोलितः।

बुद्धिः=घटत्वादिरूपयत्किंचिद्धर्मावच्छिन्नत्वावगाहितानिश्चयः। चैत्रत्वादौ बुद्धिविषयताऽवच्छेदकत्वग्रहेऽपि न संशयोच्छेद इत्यतो-यावदिति। तच्च न यावत्त्वस्य भानपरं, तस्य शक्त्यघटकत्वाद्, नापि तादृप्येण यावतामवच्छेदकत्वाभानेनाविरोधप्रसङ्गात्; किं त्ववच्छिन्नत्वनिरूपकताऽव-

च्छेदकत्वेन बुद्धिविषयताऽवच्छेदकत्वमानपरम्, अग्रिमं च सामानाधिकरण्यनिरूपकताऽवच्छेदकत्वेन पृथिवीवृत्तित्वग्रहविशिष्टघटत्वधर्मिकपृथिवीवृत्तित्वग्रहरूपं व्यावर्तकधर्मदर्शनमेव। विशिष्येति । एवं च विशिष्य तदवच्छिन्नत्वगर्भशक्तिनिश्चयस्यैव स्वरूपतश्चैत्रत्वादिस्मारकतया विशिष्य तदवच्छिन्नत्वघटितवाच्यत्वाभावकोटिकश्चैत्रस्तत्पदवाच्यो न वेति संदेह एव प्राङ्निराकृतो, न तु शक्त्युपलक्षणबुद्धिविषयताऽवच्छेदकत्वस्य विशेषणतयाऽभावप्रतियोगिताऽवच्छेदककोटिप्रवेशसंभवेन तद्घटिततथाविधवाच्यत्वाभावसंदेह इति बोध्यम्। कदा चिज्जातिमान्घट इत्याकारकमिति त्वपपाठः। जातित्वांशे मोषामोषाभ्यां तथा स्मृत्यसम्भवात् ।

माधवी ।

अपि त्वसंसर्गाग्रहसहितोपस्थितेरेवेति । असंसर्गाग्रहो बाधनिश्चयाभावः। उपस्थितिमात्रेण भानसम्भवादिति । तथा च कोटिद्वयभासकसामग्रीसत्त्वात्संशय एव स्यान्न निश्चय इति भावः । व्यवहारदर्शनादेरुच्छेदापत्तेरितीति । तथा च व्यवहारदर्शनाविषये प्रायशः शक्तिसंशयस्यानुभवसिद्धतया तत्र दोषः, अत्रापि दोषसम्भवादिति भावः ।

सामान्यतोऽवधारयतीति । बुद्धिविषयताऽवच्छेदकधर्मवान् तत्पदशक्य इत्यवधारणाकारः। तद्धर्मविशिष्टवाचकतानिश्चयस्य=तद्धर्मावच्छिन्नत्वावच्छिन्नशाब्दबोधविषयत्वविषयताघटितसङ्केतविषयताशालिनिश्चयस्येत्यर्थः। तत्तत्पदं तत्तद्धर्मविशिष्टे शक्तमित्युदाहरणवाक्यतः सामान्यतो व्याप्तिरिति यत्त्वतत्स्वरूपाननुगतधर्मघटितां व्याप्तिमवधारयतीति । यादृशधर्मावच्छिन्नविषयकत्वं बुद्धिप्रयुक्तत्वसामानाधिकरण्याभावप्रतियोगिताऽनवच्छेदकं तादृशधर्मविशिष्टशक्तत्वमित्यवधारणाकारः।

अवगाहनसम्भवादिति । यत्तद्घटितसामान्यव्याप्तिस्थले प्रकृतव्याप्तिविशिष्टप्रकृतहेतुमत्त्वस्य पक्षेऽनपेक्षणादिति भावः ।

विनोदिनी ।

मानसशक्तिग्रहादिति । अत्र महामहोपाध्यायसर्वतन्त्रस्वतन्त्राः श्रीगङ्गाधरशास्त्रिगुरुचरणाः—यथा स्वोद्देश्यताऽवच्छेदकव्याप्यधर्मावच्छिन्नोद्देश्यताकत्वस्वोद्देश्यताऽवच्छेदकावच्छिन्नविधेयताकत्वोभयसंसर्गेण पृथिवी गन्धवतीतिबुद्धिविशिष्टया घटः पृथिवीतिबुद्ध्या स्वोद्देश्यताऽवच्छेदकव्याप्यधर्मावच्छिन्नोद्देश्यताऽवच्छेदकावच्छिन्नविधेयताका घटो गन्धवानिति बुद्धिरुत्पाद्यते; तथाऽपि बुद्धिविषयताऽवच्छेदकधर्मवाँस्तत्पदशक्य इतिबुद्धिविशिष्ट्या घटो बुद्धिविषयताऽवच्छेदकधर्मवानितिबुद्ध्या घटस्तत्पदशक्य इति बुद्धिः सूत्पाद्येत्येष एव मानसशक्तिग्रह इति प्राहुः ।

केचित्तु—बुद्धिविषयताऽवच्छेदकत्वेनानुगतधर्मेण सकलधर्मविषयकसामान्यप्रत्यासत्त्यधीनशक्त्यनुभवे प्रमुष्टबुद्धिविषयताऽवच्छेदकत्वांशं स्वरूपतश्चैत्रत्वादिप्रकारकस्मरणं निराबाधमेवेति तन्मूलकमेव स्वरूपतोऽपूर्वचैत्रत्वादिप्रकारकं शाब्दज्ञानं भविष्यतीति किमनुपपन्नम् ? स्वरूपतस्तत्प्रकारकस्मरणे स्वरूपतस्तत्प्रकारकानुभवसंस्कारयोरनपेक्षणाद्, उद्बोधकवैचित्र्यादेव कदाचिज्जातिमानित्याकारकं कदाचिद् घट इत्यारकं विलक्षणं स्मरणमिति नियमोपपत्तेः । स्वरूपतो घटत्वादिप्रकारकानुभवजनितसंस्कारवतोऽपि जातित्वादिना घटत्वादिप्रकारकात्संस्कारात्कदाचित् स्वरूपतो घटत्वाद्यप्रकारकस्य जातिमानित्याकारकस्य स्मरणस्योदयेन स्वरूपपस्तत्प्रकारिकायां स्मृतौ तथाविधानुभवसंस्कारयोर्विशिष्य हेतुत्वेऽप्युद्बोधकविशेषविरहस्य तादृशस्मृतिविरहप्रयोजकताया आवश्यकत्वात्तादृशहेतुताया अप्रामाणिकत्वात् । कथमन्यथा विशेषणान्तरानवच्छिन्नास्मदाद्यदृष्टशरीरविशेषनिष्ठजातिविशेषावच्छिन्नसङ्केतितरामरावणादिपदेभ्यो वाक्यार्थधीरस्माकम् ? कथं वा निर्विशेषणकातीन्द्रियजातिविशेषावच्छिन्नवाचकमनःप्रभृतिपदेभ्योऽस्माकं शाब्दधीः ? तत्र जातित्वादिना जातिविशिष्टे शक्तिग्रहेण प्रमुष्टजातित्वांशं मनस्त्वादिप्रका-

रेण स्मरणमिति तत्रापि विशेषणांशप्रमोषमन्तरेण गत्यन्तराभावादिति वदन्ति ।

विवदन्तेऽप्यत्र च बहवो विद्वांसः-स्मृतेर्विलक्षणप्रकारतायां संस्कारानुभवयोस्तादृशप्रकारताप्रयोजकत्वस्योद्बोधकविशेषप्रयोजकतामाश्रित्योच्छेदने विशेष्यविशेषणभावांशेऽप्युद्बोधकविशेषस्यैव नियामकत्वसम्भवात्, प्रकारत्वविशेष्यत्वानन्तर्भावेण सामान्यतस्तद्विषयकस्मृतौ तद्विषयकत्वेनैव संस्कारानुभवयोर्हेतुताऽऽपत्तेः । रामरावणादिपदेभ्यश्च लक्षणया तत्तत्पदार्थत्वादिप्रकारक एवान्वयबोधः । वस्तुतस्त्वनुगतोद्बोधकस्थले स्वरूपतस्तत्प्रकारकशक्तिज्ञानासत्त्वेऽपि स्वरूपतस्तत्प्रकारकस्मरणापत्त्या तत्र तादृशज्ञानस्य हेतुत्वमावश्यकमित्यलमतिपल्लवितेन ।

अथ सामन्यतो वक्तृबुद्धिविषयताऽवच्छेदकधर्मावच्छिन्नस्य सर्वनामशक्यत्वे शक्तिभ्रमं विना कालान्तरीणपुरुषान्तरीणबुद्धिविषयताऽवच्छेदकधर्मावच्छिन्नाविषयिका प्रतीतिः सर्वनाम्ना न जन्यतेऽपि तु यो यदा यस्य बुद्धिस्थस्तदा तदुच्चरितपदात्तत्प्रकारावच्छिन्नविषयिकैवेति नियमानुपपत्तिः, स्वोच्चारणानुकूलबुद्धिविषयताऽवच्छेदकधर्मावच्छिन्नस्य शक्तिविषयत्वे च स्वपदस्य तत्तद्व्यक्तिपरतया तत्तत्पदव्यक्तिभेदेन शक्तिभेदप्रसङ्गोऽननुगमाद् व्युत्पत्तिविरोधश्च ।

एवं युष्मदस्मत्पदयोरात्ममात्रे न शक्तिरपि तु स्वसम्बोध्योच्चारणकर्त्रोरेवेति सम्बोध्यताऽवच्छेदकत्वोच्चारयितृताऽवच्छेदकत्वरूपानुगतधर्मोपलक्षितचैत्रत्वादिकमेव प्रवृत्तिनिमित्तमित्यप्यसङ्गतं सामान्यतः सम्बोध्यताऽवच्छेदकत्वादेरनुगमकत्वे चैत्रस्य यद्युष्मत्पदसम्बोध्यता तस्माद्युष्मत्पदात् पदान्तरसम्बोध्यमैत्रादेश्चैत्रोच्चारितास्मत्पदात्पदान्तरोच्चारयितुर्मैत्रादेः प्रतीतिप्रसङ्गो दुर्वार एवेति स्वजन्यबोधाश्रयतया प्रयोक्त्रभिप्रायविषयताऽवच्छेदकत्वरूपस्वसम्बोध्यताऽवच्छेदकत्वोपलक्षितधर्मावच्छिन्ने युष्मत्पदस्य स्वोच्चारणकर्तृताऽवच्छेदकत्वोपलक्षितधर्मावच्छिन्ने चास्मत्पदस्य शक्तेः स्वीकरणीयतया स्वत्वान्तर्भावणाननुगमतादवस्थ्यादिति चेद् ? न—स्वोच्चारणानुकूलबुद्धिप्रकारावच्छिन्नविषयकत्वस्वजन्यत्वोभयसम्बन्धेन तदादिसर्वनामपदप्रकारको बोधविषयकः संकेतोऽभ्युपेयते, तत्र स्वपदार्थस्य सम्बन्धघटकतया तत्तत्पदव्यक्तित्वेन पदाना न विषयताऽपि तु तत्तत्पदत्वादिरूपानुपूर्वीविशेषेणैवेति न पदव्यक्तिभेदेन शक्तिभेदः। सामान्यतस्तत्पदत्वादिरूपानुपूर्वीविशेषावच्छेदेनैव तदुभयसम्बन्धावच्छिन्नबोधविषयतानिरूपितसङ्केतप्रकारता ग्राह्येति न व्युत्पत्त्यनुपपत्तिः। कालान्तरीणपुरुषान्तरीयबुद्धिश्च नेदानींतनैतत्पुरुषीयतदादिपदोच्चारणानुकूलेति तद्विषयताऽवच्छेदका-

वच्छिन्नबोधे नोपदर्शितसम्बन्धेनैतत्तदादिपदवैशिष्ट्यमतो नेश्वरेच्छायां तादृशबोधस्यैतत्तदादिपदप्रकारेण भानमिति न कालान्तरीणपुरुषान्तरीयबुद्धिविषयताऽवच्छेदकावच्छिन्नस्यैतत्तदादिपदवाच्यता, भगवत्संकेतीयतत्पदव्यक्तिप्रकारतानिरूपिततथाविधसंसर्गान्तःपातिन्या बुद्धिविषयताऽवच्छेदकावच्छिन्नत्वेन विषयताया एव तत्पदवाच्यतारूपत्वादतो न भ्रमं विना तदवच्छिन्नबोधः । तद्धर्मावच्छिन्नविषयताशालिबोधे पदांशे तद्धर्मावच्छिन्नविषयताघटितोक्तोभयसम्बन्धावच्छिन्नाया बोधनिष्ठविशेष्यतानिरूपितसंकेतीयप्रकारताया वाचकतारूपायाः प्रकारतया संसर्गतया वा ज्ञानस्य हेतुत्वाद्, अन्यधर्मावच्छिन्नं बुद्धिस्थीकृत्य प्रयुक्ते पदेऽन्यधर्मावच्छिन्नविषयताघटितोभयसम्बन्धावच्छिन्नसंकेतीयप्रकारताया असत्त्वेन तत्र तदवगाहिज्ञानस्य भ्रमत्वनियमात् ।

---

मञ्जूषा ।

अस्माकमिति । प्राभाकराणां तु रामत्वादिविशिष्टबोधजनकशक्तिकल्पनया नानुपपत्तिः । मनस्त्वादीत्यादिना रामत्वादिपरिग्रहः । विलक्षणेति । सावच्छिन्नत्वनिरवच्छिन्नत्वाभ्याम् । तत्तत्पदार्थत्वादीति । अथ स्वरूपतो रामत्वादिना शक्तिज्ञानासत्त्वात्कुतो रामपदार्थत्वादिना लक्षणाग्रह इति चेद्? जात्यवच्छिन्ने शक्तिघटितलक्षणासंभवाद् । अत्र तदानींतनानां केषां चिन्नामकरणविधायकश्रुतिवशाद्रामादिपदे तदादिपदे चापूर्वतया चेन्द्रादाविवेदानींतनानां तु केषां चिद्रामादिपदे व्यासवाल्मीक्याद्युक्तरामप्रतिमाऽऽदिनिर्माणोपयोगिलक्षणकाण्डार्थग्रहात् स्वरूपतो रामत्वादिविशिष्टे शक्तिनिश्चयः चित्रलेखादिनेदृशो गवयपदवाच्य इतिवद्, अ-

न्त्यवाक्यप्रसिद्धार्थकपदसान्निध्यादिना तु सर्वेषामपि रामादिपद इति बोध्यम् ।

संस्कारानुभवयोः प्रकारत्वाद्यनन्तर्भावेण हेतुत्वेन व्यवहारस्यापि स्वरूपतस्तत्प्रकारकस्मृतौ तादृशशक्तिग्रहापेक्षामाह–वस्तुतस्त्विति । स्वरूपतस्तत्प्रकारकस्मृतेरननुगतोद्बोधकसत्त्वे तादृशस्मरणापत्त्यनवकाशादुक्तम्–अनुगतेति । स्वरूपतस्तत्प्रकारसंस्कारसत्त्व इति शेषः । तादृशज्ञानस्य=स्वरूपतस्तत्प्रकारकशक्तिज्ञानस्य । तदेति । तदुच्चारिततत्पदादित्यादिः । व्युत्पत्तिविरोधः=सामान्यतः शक्तिग्रहासंभवः, तथा चापूर्वचैत्रत्वादिशाब्दबोधानुपपत्तिरिति भावः ।

संबोध्यत्वं=युष्मत्पदजन्यबोधाश्रयत्वेन वक्तुरिच्छाविषयत्वम् । उच्चारणकर्तृत्वम्=अस्मत्पदोच्चारणानुकूलकृतिमत्त्वम् । सम्बोध्यतेति । ज्ञानावच्छेदकत्वेनेच्छामात्रविषयः कृत्यवच्छेदकं वा यच्छरीरं तद्वृत्त्येककालीनव्यक्तिद्वयावृत्तिजातित्वोपलक्षितधर्मविशिष्टावच्छिन्नात्मत्वं क्रमेण युष्मदस्मत्पदप्रवृत्तिनिमित्तमित्यर्थः । चैत्रश्च चैत्राद्यवच्छिन्नात्मादिः । तत्त्वं=चैत्रत्वादिकम् । स्वोच्चारणेति । प्रकारताऽवच्छेदकीभूतसम्बन्धावच्छिन्नत्वमवच्छेदकतायां विवक्षणीयं; तेन समवायेन घटत्वविशिष्टबोधेच्छया प्रयुक्तस्य तत्पदस्य न कालिकादिना घटत्वादिविशिष्टवाचकत्वप्रसङ्गः । सम्बन्धघटकतयेति । संबन्धमध्ये ससंबन्धिकस्योच्चारणस्यान्यसंबन्धित्वाभावान्न तत्र स्वपदार्थप्रवेशे काऽपि क्षतिरिति भावः ।

ननु स्वाप्रवेशेऽपि संबन्धप्रतियोगिभूतपदानां विशिष्य तत्तत्पदव्यक्तित्वेन निवेशाच्छक्तिभेदो दुर्वार इत्यत आह–तत्पदव्यक्तित्वेनेति । ननु शक्तिभेदासत्त्वेऽपि तत्तत्पदव्यक्तित्वादिरूपधर्मावच्छेदेनैव शक्तिग्रहस्य विशिष्य घटत्वादिशाब्दबोधोपयोगितायाः सामान्यतो व्युत्पत्त्यनुपपत्तेरपूर्वचैत्रत्वादिशाब्दबोधो दुरुपपाद इत्यत आह–सामान्यत इति । अस्य व्युत्पत्तिपदार्थे शक्तिग्रहेऽन्वयः, तथा चापूर्वचैत्रत्वाद्यवच्छिन्नविशेष्यकतादृशव्युत्पत्तेर्नानुपपत्तिरिति भावः । तादृशानुपूर्वीविशेषं धर्मिताऽवच्छेदकीकृत्यैव तदुभयसम्बन्धावच्छिन्नतादृशप्रकारतारूपवाचकता ग्राह्येत्यर्थ इति केचित्, तथा सति स्वजनकत्वस्वप्रकारकबुद्धिप्रयोज्यत्वोभयसम्बन्धेन बोधप्रकारकतदादिविशेष्यकसंकेतमप्रदर्श्योक्तसंकेतप्रदर्शनं वक्राभिधानं स्यादतो ग्रन्थकारमते क्वापि पदधर्मिकवाचकताज्ञानस्य न हेतुत्वमिति तदुभयसंबन्धावच्छिन्नस्वनिष्ठप्रकारतानिरूपितसंकेतीयविषयतावत्त्वसंबन्धेन यादृशानुपूर्वीत्वावच्छिन्ना प्रकारता तन्निरूपितविशेष्यत्वावच्छिन्नबोधप्रकारकघटत्वावच्छिन्नविशेष्यकः सं-

केतग्रहोऽभिमत इति न कोऽपि दोषः । स्वोच्चारणानुकूलत्वनिवेशफलमाह–कालान्तरीणेति। एतेन पुरुषान्तरीयबुद्धेः पुरुषान्तरीयतदादिपदोच्चारणाननुकूलत्वं व्यञ्जितम् । तद्विषयतेति। कालान्तरीणबुद्धिविषयताऽवच्छेदकम् । दण्डत्वावच्छिन्नविषयताकत्वसत्त्वेऽपि बुद्धेः स्वोच्चारणानुकूलत्वाभावादिति भावः । न कालान्तरीणेति। घटोऽस्ति तमानयेत्यादावविच्छिन्नत्वविषयत्वविशेषणत्वेन विषयताया इति । अथ तादृशविषयत्वमवच्छिन्नत्वस्यैव न तु विषयताऽवच्छेदकवत इति चेत् ? तादृशविषयत्व आधेयतासंबन्धेन विशेषणत्वस्य वाच्यत्वात् तादृशविशेषणांशे विशेषणत्वेन विषयत्वादिकं वाच्यताऽवच्छेदकत्वादिकं पूर्वोक्तं स्मर्तव्यम्। तदवच्छिन्नबोधः=कालान्तरीणबुद्धिविषयताऽवच्छेदकावच्छिन्नबोधः । तत्र शक्तिज्ञानस्य कथं भ्रमत्वमित्याकाङ्क्षायामाह–तद्धर्मेति । वाचकताया इति । तदादिपदवद्बोधनान्घटइतीत्यादिः । कालान्तरीणबुद्धिप्रकारस्य तदानींतनबुद्धिप्रकारैक्ये तदवच्छिन्नस्यैतत्तदादिपदवाच्यत्वादुक्तम्—अन्येति ।

माधवी ।

प्रमुष्टबुद्धिविषयताऽवच्छेदकांशमिति। प्रमुष्टं स्वाविषयीभूतं बुद्धिविषयताऽवच्छेदकांशं यत्रेति तादृशस्मरणमित्यन्वयः ।

मोषमन्तरेण=स्वाविषयत्वमन्तरेण । तद्विषयकत्वेनैवेति । यद्वस्तुज्ञानसत्त्वे नियमतो घटत्वप्रकारकघटस्मृतिर्जायते तद्वस्तुविषयकज्ञानत्वेन घटत्वप्रकारेण घटविषयकस्यैव प्रमेयत्वेन घटविषयकसंकारवतो घटत्वेन घटविषयकस्य स्मरणस्यापत्त्या प्रकारत्वविशेष्यत्वनिवेशनमावश्यकमित्यतस्तथैव रीत्या स्वरूपतस्तत्प्रकारत्वनिवेशनप्रयोजनमाह–वस्तुत इति । अनुगतोद्बोधकेति। यद्वस्तुज्ञानसत्त्वे नियमत एव स्वरूपतस्तत्प्रकारकस्मरणं तद्वस्तुविषयकज्ञानस्थल इत्यर्थः । स्वरूपतस्तत्प्रकारकशक्तिज्ञानासत्त्वे =स्वरूपतस्तज्ज्ञानजन्यस्वरूपतःसंस्कारासत्त्वे, तत्र=स्वरूपतस्तत्प्रकारकस्मरणे। तादृशज्ञानस्य=स्वरूपतस्तत्प्रकारकज्ञानजन्यतादृशसंस्कारस्येत्यर्थः। बुद्धिविषयताऽवच्छेदकत्वेन घटत्वादिविषयकसंस्कारवतः स्वरूपतो घटत्वादिप्रकारकस्मरणस्वीकर्तृणां तत्रापि कदाचिदिष्टापत्तिसम्भवाद्, बहुजनविवादस्याकिञ्चित्करत्वादिति ध्येयम्। व्युत्पत्तिविरोधश्च=यत्तत्पदस्य व्यवहारो न दृष्टः तत्तत्पदस्य शक्तिग्रहाभावश्चेत्यर्थः । स्वोच्चारणानुकूलबुद्धिप्रकारावच्छिन्नविषयताकत्वे सति स्वोच्चारणविशिष्टविषयताकत्व इत्यर्थः । उच्चारणवैशिष्ट्यं च स्वप्रयोजकबुद्धिप्रकारवन्निष्ठत्वस्वप्रयोजकबुद्धिप्रकारावच्छिन्नत्वोभयसम्बन्धेन;

नातो बुद्धिप्रकारविशिष्टघटादिषु तत्तत्पदवाच्यत्वानुपपत्तिः। बोधे पदजन्यत्वानवगाहिसंकेतविषयतावृत्तित्वानुपगमाज्जन्यत्वाघटितोभयसम्बन्धनिवेशः।

तथाविधसंसर्गान्तःपातिन्या बुद्धिविषयताऽवच्छेदकावच्छिन्नत्वेन विषयताया इति। निष्ठत्वविषयतानिरूपितबुद्धिप्रकारावच्छिन्नविषयताया इत्यर्थः। पदांशे तद्धर्मावच्छिन्नविषयताघटितोक्तेति। तद्धर्मवन्निष्ठा या प्रयोजकबुद्धिप्रकारावच्छिन्नविषयता तन्निरूपितनिष्ठत्वविषयतानिरूपिता सती प्रयोजकबुद्धिप्रकारावच्छिन्नत्वविषयतानिरूपिता योच्चारणनिष्ठविषयता तन्निरूपितविषयत्वविषयतानिरूपिता या बोधविशेष्यता तन्निरूपितप्रकारतावद् तत्पदमित्याकारकं, तादृशविशेष्यतानिरूपितप्रकारतासम्बन्धेन तद्धर्मविशिष्टवत् तत्पदमित्याकारकं, वा यज्ज्ञानं तस्य हेतुत्वादित्यर्थः।

विनोदिनी।

मुरारिमिश्राभिमतप्रकारेण समाधत्ते—केचित्त्विति। शक्त्यनुभव इति। बुद्धिविषयताऽवच्छेदकत्वविशिष्टधर्मावच्छिन्नस्तत्पदशक्य इत्येवंरूपे शक्तिग्रह इत्यर्थः।

स्वरूपतो घटत्वादीत्यादिनोद्बोधकविशेषस्य नियामकत्वं दर्शयति—तादृशहेतुताया इति। स्वरूपतस्तत्प्रकारकस्मरणं प्रति स्वरूपतस्तत्प्रकारकस्यानुभवस्य तादृशसंस्कारस्य च हेतुताया इत्यर्थः। हेतुताऽऽपत्तेरिति। तथा च प्रकारताविशेष्यते अन्तर्भाव्यैव स्मृतिसंस्कारानुभवानां कार्यकारणभावस्य वक्तव्यतया बुद्धिविषयताऽवच्छेदकत्वस्योपलक्षणतयैव शाब्देऽभाननिर्वाहे प्रमोषकल्पना विफलेति भावः। लक्षणयेति। न च रामादिपदेषु शक्तिज्ञानाभावात् कथं लक्षणायोगयतेति शङ्क्यम्, यत्पदं साधु व्युत्पन्नैः प्रयुक्तवरं तत्क्वचिच्छक्तमिति सामान्यव्याप्त्या शक्यताऽवगमस्य सुलभत्वात्।

उद्बोधकवैचित्र्ये स्मृतीयविलक्षणप्रकारत्वाप्रयोजकत्वे साधकान्तरमाह—वस्तुतस्त्विति। तत्र=स्वरूपतस्तत्प्रकारकस्मरणे। तादृशज्ञानस्य=स्वरूपतस्तत्प्रकारकशक्तिग्रहस्य।

अत्र महामहोपाध्यायश्रीराखालदासन्यायरत्नभट्टाचार्यमहाशया ध्यापकपादास्तु अथ रामरावणादिपदेभ्यो लक्षणातस्तत्प्रतिपाद्यत्वादिरूपधर्मेण कथंचिदपीदानीन्तनवाक्यार्थनिर्वाहेऽपि रामादिकं दृष्टवता वाल्मीक्यादिना रामादिनिष्ठवैलक्षण्यबोधतात्पर्येणैव प्रयुक्तरामायणादिवाक्यतो निरुक्तप्रतिपाद्यत्वादिना कथमधुनातनानां तात्पर्यभ्रमविधु-

राणां शाब्दबोधोपपत्तिः सम्भवति, कथं चैतत्काले रावणो नास्तीत्यादिवाक्यार्थोपपत्तिः, लक्षणया तथाऽङ्गीकारे वक्तृतात्पर्य्यानुपपत्तेरेव लक्षणोत्थापकत्वाद् रावणादिपदप्रतिपाद्यत्वरूपसामान्यधर्मस्येदानीन्तनपुरुषेऽपि सत्त्वात्तादृशसामान्यधर्मावच्छिन्नस्यैतत्काले बाधितत्वेन च तादृशवाक्यस्य प्रामाण्यं कथमभ्युपपादयितुं न शक्यते, किं च हरिं स्मरेदित्यादिवाक्यार्थज्ञानतो भगवत्स्मरणे प्रवृत्तिर्न स्याद्, हरिपदप्रतिपाद्यत्वरूपसामान्यधर्मस्य कपिभेकादिसाधारण्येनानुपादेयतया तदवच्छिन्नस्मरणे प्रवृत्त्युपयोगीष्टसाधनत्वनिश्चयासम्भवाद् ।

न च प्रकरणादिना तादृशसामान्यधर्मेण विशेषे तात्पर्यमवधार्य; भवत्येव प्रवृत्तिरिति वाच्यम्, ।

तथा सति प्रमेयं स्मरेदित्यादिवाक्यादपि प्रवृत्त्यापत्तेर्वारयितुमशक्यत्वादिति चेद् ?

न-यतस्तत्तत्स्थले तत्तत्प्रतिपाद्यत्वेन लक्षणा न वक्त्रनुमताः, परं तु यथासंभवं दूर्वादलश्यामत्वलोकोत्तरकारुणिकत्वादिलक्षणधर्मादिना दशवदनत्वादिना च लक्षणाऽभ्युपगमात्सर्वोपपत्तिसामञ्जस्याद् ।

न च वाल्मीकिप्रभृतिना रामत्वादिधर्मस्य साक्षात्कृतस्य लक्ष्यार्थतात्पर्येण प्रयोगकल्पनमनुचितमिति वाच्यम् ।

निसर्गकरुणानां पुराणादिवक्तॄणां संसृतावुत्पत्स्यमानप्राणिवर्गस्य वेदादिकमाकर्ण्य प्रवृत्तये दर्शितधर्मविधया शाब्दसंप्रत्ययर्थं च लक्ष्यार्थतात्पर्येणापि शास्त्रप्रयुक्तेरावश्यकत्वादिति शास्त्रविदालोचितः पन्थाः ।

इदमत्रावधेयम्-हरिं स्मरेदित्यादिसाक्षाद्विधिवाक्यस्थहर्य्यादिपदेषु नैव लक्षणाप्रसरः संभवी "न विधौ परः शब्दार्थः" इति मीमांसकराद्धान्तविरुद्धत्वात्, तथा च प्रमोषपक्ष एव गरीयान्, ।

यत्तु मनस्त्वाद्यतीन्द्रियधर्माणां शाब्दे स्वरूपतः प्रकारतासंपादनाय प्रमोषपक्षोऽनुगतोद्बोधकस्थलरीत्या स्वरूपतस्तत्प्रकारकस्मरणं प्रति स्वरूपतस्तत्प्रकारकसंस्कारस्य कारणताऽऽवश्यकतां प्रदर्श्य ग्रन्थकृता दूषितस्तत्तु न मनोरमं, ग्रन्थकृन्मतेऽतीन्द्रियधर्मप्रकारकस्मरणस्य स्वरूपतोऽलीकत्वेनानुगतोद्बोधकान्वेषणस्य वैयर्थ्यादिति प्राहुः ।

---

युष्मदस्मत्स्थलेऽपीदृश्येव गतिश्चिन्तनीया ।

---

मञ्जूषा ।

ईदृश्येवेति । स्वसंबोध्यताऽवच्छेदकावच्छिन्नविषयताकत्वस्वजन्यत्वोभयसंबन्धेन युष्मत्पदप्रकारको बोधविशेष्यकः संकेतः । एवं स्वोच्चारयितृताऽवच्छेदकधर्मावच्छिन्नविषयताकत्वस्वजन्यत्वोभयसंबन्धेनास्मत्पदप्रकारकः बोधविशेष्यकः संकेत इत्यर्थः ।

माधवी ।

ईदृश्येव गतिश्चिन्तनीयेति । स्वजन्यबोधवत्त्वेनाभिप्रायविषयताऽवच्छेदकावच्छिन्नविषयकत्वस्वजन्यत्वोभयसम्बन्धेन बोधो युष्मत्पदवान् भवत्वित्याकारकस्य सङ्केतस्य युष्मत्पदस्थले, स्वोच्चारणकर्तृताऽवच्छेदकावच्छिन्नविषयकत्वस्वजन्यत्वोभयसम्बन्धेन बोधोऽस्मत्पदवान् भवत्वित्याकारकसङ्केतस्यास्मत्पदस्थले च स्वीकाराद् नानुपपत्तिः । अत्रापि पूर्वोक्तरीत्या परिष्कार्यमतो न पूर्वोक्तानुपपत्तिरिति ध्येयम् ।

विनोदिनी ।

युष्मदस्मच्छब्दयोः शक्तिं वक्तुं प्रक्रमते—युष्मदिति ।

ईदृश्येवेति । युष्मत्पदप्रकारकबोधविशेष्यकेश्वरसंकेतोऽत्रापीत्यर्थः । तदाकारस्तु—युष्मत्पदविशिष्टो बोधो भवत्वित्येवंरूपः, वैशिष्ट्यं च स्वघटितवाक्यजन्यबोधाश्रयत्वप्रकारकेच्छोद्देश्यताऽवच्छेदकत्वोपलक्षितधर्मावच्छिन्नविषयकत्वस्वजन्यत्वोभयसंसर्गेण ।

एवमस्मत्पदप्रकारकबोधविशेष्यकेश्वरसंकेतीयाकारोऽप्यस्मत्पदविशिष्टो बोधो भवत्वित्येवमात्मकः, वैशिष्ट्यं च स्वोच्चारयितृताऽवच्छेदकत्वोपलक्षितधर्मावच्छिन्नविषयकत्वस्वजन्यत्वोभयसंसर्गेणेति बोध्यम् ।

उभयत्रापि स्वत्वस्य संसर्गकुक्षिप्रविष्टतया नाननुगमः पूर्वोक्तदिशेत्यवसेयम् ।

---

अथ स्वसम्बोध्ये युष्मदः स्वोच्चारयितरि चास्मदः शक्तौ "देव्युवाच, मया त्वयि हतेऽत्रैव गर्जिष्यन्त्याशु देवता" इत्यादिऋष्यादिवाक्याद् देवीकर्तृकमहिषासुरकर्मकघातादिबोधानुपपत्तिः, तत्र देव्युच्चरितत्वस्य महिषासुरसम्बोध्यत्वस्य चाभावाद्, ऋष्यादिकर्तृकसुरथकर्मकघाता-

दिबोधस्य च योग्यताभ्रमादापत्तिश्च, ऋष्यादेस्तादृश-वाक्यप्रयोक्तृत्वात्सुरथादेश्च तत्सम्बोध्यत्वादिति चेद् ? न—

तत्र तादृशानुपूर्वीप्रकारेण सामान्यप्रत्यासत्त्या देव्यादिवाक्यस्यापि ज्ञानाद्देवीमहिषासुरयोस्तादृशवाक्यप्रयोक्तृत्वसम्बोध्यत्वप्रतिसंधानादेवास्मद्युष्मद्भ्यां देवीमहिषासुरादिप्रतीत्युपपत्तिः । यदि च तत्र वक्त्रनुवादकवाक्ययोर्विभिन्नैवानुपूर्वी तदाऽनुवादकवाक्ये तद्व्यक्तित्वादिना विशेषदर्शनेऽप्यानुपूर्वीप्रकारेण देव्युच्चरितत्वादिभ्रमादेव श्रोतुर्देव्यादिप्रतीतिस्वीकारेणानुपपत्त्यभावात् । यत्र च तादृशानुपूर्वीविशेषावच्छेदेनापि विशेषदर्शनं तत्र नेष्यतएव तत्प्रतीतिः । एवमन्यदीयस्वार्थतात्पर्यकोच्चारणानधीनोच्चारणरूपं स्वतन्त्रोच्चारणमस्मत्पदप्रवृत्तिनिमित्तानुगमकम्, उक्तस्थल ऋष्याद्युच्चारणं च न तथा, तस्यार्थप्रतिपादनद्वारा देव्युच्चारणाधीनत्वादिति नास्मच्छब्दादृष्यादिबोधः । स्वातन्त्र्येणाहं गच्छामीत्युच्चारणस्यापि को-गच्छतीत्यादिप्रश्नवाक्यशक्तिग्राहकवाक्योच्चारणाधीनतया स्वार्थपरत्वमुच्चारणविशेषणम् , प्रश्नवाक्यस्य चाहङ्गच्छामीत्यादिप्रकृतवाक्यतात्पर्यविषयपरत्वाभावाद् तदुच्चारणे विशिष्टव्यतिरेकः सुघटः । आनुपूर्वीसजातीयं यद्व्यक्त्यन्तरं तदुच्चारणानधीनत्वं च निवेशयितुमशक्यं शब्दानुकरणस्थल एव समानानुपूर्वीकोच्चारणापे-

क्षानियमाद्, वाक्यार्थानुवादस्थले समानार्थकवाक्यमात्रोच्चारणापेक्षणात् तत्र स्वातन्त्र्यापत्तेर्दुर्वारत्वात् ।

वस्तुतस्तु वाक्यान्तरस्थक्रियाकर्मताऽऽपन्नस्वघटितवाक्यार्थप्रत्यायनेच्छाऽनधीनं स्वोच्चारणमेव स्वतन्त्रोच्चारणम् । अनुवादस्थले चेत्युवाचेतिवाक्यान्तरस्थक्रियाकर्मतया तदर्थघटितवाक्यार्थं प्रतिपादयितुमेवानुवादकोऽस्मद्घटितवाक्यं प्रयुङ्क्त इति न स्वातन्त्र्यम् । मां पश्येत्यत्र प्रकृतवाक्यस्थज्ञानरूपक्रियाकर्मतया स्वं प्रतिपादयितुमेवास्मदः प्रयोगात्तदुच्चारणस्य स्वातन्त्र्यानिर्वाहाय—वाक्यान्तरेति । एतेन यत्र चैत्रेणान्यदीयाच्चैत्रः सुन्दरइत्यादिवाक्यादेव वाक्यार्थं प्रतीत्याहं सुन्दर इति प्रयुज्यते तत्र स्वसमानार्थकवाक्योच्चारणसापेक्षत्वेऽपि न स्वातन्त्र्यक्षतिर्न वा स्वपाण्डित्याभिमानिमौनिपुरुषज्ञानपरस्यायम"हं पण्डित" इति जानातीत्यन्यदीयोच्चारणस्य स्वातन्त्र्यापत्तिः ।

अथैवं रीत्याऽव्यवहितोक्तस्थलेऽहंपदेनोच्चारयितृपुरुषविषयकप्रतीतिवारणेऽप्यभिमानिनस्तेन प्रत्ययोदुरुपपाद एव तस्योच्चारणाभावेनास्मत्पदावाच्यत्वादिति चेत् ? सत्यम्—

स्वतन्त्रोच्चारयितुः सर्वत्रास्मदर्थत्वे स्यादेवेयमनुपपत्तिस्तदेव न,स्वतन्त्रोच्चारितास्मत्पदस्यैव तद्वाचकत्वाद्,

निरुक्तस्वतन्त्रोच्चारणरहितस्य चास्मदः स्वघटितवाक्यार्थकर्मकवाक्यान्तरस्थक्रियाकर्तर्येव शक्तिः, एवञ्च मया त्वयि हतेऽत्रैवेत्यादौ तादृशक्रिया देव्युवाचेतिवाक्यान्तरस्थोक्तिक्रियैव; तत्कर्तृत्वं देव्या इति पूर्वोक्तभ्रमं विनैव तत्प्रतीतिरुपपादयितुं शक्यते। स्वघटितवाक्यार्थकर्मकवाक्यान्तरस्थक्रियात्वं च तादृशार्थकर्मकत्वेन वाक्यान्तरप्रतिपाद्यत्वं, तेनाहं पण्डित इति विद्वांसं पश्येत्यादौ दर्शनादिक्रियाया अस्मच्छब्दघटितवाक्यार्थविषयकत्वसंभवेऽपि तेन रूपेण समभिव्याहृतवाक्यान्तराप्रतिपाद्यतया न तत्क्रियाकर्त्तुरस्मच्छब्दतः प्रतीतिः।

अथ इतिपदघटितवाक्यान्तरात् क्रियाप्रतिपत्तावेव तत्कर्तुर्वाक्यान्तरप्रतिपाद्यक्रियाकर्तृत्वं सुग्रहं; तद्ग्रह एव च तद्घटितानुगमकरूपेणास्मच्छब्दशक्तिग्रहेऽस्मच्छब्दघटितवाक्यार्थप्रतीतौ तस्येतिपदादुपस्थित्या वाक्यान्तरक्रियाप्रतिपत्तिरित्यन्योन्याश्रय इति चेद्? न—

वाक्यान्तरजन्यत्वोपरक्तप्रतिपत्तिविषयतया वक्तृबुद्धिस्थत्वस्यैव क्रियायां विशेषणत्वोपगमात्प्रतिपत्तेः पूर्वमपि तादृशवक्तृबुद्धेर्ग्रहसंभवेनान्योन्याश्रयानवकाशात्। स्वार्थघटितवाक्यार्थविषयकत्वान्वितक्रियाकर्तृतया वाक्यान्तरप्रतिपाद्यत्वेन या वक्तृबुद्धिस्तद्विषयताऽवच्छेदकत्वं प्रवृत्तिनिमित्तानुगमकमिति तु सारम्। एवं च बुद्धिविष-

ताऽवच्छेदकत्वस्य प्रवृत्तिनिमित्तानुगमकत्वप्रवादोऽपि संगच्छते । उच्चारणकर्तृत्वानुगमकशरीरेऽपि मिश्राणां बुद्धिस्थत्वनिवेशबीजं तु नावधारयामः ।

---

मञ्जूषा ।

स्वसंबोध्यत्वं=स्वजन्यबोधाश्रयतया वक्त्रभिप्रायविषयत्वम् । सामान्यप्रत्यासत्त्येति । सामान्यप्रत्यासत्त्यनुपगमेऽपि स कालो मयेत्याद्यानुपूर्वीविशिष्टपदवान् तदेतदन्यतरकालत्वादित्यनुमितौ देव्युच्चरितयुष्मदस्मत्पदयोर्भानं, तन्मत आनुपूर्वीप्रकारेण यत्किंचित्पदव्याप्तेः तदवच्छिन्नयावद्व्याप्तित्वात् । विभिन्नेति । त्वां हन्म्यहं ततोऽत्रैव गर्जिष्यन्त्याशु देवता इत्यादिवक्तृवाक्यम् । तद्व्यक्तित्वादिनेति । तद्व्यक्तित्वं धर्मिताऽवच्छेदकीकृत्य देव्युच्चरितत्वाभावनिश्चयेऽपीत्यर्थः।एवमग्रेऽपि।एतावता देवीप्रत्ययमुपपाद्य; ऋषिप्रत्ययं वारयति-एवमिति । अन्यदीयत्वम्=अन्यकर्तृकत्वम् । अस्मदिति । ईदृशस्वतन्त्रोच्चारणानुकूलकृत्यवच्छेदकत्वोपलक्षितधर्मावच्छिन्ने शक्तिरित्यर्थः । स च धर्मश्चैत्रत्वादिः । अर्थप्रतिपादनद्वारेति वक्त्रनुवादकवाक्ययोर्विभिन्नानुपूर्व्यस्थलसंग्रहार्थम् । स्वार्थः=प्रकृतवाक्यघटकास्मच्छब्दतात्पर्यविषयः, प्रकृतमृष्याद्यनुवादकवाक्यमिति तत्तात्पर्यविषयो देवीति तदस्मच्छब्दादेव बोधः, एवं च शक्तिग्राहकवाक्यस्य स्वार्थतात्पर्यकत्वं दुर्वारं तद्घटकास्मच्छब्दस्य स्वरूपात्मकस्वार्थपरत्वादिति न शङ्क्यम् ।

यत्तु तत्र स्वपदं नास्मच्छब्दत्वावच्छिन्नपरं किन्तु विशिष्यास्मच्छब्दपरं, न चैवमननुगमः, तादृशानधीनत्वकूटस्य निवेश्यत्वादिति समाधानं, तद्वृथा तुच्छतरं च, स्वशब्दस्यानुगतार्थत्वाभावस्य सर्वनैयायिकसिद्धत्वात्; स्वार्थेतिस्वपदस्यानुवादकऋष्यादिवाक्यघटकास्मच्छब्दपरत्वाच्च । देव्युच्चरितत्वभ्रमं विनैव तत्र देवीप्रत्ययः संभवतीत्याह—वस्तुतस्त्विति । इत्युवाचेति । मया त्वयीत्यादिवाक्याद्देवीकर्तृको महिषासुरकर्मको घात इति बोधः । महिषासुरमित्युवाचेति वाक्याच्च महिषासुरनिष्ठतथाविधघातबोधजनकवाक्यानुकूलकृतिमती देवीति बोधः । वाक्यार्थस्य कर्मताप्रत्यायनाय स्वमिति पदं प्रयुक्तं, ज्ञानानुकूलवाक्यं वचधात्वर्थः तदेकदेशे ज्ञाने तादृशघातरूपवाक्यार्थस्य विषयत्वं संसर्गः, अत एव रूपं निरूपयतीत्यादौ ज्ञानानुकूलव्यापारो धात्वर्थो, विष-

यत्वं कर्मत्वं, न त्वाश्रयत्वं तथा सति चैत्रो रूपं निरूपयतीत्यादौ चैत्रादेरपि द्वितीयाऽऽपत्तेरित्युक्तं, मद्वाक्येन तथाविधदेवीप्रत्ययवान्सुरथो भवत्वितीच्छा तादृशप्रत्यायनेच्छा, पचन्तं त्वामहं जानामीत्याद्युच्चारणस्य स्वातन्त्र्यनिर्वाहाय स्वघटितेति। स्वपदमनुवादकोच्चरितास्मच्छब्दपरम्। एतेन स्वपदस्य नास्मच्छब्दसामान्यमर्थः; अस्मच्छक्तमित्यहं जानामीत्याद्यस्मच्छब्दोच्चारणस्य स्वातन्त्र्यानुपपत्तेः, तदुच्चारणस्य घटितवाक्यार्थभूतशक्तिप्रत्यायनेच्छाऽधीनत्वात् किन्तु तत्तदस्मच्छब्दएवेत्यपाकृतं, तत्र वाक्यान्तरस्थास्मछब्दोच्चारणस्य तादृशेच्छाऽधीनभिन्नत्वात्। पूर्वकल्पेऽस्वरसमाह–एतेनेति। अव्यवहितोक्तस्थले=स्वपाण्डित्याभिमानिमौनिपरेऽयमहं पण्डित इति जानातीत्यादौ, तेन=अहंपदेन, अस्मदिति। उच्चारयितर्येवास्मच्छब्दशक्तेरिति भावः। तदेव नेति। सर्वेषामस्मच्छब्दानां स्वतन्त्रोच्चारयितर्येव शक्तिरिति नेत्यर्थः। स्वघटितेति। स्वमस्मत्पदम्। तादृशार्थकर्मकत्वेनेति। तादृशार्थावच्छिन्नकर्मतावृत्त्यवच्छेदकताकत्वं तृतीयाऽन्तार्थः। विद्वांसं=जानन्तं,तेन रूपेण=अस्मच्छब्दघटितवाक्यार्थविषयकत्वेन। वाक्यान्तरेति।इतिपदास्मत्पदघटितवाक्यान्तरेत्यर्थः। तादृशवाक्यार्थज्ञानिकत्वेन दर्शनप्रत्ययादिति भावः। तस्य=स्वघटितवाक्यार्थस्य। इतिपदस्य प्रतीतोपस्थापकत्वादिति भावः। वाक्यान्तरप्रतिपाद्यतया=वाक्यान्तरजन्यत्वोपरक्तप्रतिपत्तिविषयतया, क्व चित्तथव पाठः। तादृशवक्तृबुद्धिस्थक्रियाकर्तरि शक्तिस्वीकारो न संभवति तद्बुद्ध्याऽस्मत्पदाप्रयोगादित्यालोच्याह–स्वार्थेति। धात्वर्थे धात्वर्थताऽवच्छेदके वा ज्ञाने वाक्यार्थस्य कर्मत्वाद्विषयपदम्। अयमहं पण्डित इति; कोगच्छतीत्यादौ स्वघटितवाक्यार्थस्य हेतुत्वेऽपि तद्घटितक्रियाकर्तरि शक्तिरूढा। कर्तृतयेति। वाक्यान्तराधीनप्रतिपत्त्यन्वयिप्रकारता तृतीयाऽर्थः। वक्तृबुद्धिः=वाक्यान्तरप्रतिपत्तिविषयतावती देवीति स्वोच्चारणानुकूलबुद्धिः। एवं चेति। अतोऽपि स्वोच्चारणानुकूलतथाविधबुद्धिविषयताऽवच्छेदकधर्मावच्छिन्नविषयताकत्वस्वजन्यत्वोभयसम्बन्धेनास्मत्पदवान्बोधो भवत्विति संकेतः, तेन कालान्तरीणादिबुद्धिमादाय न दोषः।

निरुक्तस्वतन्त्रोच्चारणकर्तृत्वेन वक्तृबुद्धिप्रकारत्वं निवेशयतां मिश्राणां मतं खण्डयति-उच्चारणेति। उच्चारयितृताऽवच्छेदके बुद्धिप्रकारत्वस्याव्यावर्तकत्वात् कालान्तरीणकृतेः स्वोच्चारणानुकूलत्वात्प्रतियोगिकोटौ प्रतिपत्तिप्रवेशेनान्योन्याश्रयाभावाच्चेति भावः।

माधवी।

अन्यदीयं स्वार्थबोधतात्पर्यकं यद्वाक्यं तदुच्चारणाधीनं यत्तद्-

न्योच्चारणरूपमित्यर्थः। एतेनोच्चारणे स्वार्थबोधतात्पर्यकत्वविरहेऽपि न क्षतिः। तदर्थं=स्वघटितवाक्यार्थं, मां पश्येत्यत्र मत्पुत्रं पश्येत्यपि क्वचित् पाठः।

स्वपाण्डित्याभिमानिपुरुषेति। अभिमानिपुरुषोच्चारितादहं पण्डित इति वाक्यादर्थं प्रतीत्यायमहं पण्डित इति जानातीत्यभिमानेन तादृशोच्चारणस्य स्वातन्त्र्यापत्तिशङ्का, 'अतोऽभिमानिपुरुषे मौनित्वविशेषणम्। अव्यवहितोक्तस्थले=अयमहं पण्डित इति जानातीति स्थले, तादृशार्थकर्मकत्वेन वाक्यान्तरप्रतिपाद्यत्वं=स्वघटितवाक्यार्थकर्मकत्वविषयतानिरूपितवाक्यान्तरजन्यप्रतीतिविषयीभूताश्रयत्वमित्यर्थः।

वाक्यान्तरप्रतिपाद्यक्रियाकर्तृत्वं सुग्रहमिति। वाक्यान्तरजन्यप्रतीतिविषयत्वाश्रयक्रियाकर्तृत्वं, सुग्रहं=निश्चयात्मकग्रहविषय इत्यर्थः। अन्यथा पदार्थसत्त्वेऽपि सन्देहो भवति, क्रियाप्रतिपत्तौ च तद्विषयत्वावधारणेन तादृशविषयताऽऽत्मकपदार्थनिश्चयो भवतीति भावः।

वाक्यान्तरप्रतिपाद्यतया=वाक्यान्तरप्रतिपत्तिविषयत्वेन। वक्तृबुद्धिस्थत्वस्यैव=वक्तृबुद्धिविषयत्वस्यैव, तथा च स्वघटितवाक्यार्थकर्मकत्वविषयतानिरूपितवाक्यान्तरप्रतिपत्तिविषयत्वविषयतानिरूपितवक्तृबुद्धिविषयताऽऽश्रयत्वं क्रियाविशेषणं पर्य्यवसितं,वक्तृबुद्धिः=स्वघटितवाक्यार्थकर्मत्वविषयतानिरूपितवाक्यान्तरप्रतिपत्तिविषयतावत्युक्तिक्रियेष्टसाधिकेत्याकारिका। स्वार्थघटितेति। स्वार्थघटितवाक्यार्थकर्मकत्वविषयतानिरूपितक्रियाविषयतानिरूपितकर्तृत्वविषयतानिरूपिता या वाक्यान्तरजन्यप्रतीतिविषयता तन्निष्ठविषयतानिरूपिता या वक्तृबुद्धिविषयता तदवच्छेदकत्वं प्रवृत्तिनिमित्तानुगमकम्। तादृशवक्तृबुद्धिश्च स्वघटितवाक्यार्थकर्मकत्वविषयतानिरूपितक्रियाविषयतानिरूपितकर्तृत्वविषयतानिरूपितवाक्यान्तरप्रतिपत्तिविषयतावती देवीष्टसाधिकेत्याकारिका, देव्याः सिद्धत्वेऽपि तादृशविशेषणविशिष्टाया असिद्धत्वादेव तादृशविशिष्टविषयताकेष्टसाधनताज्ञानात् तादृशविशिष्टविषयताकेच्छातो वाक्यप्रयोगसम्भवः।

अथ वा तादृशकर्तृत्वविषयतानिरूपितदेवीनिष्ठविषयताशालिज्ञानमिष्टसाधनमित्याकारकज्ञानीया देवीनिष्ठा या तादृशवाक्यान्तरजन्यप्रतीतिविषयता तन्निरूपिताधेयत्वसम्बन्धावच्छिन्ना या विषयता तदवच्छेदकत्वं प्रवृत्तिनिमित्तानुगमकं, तादृशविषयतावत्त्वे चेच्छाविषयताऽवच्छेदकत्वस्य प्रवृत्तिनिमित्तानुगमकत्वसम्भवेऽपि प्रवादरक्षाऽर्थं बुद्धिपर्यन्तानुसरणमित्याह--एवमिति।

विनोदिनी ।

अन्यदीयेति । एवं च प्रकृतास्मत्पदघटितवाक्यजन्यबोधाश्रयत्वप्रकारकेच्छाप्रयोज्योच्चारणमिति फलति । अस्मत्पदेति । तथा च स्वतन्त्रोच्चारितमस्मत्पदं स्वीयान्यदीयस्वार्थतात्पर्यकोच्चारणानधीनोच्चारणकर्त्तृत्वोपलक्षितात्मत्वावच्छिन्नशक्तमिति भावः । वाक्यान्तरप्रतिपाद्यतयेति । अस्मत्पदघटितवाक्यार्थकर्मकत्वनिष्ठप्रकारतानिरूपकत्वविशिष्टवाक्यान्तरजन्यप्रतिपत्तिनिरूपितविषयतानिष्ठप्रकारतानिरूपकवक्तृज्ञाननिरूपितविषयताऽऽपन्नक्रियाकर्त्तर्यस्मत्पदस्य शक्तिस्वीकार इत्यर्थः । वक्तृज्ञानं च प्रकृते—देवीकर्त्तृकमहिषासुरकर्मकहननोत्तरकालिकाशुभविष्यद्गर्जनकर्त्तृदेवताकर्मकत्वनिष्ठप्रकारतानिरूपितत्वविशिष्टदेवीकर्त्तृकत्वनिष्ठविशेष्यतानिरूपितेतिपदघटितवाक्यजन्यप्रतिपत्तिनिरूपितविषयताशालिनी वचनक्रियेत्येवंरूपम् । सारमिति । स्वघटितवाक्यार्थकर्मकत्वनिष्ठविषयतानिरूपितक्रियानिष्ठविषयतानिरूपितकर्त्तृत्वनिष्ठविषयतानिरूपितवाक्यान्तरजन्यप्रतिपत्तिविषयतानिष्ठप्रकारतानिरूपितवक्तृबुद्धिनिरूपितविषयताऽवच्छेदकत्वोपलक्षितधर्मावच्छिन्नमस्मत्पदशक्यताऽवच्छेदकमिति निष्कृष्टार्थः ।

---

एवं युष्मत्पदप्रवृत्तिनिमित्तानुगमकगर्भनिविष्टं स्वसम्बोध्यत्वमपि वाक्यान्तरस्थक्रियाकर्मत्वेन स्वघटितवाक्यार्थानवगाहिनी या स्वजन्यप्रतीतिस्तदाश्रयत्वेनेच्छाविषयत्वम् । अनुवादकेन यः सम्बोध्यते स नानुवादकोच्चारितयुष्मच्छब्दनिरूपितनिरुक्तसम्बोध्यतावान् वक्तृप्रतिपाद्यतया युष्मदर्थघटितवाक्यार्थघटितो यो वाक्यार्थकर्मकोक्तिक्रियाघटितवाक्यार्थस्तद्विषयकत्वविशिष्टप्रतिपत्त्याश्रयत्वेनैव तस्यानुवादकेच्छाविषयत्वाद्, यदि चेतिपदघटितवाक्यार्थप्रतीतिरूपफलेच्छाऽधीना युष्मदर्थघटितप्रतीतिविषयिणी तादृशवाक्यार्थांशे वाक्यान्तरस्थक्रियाकर्म-

त्वानवगाहिन्यपि तादृशवाक्योच्चारणानुकूलाऽनुवक्तुरिच्छा सम्भवतीति तादृशेच्छामादायानुवादकसम्बोध्यस्य सम्बोध्यताऽऽपत्तिरिति मन्यते ? तदा वाक्यान्तरार्थप्रतीतीच्छाऽनधीनत्वमपीच्छाविशेषणं देयमिति मया त्वयि हतेऽत्रैवेत्यादौ न सुरथादिविषयकप्रतीतिः, एवमभ्रान्तस्य ततो-महिषासुरादिप्रतीतिनिर्वाहाय वाक्यान्तरस्थस्वघटितवाक्यार्थकर्मकक्रियाकर्मण्यपि युष्मदः शक्त्यन्तरं स्वीकरणीयं, तत्र देवी महिषासुरमित्युवाचेत्यादिवाक्यस्थक्रियाकर्मत्वं महिषासुरादेरिति तस्यापि त्वयीत्यादिशब्दार्थतोपपत्तिः। अत्रापि पूर्ववत् स्वघटितवाक्यार्थविषयकत्वान्वितक्रियाकर्मतया वाक्यान्तरप्रतिपाद्यत्वेन या वक्तृबुद्धिस्तद्विषयताऽवच्छेदकत्वेनानुगतानां चैत्रत्वमहिषासुरत्वादीनां प्रवृत्तिनिमित्तत्वं बोध्यम् । सम्बोध्यत्वघटितानुगमकशरीरे च बुद्धिविषयताऽवच्छेदकत्वनिवेशनं-मिश्रोक्तमनुपादेयमेव, सम्बोध्यताऽवच्छेदके बुद्धिप्रकारत्वस्याव्यावर्तकत्वात् ।

अथ तात्पर्यसत्त्वेऽहमत्रास्मीति मैत्रो जानातीत्यादिचैत्रवाक्यस्थास्मच्छब्दाच्चैत्रोऽपि प्रतीयते तत्र चैत्रस्य स्वघटितवाक्यार्थकर्मकक्रियाकर्तृत्वाभावात् तदुच्चारणस्य निरुक्तस्वातन्त्र्याभावाच्चानुपपत्तिः, एवं मैत्र ! त्वया भुक्तमिति मया श्रुतमित्यत्र मैत्रस्य युष्मच्छब्देन प्रत्याय-

नात्तस्य च वाक्यान्तरस्थक्रियाकर्मत्वस्य निरुक्तेच्छा-विषयत्वरूपसम्बोध्यत्वस्य चाभावात्कथमुपपद्यतामिति चेत् ? तर्हि न स्वातन्त्र्यमुच्चारणविशेषणं सम्बोध्यत्व-घटकेच्छायां निरुक्तेच्छाऽनधीनत्वादिविशेषणञ्च त्याज्य-मेव, मया त्वयि हतेऽत्रैवेत्यादौ तात्पर्यविरहादेवानुवाद-कतत्सम्बोध्ययोर्मया त्वयि हतइत्यादिनाऽप्रतिपादनोपप-त्तेः । न चैवं बुद्धिविषयताऽवच्छेदकावच्छिन्न एव युष्म-दस्मदोरपि शक्तिरास्ता; किं सम्बोध्यत्वोच्चारयितृताऽव-च्छेदकावच्छिन्ने शक्तिस्वीकारेण ? तात्पर्यादेवातिप्रसङ्गभ-ङ्गादिति वाच्यम् । तात्पर्यसत्त्वेऽपि चैत्रोच्चरितादहं क-रोमीतिवाक्याच्चैत्रं बोधयितुं प्रयुक्तात्त्वङ्गच्छेत्यादिवाक्या-च्चोच्चारयितृत्वसम्बोध्यत्वभ्रमं विना मैत्रादेर्बोधस्य स-र्वानुभवविरुद्धत्वाद्, अन्यथा तत्तात्पर्येण स्वरसत-एव तथाप्रयोगापत्तेः ।

---

मञ्जूषा ।

तस्य=अनुवादकसंबोध्यस्य । "तस्यानुवादकपुरुषीयवाक्यार्थकर्मको-क्तिक्रियाघटितमहावाक्यार्थघटकयुष्मदर्थघटितावान्तरवाक्यार्थप्रतीत्या-श्रयत्वेनाभिप्रायविषयत्वेऽपि तादृशाभिप्रायेऽपि तादृशावान्तरवाक्यार्थ-स्योक्तिक्रियाकर्मत्वेनैव भानादि"ति क्व चित्पाठः ।

वाक्यान्तरस्थक्रियाकर्मत्वानवगाहिनीति । तादृशकर्मत्वेन वाक्यार्था-वगाहिन्याः प्रागुक्तविशेषणेनैव वारणादिदम् । स्वघटितेति । स्वं युष्मत्पदं-वाक्यार्थो महिषासुरहननम् । नन्वत्राप्यन्योन्याश्रयः-इतिपदघटितवाक्या-न्तरस्थक्रियाप्रतिपत्तावेव तत्कर्मत्वग्रहेण तद्घटितानुगमकरूपग्रहाद्युष्म-च्छब्दघटितवाक्यात् तदर्थप्रतीतिः; तस्यां च तस्या इतिपदादुपस्थित्या

वाक्यान्तरात् क्रियाप्रतिपत्तेः स्वघटितवाक्यार्थकर्मकत्वेन वाक्यान्तरप्रतिपाद्यतया वक्तृबुद्धिस्थक्रियाप्रवेशे तादृशबुद्धेर्न युष्मत्पदप्रयोग इत्यत आह--अत्रापीति । प्रकृते तादृशक्रियाकर्मत्वेन स्वघटितवाक्यार्थानवगाहिस्वजन्यप्रतीत्याश्रयत्वेनेच्छाविषयत्वेन च वक्तृबुद्धिविषयताऽवच्छेदकत्वेन । मिश्रोक्तमनुगमकरूपं खण्डयति-संबोध्यत्वेति । अव्यावर्तकत्वादिति । कालान्तरीणेच्छावारणाय तत्रेच्छाया वक्त्रीयत्वस्य निवेश्यत्वात् प्रतियोगिकोटिनिविष्टप्रतिपत्त्याऽन्योन्याश्रयाभावादिति भावः । अनधीनत्वादीत्यादिना वाक्यान्तरस्थक्रियेत्यादि विशेषणम् । संबोध्य एव युष्मदुच्चारयितर्येव चास्मदः शक्तिं व्यवस्थापयितुं; तयोः शक्त्यन्तरं संबोध्यत्वोच्चारयितृत्वयोर्विशेषणान्तरं च त्याजयिष्यन्नाह-अथेति ।

माधवी ।

स्वसम्बोध्यत्वमपीति । अनवगाहिनीति । वाक्यान्तरस्थक्रियाविषयतानिरूपितकर्मत्वविषयतानिरूपितस्वघटितवाक्यार्थविषयताशून्येत्यर्थः ।

*उक्तिक्रियाकर्मत्वेनैव भानादिति । स्वघटितवाक्यार्थकर्मकोक्तिक्रियाकर्तृत्ववद्देवीविषयकस्वजन्यबोधवान् सुरथो भवत्वित्याकारकेच्छायां वाक्यान्तरस्थोक्तिक्रियाविषयतानिरूपितकर्मत्वविषयतानिरूपितस्वघटितवाक्यार्थविषयताशून्यत्वाभावादित्यर्थः ।

मन्यत इति । महावाक्यार्थबोधे अवान्तरवाक्यार्थबोधस्य हेतुतया तादृशफलेच्छाऽधीनायास्तादृशोपायविषयकेच्छाया आवश्यकत्वादिति भावः । वाक्यान्तरार्थप्रतीतीति । वाक्यान्तरार्थक्रियाकर्मत्वरूपविषयतानिरूपितस्वघटितवाक्यार्थविषयताशालिप्रतीतीच्छाऽनधीनत्वमपीत्यर्थः । तादृशप्रतीतीच्छाऽनधीनत्वमिति पाठेऽपि युक्त एवार्थः। अत्रापि पूर्ववदिति। अस्मच्छब्दशक्त्यनुगमस्थलीयोक्तरीत्या त्वं पण्डित इति विद्वांसं पश्येत्यादौ दर्शनकर्मणि युष्मत्पदशक्तेर्वारणाय स्वघटितवाक्यार्थकर्मकत्वेन वाक्यान्तरप्रतिपत्तिविषयताऽऽश्रयक्रियाकर्मण्येव शक्तिर्वाच्या,तथा च प्रागुक्तरीत्याऽन्योन्याश्रय इति स्वघटितेत्याद्युक्तिः। स्वघटितवाक्यार्थविषयकत्वान्वितेति । स्वघटितवाक्यार्थविषयकत्वनिरूपिता याऽऽधेयत्वसम्बन्धेन महिषासुरनिष्ठविषयतानिरूपितकर्मत्वविषयतानिरूपितवाक्यान्तरस्थक्रियाविषयता तन्निरूपितकर्तृत्वविषयतानिरूपितविषयता-

* सम्बोध्यतावानित्यस्याग्रे तस्यानुवादकपुरुषीयवाक्यार्थकर्मकोक्तिक्रियाघटितमहावाक्यार्थघटकयुष्मदर्थघटितावान्तरवाक्यार्थप्रतीत्याश्रयत्वेनाभिप्रायाविषयत्वेऽपि तादृशाभिप्रायेऽपि तादृशावान्तरवाक्यार्थस्योक्तिक्रियाकर्मत्वेनैव भानादिति क्व चित्पाठस्तदनुसारेण टीका ।

वद्देवीष्टसाधिकेत्याकारकवक्त्रिष्टसाधनताज्ञानीयताद्रूशक्रियाकर्मत्वविषयतानिरूपितवाक्यान्तरजन्यप्रतिपत्तिविषयतानिरूपिताधेयत्वसम्बन्धावच्छिन्नविषयताऽऽत्मिकायास्ताद्रूशक्रियाकर्मताया वाक्यान्तरप्रतिपाद्यत्वेन वक्तृबुद्धिविषयतायाः महिषासुरादेरक्षतत्वमेवेति ।

वाक्यान्तरस्थक्रियाकर्मता मुख्या ग्राह्या, नातः ताद्रूशक्रियाकर्मतया वाक्यान्तरप्रतिपाद्यत्वेन वक्तृ बुद्धिविषयतायाः स्वघटितवाक्यार्थे सत्त्वेऽपि क्षतिः ।

अथ वा स्वघटितवाक्यार्थविषयकत्वप्रकारतानिरूपितक्रियात्वावच्छिन्नविशेष्यत्वावच्छिन्नकर्मत्वप्रकारतानिरूपिताधेयत्वसम्बन्धावच्छिन्ना या विषयता तन्निरूपितविषयताविवक्षणान्नानुपपत्तिरिति ध्येयम् ।

विनोदिनी ।

इदानीं युष्मत्पदशक्ये स्वसंबोध्यताऽवच्छेदकत्वोपलक्षितधर्मावच्छिन्नेऽन्तर्गतस्वसंबोध्यताऽवच्छेदकत्वरूपयुष्मत्पदप्रवृत्तिनिमित्तानुगमकघटकस्वसंबोध्यत्वमपि विशिनष्टि—एवमिति ।

त्याऽथमेवेति । एवं चास्मत्पदस्योच्चारयितरि स्वघटितवाक्यार्थकर्मताऽऽपन्नवाक्यान्तरस्थक्रियाकर्त्तरि च, युष्मत्पदस्य संबोध्ये स्वघटितवाक्यार्थकर्मताऽऽपन्नवाक्यान्तरस्थक्रियाकर्मणि च शक्ती स्वीकार्य्ये इति भावः । "मया त्वयी"त्यादावस्मच्छब्देनर्षेर्युष्मच्छब्देन सुरथस्य बोधापत्तिस्तु क्लृप्तशाब्दबोधकारणताकतात्पर्यविरहादेव सुनिरासेति भावः ।

किं संबोध्यतोच्चारयितृताऽवच्छेदकावच्छिन्ने शक्तिस्वीकारेणेति । स्वघटितवाक्यार्थकर्मताऽऽपन्नवाक्यान्तरस्थक्रियाकर्मणि स्वघटितवाक्यार्थकर्मताऽऽपन्नवाक्यान्तरस्थक्रियाकर्त्तरि च शक्तिः किमर्थेत्यपि ज्ञेयम् ।

---

इदं तु तत्त्वम्—अयमहं पण्डित इति जानातीत्युवाचेत्यादिस्थले सर्वत्र वाक्यार्थस्य कर्मता न सम्भवति बाधितवाक्यार्थस्थले तदसम्भवात् ।

न च बाधितवाक्यार्थस्थले भ्रमरूपैव तत्कर्मत्वप्रतीतिरिति वाच्यम् ।

विशेषदर्शिनाऽपि भ्रान्तिज्ञेन तथा प्रयोगात्तस्य च वाक्यार्थज्ञानासम्भवेन तदनुपपत्तेः ।

न चाहार्यवाक्यार्थज्ञानादेव; विनाऽपि विशिष्टवाक्यार्थबुद्धिं विशेषणप्रकारकत्वविशेष्यविशेष्यकत्वाभ्यां विशिष्टज्ञानज्ञानादेव वा विशेषदर्शी तथा प्रयुङ्क्त इति वाच्यम् ।

एवमपि विशेषदर्शिनो भ्रान्तिज्ञपुरुषीयतथाविधवाक्याच्छाब्दबोधानुपपत्तेर्वज्रलेपत्वात्, तस्मात्तत्रेतिपदं न तद्वाक्यप्रतिपाद्यताऽवच्छेदकीभूततद्धर्मावच्छिन्नपरम्; अपि तु तद्वाक्यजन्यज्ञानसमानाकारकपरं, तादृशश्चेतिपदार्थोऽभेदसम्बन्धेन यथासम्भवं धात्वर्थे धात्वर्थताऽवच्छेदकज्ञाने च विशेषणमित्येवोपगन्तव्यं, तथा च सर्वत्रैव युष्मद्घटितावान्तरवाक्यस्थल इतिपदं तत्परमेव,

तादृशवाक्येन वा गवित्ययमाहेत्यादौ गवादिपदवत्स्वरूपमेवेतिशब्देन परामर्शार्थं समुपस्थाप्यते; न तु युष्मदस्मच्छब्दार्थघटितो वाक्यार्थ इति सम्बोध्योच्चारणकर्त्रोरेव युष्मदस्मदोः शक्तिरिति ।

त्वं स्थूलः, अहं स्थूलः, त्वं स्वर्गं भोक्ष्यसे, अहं स्वर्गं भोक्ष्य इत्युभयत्रैव युष्मदस्मदोर्मुख्यत्वात्सम्बोध्योच्चारयितृशरीरतदात्मनोरेव युष्मदस्मदर्थता बोध्या ॥

---

मञ्जूषा ।

नन्वेवमपि मया त्वयीत्यादौ तात्पर्यभ्रमस्य कल्पयितुमशक्यत्वेऽपि अयमहं पण्डित इति जानातीत्यादौ कस्य चिद् भ्रमसम्भवादस्मच्छब्दाद्वक्तृबोधापत्तिरित्याशङ्कामुद्धर्तुमितिपदस्थले वाक्यार्थभानमेव न; कुतोऽनुवादकतत्सम्बोध्यभानप्रसङ्ग इत्याशयेन प्रथमतस्तस्य कर्मत्वं दूषयति—इदं त्विति ।

बाधितेति । मूर्खतात्पर्यकेऽयमहं पण्डित इति जानातीत्यादा आहार्यस्यासार्वत्रिकत्वादाह—विनाऽपीति । विशेषणं पण्डितत्वादि, विशेष्यमहमादि, विशेषदर्शी=अयं न पण्डित इति ज्ञानवान्, धात्वर्थे=जानातीत्यादौ, उवाचेत्यादौ त्वाह—धात्वर्थतावच्छेदकस्यापि धात्वर्थत्वादिति शब्दार्थस्य क्रियाविशेषणत्वम् ।

इतिपदेनेति । यद्वाक्यमुच्चार्यते तद्वाक्यश्रवणद्वारा तद्वाक्यजन्यज्ञानसमानाकारकमितिशब्देन परामृश्यत इति नियमात्, तेन परामर्शार्थं तद्वाक्योच्चारणपेक्षेति भावः ।

सम्बोध्यत्वघटकप्रतिपत्त्याश्रयत्वम्; उच्चारयितृत्वञ्च, द्विविधम् अवच्छेदकत्वाश्रयत्वरूपसम्बन्धभेदादिति तत्प्रयुक्तं शक्तिभेदमाह—त्वं स्थूल इत्यादि ।

इदमत्रावधेयं-बुद्धिप्रकारत्वेनेव क्व चित्तात्पर्यप्रकारत्वेन धर्मानुगमः, यथा पच्यतेऽथ भुज्यत इत्यादौ ।

यत्तु—अथशब्दस्यानन्तरे लक्षणा तच्च ध्वंसाधिकरणक्षणवृत्ति तस्य क्रियायामभेदान्वयः क्रियाविशेषणत्वाद् द्वितीयान्तत्वं च, ध्वंसे चावधितया पूर्ववाक्यस्थक्रियापदार्थान्वय इति,

यदप्यनन्तरक्षणवृत्तित्वम् अव्ययान्यनाम्नः क्रियायामभेदेनैवान्वयात्तस्याश्रयत्वसम्बन्धेनान्वयः; ध्वंस एव वा तद् लाघवाद् अथपदोत्तरलुप्तसप्तम्या समानकालीनत्वमर्थ इति विशिष्टलाभ इति तदुभयमप्यसत् ।

एवमपि "अथ शब्दो निरूप्यत" इत्यादा उपमाननिरूपणोपस्थापकाभावात्तदानन्तर्यालाभापत्तेः, तदर्थं लक्षणोपगमे च तदनन्तर एव लक्षणाया न्याय्यत्वाद्, एवं चाव्ययातिरिक्तत्वमपि न देयम्, आविर्भवतीत्यादौ प्रकटताऽऽश्रयादेरेवाविरादर्थतोपगमात् ।

वस्तुतस्तु प्रक्रान्तक्रियाऽऽनन्तर्येऽथशब्दस्य शक्तिः, उपमाननिरूपणस्य चोपमानं निरूप्यत इतिपूर्वग्रन्थेन प्रक्रम एव ।

अथोपमाननिरूपणाद्यात्मकाव्युपरक्तानन्तर्यस्याथशब्दवाच्यत्वे शक्त्यानन्त्यप्रसङ्गः; तदनुपरागेणानन्तर्यमात्रस्य तद्वाच्यत्व उपमाननिरूप-

णाद्युपरक्तानन्तर्यप्रत्ययानुपपत्तिः,

न च पूर्वग्रन्थादित्थोपमानं निरूप्यत इति वाक्यानुषङ्गात्तदुपस्थापितोपमाननिरूपणादेः प्रकृताथशब्दार्थीभूतानन्तर्येऽवधित्वेनान्वयादवधिविशेषोपरक्तानन्तर्यलाभसम्भव इति वाच्यम्।

आख्यातार्थविशेषणतयोपस्थितस्य निरूपणादेरवधेरथशब्दार्थानन्तर्ये विशेषणत्वेनाऽन्वयासम्भवाद् एकत्र विशेषणतयोपस्थितस्यान्यत्र विशेषणत्वेनान्वय आकाङ्क्षाविरहाद्।

उपमानं निरूप्यत इत्यादितो निरूपणकर्मत्वादिनोपमानादेर्बोधेऽप्युपमानकर्मत्वादिविशेषितनिरूपणाभानेन तादृशनिरूपणादेरानन्तर्यावधित्वेन भानासम्भवाच्चेति चेद्?

न–अवधिभूतोपमाननिरूपणाद्यन्तर्भाविणैवाथशक्तिस्वीकारेण पूर्ववाक्यस्थधातुतात्पर्यविषयताऽवच्छेदकत्वेनोपलक्षणीभूतानुगमकधर्मेण तत्तत्क्रियावृत्तिविशेषाणामनुगमाच्छक्त्यैक्यसम्भवाद् बुद्धिविशेषविषयताऽवच्छेदकत्वरूपोपलक्षणीभूतानुगतधर्मेण घटत्वपटत्वादिरूपसर्वनामबोध्यताऽवच्छेदकविशेषाणां सर्वनामशक्यताऽवच्छेदकतया तदीयशक्त्यैक्यात्।

अथैवमपि सामान्यतः पूर्वत्वस्याव्यावर्तकतया स्वपूर्वत्वमेवोक्तानुगमकधर्मं निवेश्यमिति स्वपदार्थाननुगमात्कथं शक्त्यैक्यम्?

मैवं–स्वपूर्ववाक्यस्थधातुतात्पर्यविषयताऽवच्छेदकावच्छिन्नानन्तर्यविषयकत्वस्वजन्यत्वोभयसम्बन्धेनाथपदप्रकारकबोधविशेष्यकसङ्केतस्यैक्यात्, तदादिशक्तिस्थले सामान्यतो बुद्धिविषयताऽवच्छेदकत्वस्याव्यावर्तकतया स्वप्रयोगानुकूलबुद्धित्वेनैव निवेश्यतया स्वत्वाननुगमेन शक्तिभेदप्रसङ्गस्य शक्तेः स्वजन्यत्वस्वोच्चारणानुकूलबुद्धिविषयताऽवच्छेदकावच्छिन्नविषयताकत्वोभयसम्बन्धेन तदादिपदवद्बोधविशेष्यकत्वमुपगम्यैव परिहारवद्; उपमाननिरूपणत्वादेरुपमानं निरूप्यत इति पूर्ववाक्यस्थधातुप्रतिपाद्यताऽनवच्छेदकत्वात्तात्पर्यपदं, तत्र शाब्दबोधानन्तरमर्थतस्तादृशरूपेण तत्तत्क्रियाबोधात्तादृशरूपस्य तत्तद्वाक्यस्थधातुतात्पर्यविषयताऽवच्छेदकत्वमक्षतम्, अनुमानलभ्यताऽवच्छेदकवन्ह्यस्तित्वादेर्धूमोऽस्तीत्यादिवाक्यतात्पर्यविषयताऽवच्छेदकत्वाद्,

निरूपणयोः पौर्वापर्यकथनं तु सिद्धसाध्यसमभिव्याहारलभ्यस्य तयोर्हेतुहेतुमद्भावस्य लभ्यलाभार्थं, सिद्धसाध्यसमभिव्याहारस्थले यस्य यदपेक्षया प्राक्कालीनत्वरूपसिद्धत्वं प्रतीयते; असति बाधके तस्य तद्धेतुत्वं, यस्य यदपेक्षयोत्तरकालोत्पत्तिकत्वरूपं यत्समानकालीनप्रागभावप्रतियो-

गित्वरूपसिद्धत्वं प्रतीयते असति बाधके तस्य तद्धेतुत्वं यस्य यदपेक्षयोत्तरकालोत्पत्तिकत्वरूपं यत्समानकालीनप्रागभावप्रतियोगित्वरूपं वा साध्यत्वं प्रतीयते तस्य तद्धेतुकत्वं प्रतीयत इति व्युत्पत्तेः ।

पक्त्वा भुङ्क्ते पाथसि पीते तृषा शाम्यतीत्यादितः पाकभोजनपाथःपानतृषाशान्त्याद्योः पौर्वापर्यवन्मिथोहेतुहेतुमद्भावस्यापि लाभाद्, यत्र च चैत्रोऽपाक्षीदिदानीं भुङ्क्तइत्यादौ पाकभोजनाद्योर्मिथः पौर्वापर्यं साक्षाच्छब्दतो न लभ्यते निष्ठाक्त्वाऽऽदेरभावात् ; तथाऽपि पाककृतौ वर्तमानकालापेक्षयाऽतीतत्वस्य भोजनादौ वर्तमानकालवृत्तित्वस्यैव च शब्देन बोधनात्, तत्र यद्वर्तमानकृतिजन्यं तद्वर्तमानकालापेक्षया अतीता या कृतिस्तज्जन्योत्तरमिति व्याप्तेरर्थतो मिथः पौर्वापर्यलाभेन मिथो हेतुहेतुमद्भावस्यापि लाभः ।

यत्तु-मिश्रैरुक्तं निरूप्यत इत्यस्य वर्तमानार्थकलट्प्रत्ययान्तत्वेन शब्दनिरूपणस्य साध्यतयोपस्थितिरिति,

तन्न—आनन्तर्यवाचकाथशब्देनैवोपमानशब्दनिरूपणयोः पौर्वापर्यरूपसिद्धत्वसाध्यत्वयोर्बोधनात्तत एव तयोर्हेतुहेतुमद्भावलाभसम्भवेन वर्तमानकालोत्तरकालीनत्वबोधस्यानर्थकतया वर्तमानार्थकलट्प्रत्ययान्ततााया अनुपयोगाद् वर्तमानार्थकलट्प्रत्ययं विनाऽपि पक्त्वा भुक्तवानित्यादौ पाकभोजनाद्योर्हेतुहेतुमद्भावबोधाद्वर्तमानकालघटितसाध्यताबोधस्यासार्वत्रिकतया मिथो हेतुहेतुमद्भावबोधे सर्वत्र तदपेक्षाया असम्भवाच्च ।

यदपि च स्वध्वंसोत्पत्तिकत्वरूपानन्तर्येऽवधित्वप्रतियोगित्वमुपमाननिरूपणस्य लभ्यते,

नन्वेवं शब्दनिरूपणापेक्षया सिद्धत्वं शब्दनिरूपणोत्पत्त्यधिकरणध्वंसप्रतियोगित्वरूपं लब्धं; न तु वर्तमानकालापेक्षया सिद्धत्वम् ?

न च तत्र शब्दनिरूपणापेक्षया सिद्धत्वलाभादेव शब्दनिरूपणहेतुलाभो निर्वाह्यतामिति वाच्यम् ।

तथा सति परस्परनिरूपितसिद्धसाध्यभावबोधकसमभिव्याहारादेव सिद्धसाध्ययोर्हेतुहेतुमद्भावलाभस्याभिप्रेतत्वे शब्दनिरूपण उपमाननिरूपणस्यानन्तर्यावधित्वलाभेनेव तद्रूपोपमाननिरूपणावधिकसाध्यत्वलाभनिर्वाहेण तज्जन्यतालाभोपपत्तेर्मिश्राणां वर्तमानार्थकलट्प्रत्ययाधीनवर्तमानकृतिजन्यत्वलाभेन वर्तमानप्रतियोगित्वरूपवर्तमानकालावधिकसाध्यत्वलाभाय वर्तमानार्थकलट्प्रत्ययान्तत्वकथनविरोधात् ।

न च वर्तमानकृतिजन्यतया भासमाने शब्दनिरूपणानन्तर्यलाभे

वर्तमानकृतिजन्यनिरूपणनिष्ठानन्तर्यावधित्वेनोपमाननिरूपणे वर्तमानध्वंसप्रतियोगित्वरूपवर्तमानकालापेक्षया सिद्धत्वमनुमातुं शक्यत इति वाच्यम् ।

वर्तमानस्थानागतस्यापि वर्तमानकृतिजन्यनिरूपणनिष्ठाऽऽनन्तर्यावधित्वसम्भवेन व्यभिचारात् ।

मैवं–लडुपस्थाप्यवर्तमानकृतावेवाथशब्दार्थस्यानन्तर्यस्यान्वयः, तथा च वर्तमानकृतिनिष्ठानन्तर्यावधित्वस्योपमाननिरूपणलाभात् तेन वर्तमानध्वंसप्रतियोगित्वमनुमातुं शक्यते वर्तमानकृत्युत्पत्त्यधिकरणध्वंसप्रतियोगित्वस्य तादृशसिद्धत्वव्याप्यत्वादिति वर्तमानकालापेक्षया सिद्धसाध्यभावबोधकसमभिव्याहारादेव हेतुहेतुमद्भावलाभ इति ।

तदपि न–पक्ष्यत्यथ भोक्ष्यत इत्यादौ तदुपस्थापकपदाभावात् तथाऽपि सिद्धसाध्यसमभिव्याहारेणाभिधानस्य हेतुहेतुमद्भावपरतायाः औत्सर्गिकत्वात्तद्धेतुकत्वेन निर्दोषपुरुषाभिप्रायविषयत्वरूपतत्तत्परत्वलिङ्गकानुमानविषयोऽसाविति न दोषः, तद्वाचकालक्षणयैव वा तच्छाब्दबोधः। शब्दनिरूपणस्योपमाननिरूपणजन्यत्वबाधेऽपि सविशेषणे हीतिन्यायाच्छाब्दप्रमाकरणस्य निरूप्यशब्दस्य निरूप्योपमानजन्यत्वान्वयपर्यवसानमिति ।

एवं यत्र लिङा पूर्ववाक्यस्थक्रियोत्तरत्वमुत्तरवाक्यस्थक्रियापूर्वत्वं च प्रतीयते, तत्रेदृश्येव रीतिः, यथा यो ब्राह्मणायावगुरेत्तं शतेन यातयेदित्यादौ, अत्र गुरी उद्यमने इत्यस्य धातोरर्थ उद्यमः कृतिरेव "क्रियार्थोपपदस्य च कर्मणि स्थानिन" इतिसूत्रेणोपायोपेयभावापन्नार्थयोर्धात्वोरुपायार्थकधातुप्रयोगे सति उपेयार्थकाप्रयुक्तधातुकर्मतया विवक्षितस्य वाचकाच्चतुर्थीत्यर्थकेन तुमुन्नन्तहन्धातुकर्मतया विवक्षितस्य वाचकाद्ब्राह्मणपदाच्चतुर्थीविधानाद्, वधोद्देश्यकत्वं च तदर्थः, आश्रयत्वमाख्यातसामान्यार्थः, "हेतुहेतुमतोर्लिङि"तिसूत्रेण हेतुत्वहेतुमत्त्वयोर्लिङो विधानाद् हेतुत्वं पूर्वत्वं हेतुमत्त्वमुत्तरत्वंच तदर्थः, पूर्वत्वं प्रकृते शतयातनापूर्वकालावच्छिन्नत्वम् उत्तरत्वं ब्राह्मणवधोद्यमोत्तरकालावच्छिन्नत्वम् ,

न च पूर्वकालावच्छिन्नत्वमात्रम्, उत्तरकालावच्छिन्नत्वमात्रं च लिङोऽर्थोऽस्तु समभिव्याहृतधातुतश्चावधिलाभ इति वाच्यम् ।

समभिव्याहृतधातुना तत्प्रकृतिकलिङर्थाश्रयत्वरूपविशेष्यान्तरावरुद्धावधिरूपक्रियाया अन्यत्रान्वयितया बोधनासंभवात्; पूर्ववाक्यस्थधात्वर्थे पूर्वत्वान्वयः उत्तरवाक्यस्थ धात्वर्थे उत्तरत्वान्वयः ।

न च प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वरूपव्युत्पत्तिभङ्गः ? अपरप्रत्ययार्थ एकप्रत्ययार्थविशेषितप्रकृत्यर्थान्वयस्य ध्यातमावाहितं श्रीकृष्णं नमेदित्यादौ बहुशो दृष्टत्वात् तथा च यः शतयातनापूर्वकालावच्छिन्नब्राह्मणवधोद्देश्यककृत्याश्रयतावान् तं यमो ब्राह्मणवधोद्यमोत्तरकालावच्छिन्नशतयातनावन्तं कुर्यादिति बोधः, एवं च बोधविशेष्यकः स्वोत्तरवाक्यस्थधातुप्रतिपाद्यताऽवच्छेदकावच्छिन्नपूर्वकालावच्छिन्नत्वविषयकत्वस्वजन्यत्वोभयसम्बन्धेन लिङ्पदप्रकारकसङ्केत एकः; स्वपूर्ववाक्यस्थधातुप्रतिपाद्यताऽवच्छेदकावच्छिन्नोत्तरकालावच्छिन्नत्वविषयकत्वस्वजन्यत्वोभयसम्बन्धेन लिङ्पदप्रकारको बोधविशेष्यकः संकेतोऽन्य इति । ईदृशा दिशा सुकुशलमतिभिरन्यत्रापि सङ्केत ऊह्यः ।

माधवी ।

इत्येवोपगन्तव्यमिति । तथा चैतद्वाक्यजन्यज्ञानसमानाकारकाभिन्नमहिषासुरनिष्ठज्ञानानुकूलव्यापारवती देवीत्यन्वयबोधः, तादृशवाक्यजन्यदेवीकर्तृकमहिषासुरकर्मकघातादिबोधश्च तादृशवाक्याद् देव्युच्चरितत्वभ्रमादेव सिद्ध इति ।

तादृशवाक्येन वेति । विशिष्टाप्रसिद्धस्थलीयवाक्येन वेत्यर्थः । चाकारोऽनास्थायामतो न पूर्वोक्तानुपपत्तिरिति ।

युष्मदस्मदर्थत्वं बोध्यमिति । तथा च स्वोच्चारणकर्तृताऽवच्छेदकत्वोपलक्षितधर्मावच्छिन्नशक्तिवत्स्वोच्चारणकर्तृताऽवच्छेदकशरीरवृत्तिद्रव्यत्वव्याप्यजातिव्याप्यजात्यवच्छिन्नेऽप्यस्मत्पदस्य शक्त्यन्तरं वाच्यम् ।

द्रव्यत्वव्याप्यत्वञ्च द्रव्यत्वनिष्ठभेदप्रतियोगिताऽनवच्छेदकत्वं, द्रव्यत्वव्याप्यजातिव्याप्यत्वं च स्वसमानाधिकरणभेदप्रतियोगिताऽवच्छेदकत्वसम्बन्धेन, तादृशशरीरवृत्तिजातौ च मनुष्यादिभिन्नत्वमुपलक्षणविधया निवेशनीयमिति ध्येयम् ।

एवं युष्मत्पदस्थले स्वजन्यबोधवत्त्वेनाभिप्रायविषयवृत्तिज्ञानावच्छेदकशरीरवृत्तिद्रव्यत्वव्याप्यजातिव्याप्यजात्यवच्छिन्ने शक्त्यन्तरं स्वीकार्यम् । व्याप्यत्वादिकञ्च पूर्ववदिति ।

अथ वाऽऽवां गच्छावः, वयं गच्छाम इत्यादिवाक्यघटकास्मच्छब्दात् चैत्रोच्चारितात् चैत्रमैत्रादिबोधस्यानुभवसिद्धतया मैत्रादेरुच्चारणकर्तृत्वाभावात्तादृशबोधानुपपत्तिरिति चेद् ? न —

तादृशस्थले चैत्रादिसमुदाये लक्षणास्वीकाराद्, अत एव द्विवचनबहुवचनस्थले लक्षणैव गतिरिति वैयाकरणसिद्धान्तदीपिकाकर्तृभिरभिहितम् ।

न च तादृशोच्चारकपुरुषमनन्तर्भाव्य केवलमैत्रादिबोधो लक्षणया स्यात्, तादृशलक्षणाया आधुनिकत्वात्। उच्चारकपुरुषमन्तर्भाव्यैव लक्षणाया निरूढत्वं बोध्यम्। आधुनिकलक्षणाऽऽदरे तु तादृशबोधो भवत्येव किन्तु न स्वारसिकप्रयोग इति।

केचित्तु स्वोच्चारणकर्तृवृत्तिस्वप्रयोजकबुद्धिविषयताऽवच्छेदकधर्मावच्छिन्नेऽस्मत्पदशक्तिस्वीकारेणोक्तस्थल उच्चारकानुच्चारकपुरुषसमुदायविषयकबोधस्य शक्त्योपपत्तिरिति प्राहुः।

तन्न; तथाऽपि द्रव्यत्वप्रकारकद्रव्यबोधतात्पर्येणापि शक्त्या तादृशप्रयोगापत्तिरिति।

विनोदिनी।

आहार्य्येति। बाधकालिकमिच्छाजन्यं ज्ञानमाहार्यमिति, तथा चापण्डितेऽपि पाण्डित्यरूपबाधितार्थज्ञानाद् "नायं पण्डित" इति विशेषदर्शी "अयम् अहं पण्डित इति जानाति" इति वाक्यं प्रयुङ्क्ते, विशिष्टवाक्यार्थबुद्धिं=पाण्डित्यप्रकारिकां चैत्रादिविशेष्यिकां बुद्धिं विनाऽपि, विशेषणप्रकारकत्वविशेष्यविशेष्यकत्वाभ्यां=पाण्डित्यप्रकारकत्वचैत्रादिविशेष्यकत्वाभ्यां विशिष्टं यद् ज्ञानं=चैत्रादिसमवेतं ज्ञानं, तद्विषयकज्ञानाद् वेत्यर्थः।

तादृशवाक्येन वेति। निर्दिष्टोदाहरणादौ वाक्यान्तरक्रियाकर्मत्वाभावादरुचेः स्थलान्तरानुधावनं, तथा च गवित्ययमाहेत्यादौ यथा न गोपदार्थप्रतीतिः किन्तु गोपदस्यैव, तथा प्रकृतेऽपि तादृशवाक्यस्वरूपमेवेतिपदेन प्रत्याय्यते न वाक्यार्थ इति

मुख्यत्वादिति। असति बाधके स्वारसिकव्यवहारस्य शरीरात्मनोरुभयोरेव सर्वजनीनत्वादित्याशयः। तथा चावच्छेदकत्वसंबन्धावच्छिन्नस्वजन्यबोधाश्रयत्वप्रकारतानिरूपितेच्छीयविशेष्यताऽवच्छेदकत्वस्वोच्चारणानुकूलकृत्यवच्छेदकताऽवच्छेदकत्वाभ्यामुपलक्षिताभ्यां शरीरनिष्ठजातिविशेषरूपाभ्यां धर्माभ्यां क्रमेणावच्छिन्नयोर्युष्मदस्मत्पदशक्ती शरीरपरप्रयोगस्थले ज्ञेये।

आत्मपरतायां तु संबोध्योच्चारयित्रोरेव तयोः पदयोः शक्ती इति भावः।

आवां गच्छावः, वयं गच्छाम इत्यादिस्थलेषु तु चैत्रोच्चारिततादृशवाक्यघटकास्मत्पदाच्चैत्रमैत्रादिबोधस्यानुभविकतया मैत्रादेरुच्चारयितृत्वाभावाच्चैत्रादिसमुदाये लक्षणया निर्वाहः संपाद्य इति सर्वमवदातम्।

---

सर्वे घटा रूपवन्त इत्यादौ सर्वपदादुद्देश्यताऽवच्छेदकीभूतघटत्वावच्छिन्नस्याशेषताप्रतीतेरशेषत्वं सर्वपदार्थः ।

नन्वत्राशेषत्वं न विधेयशून्यावृत्तितदुद्देश्यताऽवच्छेदकवत्त्वम्—केवलान्वयिनो यत्र विधेयता तत्र विधेयशून्यत्वस्याप्रसिद्धेः ।

यत्र वा विधेयशून्य उद्देश्यताऽवच्छेदकीयसम्बन्धविशेषेण वृत्तेरप्रसिद्धिः सर्वे घटा जातिमन्त इत्यादौ तत्र गत्यन्तराभावापत्तेः ।

पदान्तरादुपस्थित उद्देश्यताऽवच्छेदकघटत्वादिविशिष्टे सर्वपदोपस्थाप्याविधेयव्याप्तिविशिष्टघटत्वाद्यवच्छिन्नस्य कथं चिदन्वयसम्भवेऽप्यनुभवाविरोधाच्च ।

घटत्वत्वाद्यनुपस्थितिदशायामपि सर्वे घटा इत्यादिवाक्यादन्वयबोधस्यानुभविकतया व्याप्यत्वेनैव घटत्वादेः सर्वपदार्थत्वस्य स्वीकरणीयतया तज्जन्यव्याप्तिबोधस्य निर्धर्मिताऽवच्छेदककतया विपरीतविषयकसंशयाद्यविरोधित्वेनाकिञ्चित्करतापाताच्च ।

नापि तत्तदुद्देश्यताऽवच्छेदकव्यापकतत्तद्विधेयवत्त्वं;- तदवच्छिन्ने विधेयानन्वयप्रसङ्गात् ।

नापि विधेयान्वयिव्यापकतापर्यन्तमेव सर्वपदार्थः;- नामार्थद्वयोर्भेदान्वयबोधस्याव्युत्पन्नत्वात् ।

नाप्यभेदेन रूपवदाद्यात्मकविधेयान्वयी घटत्वादि-

व्यापक एव तदर्थः—तथा सति सर्वे वेदाः प्रमाणमित्यादौ सर्वपदस्य प्रमाणपदेनैव सामानाधिकरण्यात्तत्समानलिङ्गवचनकत्वापत्तिः ।

सर्वे घटा वर्तन्त इत्यादौ क्रियारूपविधेये व्यापकस्याभेदान्वये सर्वपदस्य नपुंसकत्वापत्तेः ।

व्यापकताया भेदान्वयोपगमे नामार्थधात्वर्थयोर्भेदान्वयविरहनियमभङ्गापत्तेः ।

---

मञ्जूषा ।

सर्वपदार्थः=सर्वपदप्रवृत्तिनिमित्तम् । यत्रेति । सर्वे घटाः प्रमेया इत्यादौ । यत्र वेति । सर्वे घटा जातिमन्त इत्यादौ । कथं चिद्=विधेयकोटावधिकावगाहितया । संशयः=घटत्वं रूपव्याप्यं न वेति संशयः । तदवच्छिन्ने=घटत्वादिव्यापकरूपावच्छिन्ने । व्यापकता=तत्तदुद्देश्यताऽवच्छेदकसमानाधिकरणभेदप्रतियोगिताऽनवच्छेदकत्वम् । क्रियारूपेति । क्रियाविशेषणानां क्लीबत्वमित्यनुशासनात् ।

यत्तु पचतीत्यादावेव कृतिः प्रकारः, गच्छतीत्यादौ त्वाश्रयतासम्बन्धेन गमनं प्रकार इत्याशयेनेदमिति तन्न, आश्रयतारूपाख्यातार्थभानेऽपि क्रियारूपे विधेयकोटिस्थ इत्यर्थोपगमेनासंगत्यभावात् ।

माधवी ।

ननु व्यधिकरणधर्मावच्छिन्नावच्छेदकताकभेदस्येव व्यधिकरणधर्मावच्छिन्नावच्छेदकताकात्यन्ताभावस्य केवलान्वयिग्रन्थे भट्टाचार्येण स्वीकृतत्वात् प्रमेयत्वावच्छिन्नाभावनिष्ठावच्छेदकताकाधिकरणनिष्ठावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकताकवृत्तित्वावच्छिन्नप्रतियोगिताकाभावविलक्षणकेवलान्वयिविधेये नानुपपत्तिरत आह—सर्वे घटा-जातिमन्त इति ।

ननु विधेयव्याप्यत्वमभाववद्वृत्तित्वसम्बन्धेन विधेयाभावविशिष्टोद्देश्यताऽवच्छेदकताघटकसम्बन्धेन स्वाधिकरणताकत्वम्, अभाववद्वृत्तित्वं विशेषणताविशेषसम्बन्धावच्छिन्नं ग्राह्यमित्युभयत्रैवगतिरस्त्येत्यतोऽनुभवविरोधरूपदोषमाह—अनुभवेति । दण्डवान् रक्तदण्डवानितिवत् विधेयांशेऽधिकावगाहिताद्दृशबोधस्यानुभवसिद्धत्वादिति भावः ।

विधेयानन्वयप्रसङ्गादिति । तथा च सर्वे घटा रूपवन्त इत्यादितो घटत्वव्यापकरूपवन्तो घटा रूपवन्त इत्यन्वयबोधस्य स्वीकरणीयतया विधेयांशे न्यूनावगाहितया तादृशबोधस्य केनाप्यनङ्गीकारादिति भावः । तस्य भङ्गापत्तेरिति । न चाख्यातार्थाश्रयत्व एव तादृशसर्वपदार्थस्याभेदेनान्वये तद्दोषवारणसम्भवादिति वाच्यम् । आख्यातार्थविशेष्यकनामार्थान्वयस्याव्युत्पन्नत्वादिति भावः ।

विनोदिनी ।

अप्रसिद्ध्येति । केवलान्वयिविधेयके सर्वे घटा प्रमेया इत्यादौ निरुक्ताशेषत्वमविवक्षित्वोद्देश्यताऽवच्छेदकव्यापकसमुदायत्वावच्छिन्नबोधकतायां सर्वपदस्य नोक्तदोष इत्यत आह-यत्र वेति ।

उद्देश्यताऽवच्छेदकताऽवच्छेदकसम्बन्धावच्छिन्नवृत्तित्वस्य नियामकसम्बन्धेन सम्बन्धसामान्यावच्छिन्नविधेयाभाववद्वृत्तित्वाभाववदुद्देश्यताऽवच्छेदकविशिष्टतोक्त्या नात्रापि दोष इत्यत आह-पदान्तरेति । घटादिपदादित्यर्थः । कथं चिदिति । घटो नीलघट इत्यादाविव विधेयांशेऽधिकावगाहिशाब्दबोधाभ्युपगमात्प्रकृते सर्वपदोपस्थाप्यविधेयव्याप्यघटत्वादिरूपेणोपस्थितौ घटा रूपव्याप्यघटत्ववन्त इत्याकारकबोधस्य विवादास्पदत्वादरुचेराह-घटत्ववत्वेति ।

अत्राप्यन्वयिताऽवच्छेदकघटत्ववत्वादिनाऽनुपस्थितघटत्वादौ रूपव्याप्यत्वान्वयासम्भवाद्, घटत्वं रूपाभाववद्वृत्तीत्यादिज्ञानं प्रति घटत्वं रूपव्याप्यमित्यादिज्ञानस्याप्रतिबन्धकत्वेन वैयर्थ्याच्च प्रकारान्तरेण सर्वशब्दार्थं निर्वक्ति-नापि तत्तदुदेश्यतेति ।

एवमपि घटत्वव्यापकरूपस्यैवोद्देश्यताऽवच्छेदकत्वस्य पर्यवसानादुद्देश्यताऽवच्छेदकविधेययोरैक्यान्न तत्र विधेयरूपान्वयः सम्भवतीत्याह-नापि विधेयेति ।

अत्रापि घटत्वादिव्यापकत्वस्याश्रयताऽऽदिनैव रूपादावन्वयो वाच्यः, स चासम्भवी नामार्थयोरभेदेनैवान्वयादत आह-नाप्यभेदेनेति ।

एवं सति च सर्वपदार्थस्य विधेयेऽन्वयात् सर्वे वेदाः प्रमाणमित्यादौ सर्वे वेदाः प्रमाणमित्यापद्येत-तथा चानुभवसिद्धव्युत्पत्तिमूलव्यवस्थावाक्यमभियुक्तानां—

विशेष्यस्यैव यल्लिङ्गं विभक्तिवचने च ये ।
तानि सर्वाणि योज्यानि विशेषणपदेष्वपीति—

विरुध्येत, व्यवस्था चेयमसति बाधक इति शेषपूरणेन संवारणीया, एवं च प्रकृते विशेष्यवाचकप्रमाणपदानुरोधेन सर्वपदेऽपि क्लीबत्वैकत्वे दुर्निवारे,

किं चोक्तप्रकारादभेदेन विधेये सर्वपदार्थान्वये सर्वे घटा वर्त्तन्त-इत्यादौ विधेयात्मकक्रियायामन्वये क्लीबत्वे सर्वं घटा वर्तन्त इति चापद्येत,

यदि तु क्रियायामभेदेनैवान्वयेऽन्वितबोधकपदान्नपुंसकत्वानुशिष्टितोऽत्र घटत्वव्यापकत्वस्याश्रयत्वेन वर्त्तनेऽन्वयः क्रियेत; तदा नामार्थधात्वर्थयोरप्यभेदान्वयव्युत्पत्तिनियमभङ्गप्रसङ्गः ।

---

यत्त्वशेषत्वं न सर्वपदार्थः—उद्देश्यताऽवच्छेदकावच्छेदेन विधेयान्वयोपगमादेव तल्लाभोपपत्तेः; किन्त्वनेकत्वमेव, अनेकत्वं चोद्देश्यताऽवच्छेदकसमानाधिकरणभेदप्रतियोगित्वम्, अत एव सर्वं गगनं शब्दवदित्यादयो न प्रयोगाः । एवं च सर्वे घटा इत्यादौ घटनिष्ठान्योन्याभावप्रतियोग्यभिन्ना घटा इत्ययमर्थः प्रतीयते ।

न चैवं घटत्वादिसामानाधिकरण्यमात्रेण विधेयान्वयतात्पर्येण सर्वे घटा नीला इत्यादिप्रयोगापत्तिः ? सर्वपदार्थविशेषितउद्देश्यताऽवच्छेदकावच्छेदेनैव विधेयान्वय इति नियमात्, सर्वं प्रमेयमित्यादौ प्रमेयत्वादिविधेयक उद्देश्यवाचकवस्तुत्वादिपदमध्याहृत्यैव प्रतीतिः; अन्यथोद्देश्यताऽवच्छेदकीभूतव्याप्यधर्मानुपस्थित्या तद्व्यापकत्वार्थकत्वेऽप्यनुपपत्तिरिति ।

तदपि न युज्यते—गगनादावपि द्वित्वाद्यवच्छिन्नतद्भेदसत्त्वेन सर्वपदस्यानेकार्थत्वमुपगम्यापि सर्वं गगनमित्यादिप्रयोगस्य दुर्वारत्वात्, तत्तदुद्देश्यताऽवच्छेदकसमानाधिकरणभेदप्रतियोगिताऽवच्छेदकत्वस्य तत्तदुद्दे-

श्यताऽवच्छेदके सर्वत्र बाधितत्वेन तत्प्रतीतेर्दुरुपगमत्वात्।

सामान्यतः प्रतियोगिवृत्त्यन्यत्वस्य वृत्तिमदवृत्तित्वात्, स्वप्रतियोगिवृत्तयो ये ये तादृशभेदास्तद्भेदकूटस्य च दुरवगमतया तद्विशेषणेन द्वित्वाद्यवच्छिन्नभेदव्यावृत्तेरपि हेयत्वात् ।

अस्तु वा यथा कथञ्चित्तद्व्यावृत्तिः, तथाऽप्यनेकत्वमात्रस्य सर्वपदार्थत्वेऽवच्छेदकावच्छेदेनान्वयेऽवच्छेदकैकदेशव्यापकताबोधस्यानुभवविरुद्धतया सर्वे घटा रूपवन्त इत्यादौ घटनिष्ठभेदप्रतियोगित्वस्योद्देश्यताऽवच्छेदकतया शुद्धघटत्वादिव्यापकत्वभानानुपपत्त्या घटत्वसामानाधिकरण्येन रूपादिमदन्यत्वानिश्चयदशायामपि तादृशवाक्याच्छाब्दबोधापत्तिर्दुर्वारैव ।

---

मञ्जूषा ।

स्वनिरूपकत्वस्वसामानाधिकरण्योभयसम्बन्धेन प्रतियोगिताविशिष्टान्यो य उद्देश्यताऽवच्छेदकसमानाधिकरणो भेदस्तत्प्रतियोगित्वमनेकत्वमित्युक्तौ त्वाह—अस्तु वेति । अत्र वैशिष्ट्ये व्यासज्यवृत्तिधर्मानवच्छिन्नत्वं प्रतियोगिताविशेषणमिति मुह्यन्तः प्रत्युक्ताः ।

अनुभवविरुद्धतयेति । नीलपर्वतत्वसामानाधिकरण्येन वह्न्यभावबुद्धिसत्त्वे नीलपर्वतो वह्निमानिति पर्वतत्वावच्छेदेन विशिष्टबुध्यापत्तिभयेनेत्यर्थ इति तु न सत्; तादृशविशिष्टबुद्धेर्नीलपर्वतत्वसामानाधिकरण्येन विशिष्टबुद्धिरूपतयेष्टापत्तेः, तस्यां तदवच्छेदेन विशिष्टबुद्धित्वाभावात् तस्मात्तादृशसंसर्गताया अप्रामाणिकत्वं हेत्वाभाससामान्यनिरुक्तौ ग्रन्थकृद्भिः प्रपञ्चितमिहादरणीयम् ।

माधवी ।

सर्वत्र बाधितत्वेनेति । न चोद्देश्यताऽवच्छेदकसमानाधिकरणभेदप्रतियोगिताऽवच्छेदकत्वपर्याप्त्यनुयोगिताऽवच्छेदकत्वस्योद्देश्यताऽव-

च्छेदके निवेशेऽपि सर्वं गगनं शब्दवदिति वारणासम्भवः, गगनत्वेऽपि गगनत्वसमानाधिकरणोभयभेदप्रतियोगिताऽवच्छेदकत्वस्य सत्त्वादिति वाच्यम् । उद्देश्यताऽवच्छेदकसमानाधिकरणभेदप्रतियोगिताऽवच्छेदकत्वपर्याप्त्यनुयोगिताऽवच्छेदकत्वस्योद्देश्यताऽवच्छेदकतापर्याप्त्यनुयोगिताऽवच्छेदक एव तात्पर्यात् ।

स्वसमानाधिकरणत्वस्वनिरूपकत्वोभयसम्बन्धेन प्रतियोगिताविशिष्टान्यत्वमुद्देश्यताऽवच्छेदकसमानाधिकरणभेदे निवेशनीयमतो नोभयभेदमादाय दोष इत्यभिप्रायेणाह—कथञ्चिद् व्यावृत्तिरिति ।

विनोदिनी ।

घटनिष्ठान्योन्याभावेति । अयं स्वाभावस्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताको ग्राह्योऽन्यथेतरभेदोपादाने तत्प्रतियोग्यभिन्नत्वं घटस्यासंभवमेव; तथा च चालनीन्यायेन यावन्तो घटाः प्रतियोगिनः स्युः ।

वृत्तिमदवृत्तित्वादिति । यावत्सु वृत्तिमत्सु प्रतियोगिवृत्तिन एव वस्तुनो वृत्तेर्यावतामेव स्वाभावप्रतियोगित्वादिति भावः ।

यथा कथं चिदिति । स्वनिरूपकत्वस्वाश्रयवृत्तित्वोभयसंसर्गेण प्रतियोगिताविशिष्टभेदप्रतियोगिकभेदवद्भेदस्य विवक्षयेत्यर्थः । तद्व्यावृत्तिरिति । द्वित्वाद्यवच्छिन्नभेदव्यावृत्तिः ।

अनुभवविरुद्धतयेति ।

अयमर्थः—घटनिष्ठभेदप्रतियोगित्वविशिष्टघटत्वस्यैवोद्देश्यताऽवच्छेदकत्वेन तन्निरूपितैव व्यापकता रूपे भायान्न तु शुद्धघटत्वनिरूपिता सा ।

---

एवं विशेष्यताऽवच्छेदकव्यापकताया एव विशेषणसंसर्गांशे संसर्गविशेषणीभूतविशेषणांशे वा भानात् सर्वेषु घटेषु रूपमित्यादौ घटत्वादेर्विशेष्यताऽनवच्छेदकत्वेन रूपादौ तद्व्यापकत्वभानं दुर्लभमापद्येत ।

न च तत्र सप्तम्यर्थाधेयत्वादौ निरूपकतासम्बन्धावच्छिन्नव्यापकतासम्बन्धेनैव प्रकृत्यर्थस्य घटादेरन्वयः स्वीक्रियते, घटादेर्व्याप्यता च तादात्म्यसंबन्धेन, व्यापकता च यादृशरूपावच्छिन्न आधेयत्वादेरन्वयस्तदव-

च्छिन्नानिष्ठाधेयतात्वाद्यवच्छिन्ना संसर्गः, अतो रूपनिष्ठाधेयत्वादेराधेयतात्वादिना द्रव्यत्वव्यापकत्वेऽपि नातिप्रसङ्गः । एवंरूपनिष्ठाधेयतात्वादिनाऽऽधेयत्वादेः पदादनुपस्थितत्वेऽपि न क्षतिः, तथा सत्यपि तादृशरूपस्य संसर्गघटकतया भाने विरोधाभावादिति वाच्यम् । उक्तव्यापकतायाः संसर्गत्वे मानाभावात् ।

अस्तु वोद्देश्यविधेययोर्विशेष्यविशेषणभाववैपरीत्येऽपि विधेयांश उद्देश्यताऽवच्छेदकव्यापकत्वस्योद्देश्यविधेयभावमहिम्नैव संसर्गतया भानं, भवतु चोद्देश्यविशेषणतयोपस्थितस्यापि विधेये पारतन्त्र्येणान्वयो व्युत्पत्त्यविरुद्धः ।

---

मञ्जूषा ।

यदि तु यथा शरदि पुष्यन्ति सप्तछदा इत्यत्र सप्तच्छदपुष्पोत्पत्तित्वरूपान्वयिताऽवच्छेदकस्यानुपस्थितावपि तदवच्छिन्नत्वविशिष्टस्वरूपसम्बन्धेन शरद्वृत्तित्वान्वयः; पुष्पोत्पत्तित्वावच्छेदेन तदन्वये शरदि पुष्यन्ति चम्पका इत्यपि प्रयुज्येत; तथा शुद्धघटत्वव्यापकताविशिष्टसमवायसम्बन्धेन तादृशप्रतियोगिताविशिष्टघटत्वसामानाधिकरण्येन शाब्दबोधे बाधकाभावः, अनुमितावेवैकदेशव्यापकताया अप्रामाणिकत्वादिति मतान्तरमालम्ब्यते ? तदाऽप्याह—एवमिति ।

घटत्वव्यापकताविशिष्टरूपप्रतियोगिकसमवायत्वेन संसर्गतामतमनुरुन्धान आह—संसर्गतेति । तादात्म्येति । द्वेधा घटभानासहिष्णुतायां तु स्वनिष्ठाभावप्रतियोगिताऽनवच्छेदकीभूतरूपनिष्ठाधेयतात्ववत्त्वं घटस्य संसर्गः, वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगिताऽनवच्छेदकत्वे तु यद्धर्मावच्छिन्नानधिकरणं स्वं तदन्यत्वं भूतान्तार्थः । नातिप्रसङ्गः=न सर्वेषु द्रव्येषु रूपमिति प्रसङ्गः । रूपनिष्ठाधेयतात्वस्य संसर्गकोटौ निवेशबीजं स्वयमेवाह—रूपनिष्ठेति । मानाभावादिति । यत्र

मासमधीत इत्यादावनुशासनं तत्रैव व्यापकतायाः संसर्गता न त्वन्यत्रेति भावः। पारतन्त्र्येणेति। तेन घटत्वत्वादिनोपस्थितिविरहेऽपि न क्षतिः।

माधवी।

एकदेशव्यापकत्वास्वीकारे नोक्तदोष इत्यत आह—एवमिति। विशेष्यताऽवच्छेदकव्यापकतायाः विशेषणसंसर्गांशे भानोपगमे समवायेन पर्वतस्तद्रूपवानित्यादिबोधस्य प्रमात्वापत्तिः, समवायस्यैक्यमते तद्रूपप्रतियोगिकसमवायस्य पर्वतत्वाव्यापकत्वादाह—संसर्गविशेषणीभूतविशेषणांश इति।

तदवच्छिन्ननिष्ठाधेयतात्वाद्यवच्छिन्नसंसर्ग इति। तथा च सर्वेषु घटेषु रूपमित्यादौ तादात्म्येनघ टत्वन्निष्ठाभावप्रतियोगिताऽनवच्छेदकरूपवन्निष्ठाधेयत्ववत्सम्बन्धेन घटादेराधेयतायामनुपगमान्नानुपपत्तिरिति। नातिप्रसङ्ग इति। सर्वेषु द्रव्येषु रूपमित्याद्यतिप्रसङ्ग इति। तथा सत्यपि=पदादनुपस्थितत्वेऽपि।

मानाभावादिति। तादृशसंसर्गे मानाभावेऽपि सम्बन्धविशेषांशे विशेष्यताऽवच्छेदकव्यापकत्वस्य संसर्गविधया भानेऽपि न क्षतिः।

उद्देश्यविधेयभावस्थले विधेयांश उद्देश्यताऽवच्छेदकव्यापकत्वस्य संसर्गविधया भानं सम्बन्धविशेषणांशे विशेष्यताऽवच्छेदकव्यापकत्ववदनुभवसिद्धमेवेत्याह—अस्तु वेति। ननूद्देश्यविशेषणतयोपस्थितस्य घटत्वस्य व्यापकत्वसम्बन्धेन विधेयांशे भानोपगमे एकत्र विशेषणतयोपस्थितस्यान्यत्रविशेषणतया न भानमिति नियमभङ्ग इत्यत आह—भवतु वेति। तथा चैकत्र विशेषणतयोपस्थितस्यान्यत्र स्वातन्त्र्येणान्वयो व्युत्पत्तिविरुद्ध एव, न तु पारतन्त्र्येणेति भावः।

विनोदिनी।

संसर्गघटकतयेति। तथा च संसर्गताऽन्यविषयतया भातऽन्यपदार्थस्यान्वयिताऽवच्छेदकरूपेणानुपस्थितावेव पदार्थान्तरान्वयस्याव्युत्पन्नतेत्याशयः।

महिम्नेति। उद्देश्यविधेयभावसंपादकसामग्र्येत्यर्थः, प्रकृते च सामग्रीघटकता प्राथम्यस्यापि;

"यच्छब्दयोगः प्राथम्यमेतदुद्देश्यलक्षणमिति"

"अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेदि"ति

चाभियुक्तोक्तेरित्यर्थः।

विधेयवाचकपदेति। द्रव्ये सर्वाणि रूपाणीत्यादौ।

नामार्थयोरपि भेदेन पारतन्त्र्येणान्वयो व्युत्पत्तिमा विरौत्सीत् तथाऽपि सर्वपदस्य यत्र विधेयवाचकपदसामानाधिकरण्यं तत्र विधेयांश उद्देश्यस्य तत्संबन्धस्य वाऽनुभवसिद्धो व्याप्तिबोधो दुरुपपादः ।

एवं घटे न सर्वाणि रूपाण्यपि तु कानिचिदेवेत्यादौ रूपनिष्ठभेदप्रतियोगिरूपत्वावच्छिन्नाभावो घटादौ बाधित एवेत्ययोग्यताऽऽपत्तिः ।

न च तत्र तादृशरूपत्वादिसामानाधिकरण्येन घटादिवृत्तित्वाभावः प्रतीयते स चाबाधित एव नञ्समभिव्याहारस्थलेऽशेषत्वभानानुपगमे क्षतिविरहादिति वाच्यम् । एवं सति तत्र घटत्वावच्छिन्नस्योद्देश्यत्वानिर्वाहात् । न च तत्र रूपस्योद्देश्यत्वं; प्रथममनिर्दिष्टत्वात् ।

---

मञ्जूषा ।

यत्र विधेयेति । काले सर्वे वृत्तिमन्तः; द्रव्ये सर्वाणि रूपाणीत्यादौ । विधेयताऽवच्छेदकांश इति । यथोद्देश्यसमानाधिकरणात्सर्वपदादुद्देश्यताऽवच्छेदकव्यापकत्वं विधेयाद्यंशे तथैव विधेयसमानाधिकरणात्तस्माद्विधेयताऽवच्छेदकव्यापकत्वमुद्देश्याद्यंश इति । तत्रानेकत्वमात्रभानोपगमेऽप्याह-एवमिति । बाधित एवेति । गुरुधर्मावच्छिन्नाभावोपगमेऽपीत्यादिः ।

माधवी ।

ननु नामार्थयोर्भेदेनान्वयबोधस्याव्युत्पन्नत्वात् कथं तादृशबोध इत्यत आह । नामार्थयोरिति । तथा च पारतन्त्र्यादतिरिक्तस्थल एव तथा व्युत्पत्तिरिति भावः । उद्देश्यस्याधारतासम्बन्धेनैव व्याप्तिघटकत्वं वाच्यमिति तस्य वृत्त्यनियामकतया व्याप्तिघटकत्वं न सर्वमतसिद्धमत आह-तत्सम्बन्धस्यैवेति ।

ननु सर्वपदसमभिव्याहारस्थले व्यापकत्वरूपाशेषत्वबोधकत्वमनुभव-

सिद्धं तच्चैतन्मतेऽवच्छेदकावच्छेदेनान्वय एव लभ्यते नञ्समभिव्याहारस्थले रूपत्वसमानाधिकरणघटवृत्तित्वाभावभानोपगमे तादृशानुभवविरोध इत्यत आह–नञ्समभिव्याहारस्थल इति। तथा च तत्र रूपनिष्ठान्योन्याभावप्रतियोगित्वरूपमनेकत्वमात्रं रूपे भासत इति भावः। एवंसतीति। घटरूपे घटेतरवृत्तित्वाभावभानोपगमे सतीत्यर्थः।

उद्देश्यत्वानिर्वाहादिति। तथा च शाब्दबोध उद्देश्यविधेयभावस्यानुभवसिद्धतया तद्विरोध इति भावः। रूपस्योद्देश्यत्वं शङ्कते–न चेति। प्रथममनिर्दिष्टत्वादिति। इदं त्वापाततः, उद्देश्यवाचकपदस्य विधेयवाचकपदपूर्ववृत्तित्वेन प्रतिसन्धानस्यैवापेक्षणीयत्वाद्, अत एव वन्हिव्याप्यधूमवानयमित्याद्युपनयघटकीभूतायंपदस्योद्देश्यवाचकत्वोपपत्तेः स्वयमेवावयवग्रन्थे उक्तत्वादिति ध्येयम्।

---

अत्रोच्यते। उद्देश्यताऽवच्छेदकव्यापकविधेयव्याप्यपर्याप्तिको धर्मः सर्वपदप्रवृत्तिनिमित्तं, सर्वे घटा रूपवन्त इत्यादौ तथाविधधर्मो घटादिनिष्ठयावत्त्वमेव, तस्य व्यासज्यवृत्तितया तत्पर्याप्तेर्घटत्वव्यापकत्वाद् रूपादिव्याप्यत्वाच्च, शब्दाद् घटत्वादिव्यापके रूपादिव्याप्यत्वलाभे तयोरपि व्याप्यव्यापकभावोऽर्थाल्लभ्यते, द्रव्यत्वादिव्यापकपर्याप्ते रूपाद्यव्याप्यत्वात् सर्वाणि द्रव्याणि रूपवन्तीत्यादावयोग्यता।

उद्देश्यताऽवच्छेदकव्यापकत्वं च तत्समानाधिकरणान्योन्याभावप्रतियोगिताऽनवच्छेदकत्वं; तेन रूपादिव्याप्यपर्याप्तेर्द्रव्यनिष्ठात्यन्ताभावप्रतियोगिताऽनवच्छेदकधर्मवत्त्वेऽपि न क्षतिः। घटत्वादिव्यापकयावत्त्वपर्याप्तिश्च न घटादिव्यक्तिभेदाद्भिद्यतेऽतो न घटत्वादिव्यापकताया अनुपपत्तिः।

विधेयव्याप्यत्वं च व्यभिचारित्वसंबन्धावच्छिन्नप्रतियोगिताकतत्ताद्विधेयताऽवच्छेदकावच्छिन्नप्रतियोगिताकतत्ताद्विधेयाभाववत्त्वम्; अतो विधेयताऽवच्छेदकावच्छिन्नस्य यत्र केवलान्वयिता तत्र नाप्रसिद्धिः, व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकस्यैव तथाविधाभावस्य प्रसिद्धत्वात् ।

अत्रोद्देश्यताऽवच्छेदकविधेयतावऽच्छेदकघटत्वरूपत्वादीनामुपलक्षणतयाऽनुगमकं तादृशावच्छेदकत्वमेवातो न शक्त्यानन्त्यं; न वाऽपूर्वधर्मव्यापकत्वादिभानानुपपत्तिः, न वा तादृशावच्छेदकत्वभानापत्तिः ।

यद्यपि सामान्यत उद्देश्यताऽवच्छेदकत्वमव्यावर्तकमेव, उद्देश्यताऽवच्छेदकविधया स्वसमभिव्याहृतपदप्रतिपाद्यत्वं च तादृशपदजन्यशाब्दबोधात् पूर्वं दुर्घटं तथाऽपि तादृशपदप्रतिपाद्यत्वेन वक्तृबुद्धेर्वक्तृतात्पर्यस्य वा विषयत्वं तथा वाच्यम्, तच्च प्रकरणादिना पूर्वमपि सुग्रहम्, स्वत्वाननुगमः पूर्ववत्समाधेयः ।

---

मञ्जूषा ।

तयोरपि=घटत्वरूपाद्योरपि । अर्थादिति । न तु स शाब्द इति भावः । विधेयव्याप्यत्वनिवेशफलमाह–द्रव्यत्वादीति । अत्रैवोद्देश्यताऽवच्छेदकव्यापकत्वनिवेशफलं द्रष्टव्यम्, अनवच्छेदकत्वमवच्छेदकतापर्याप्त्यनधिकरणत्वं,-तेन सर्वे घटा रूपवन्त इत्यादौ रूपव्याप्यपर्याप्तिसौरभव्याप्यपर्याप्त्युभयवद्भेदमादाय न क्षतिः, रूपपर्याप्तेर्घटनिष्ठोभयाभावादिप्रतियोगित्वसत्त्वादुक्तमनवच्छेदकधर्मेति । व्यधिकरणेति । न चात्रान्वयिताऽवच्छेदकावच्छि-

न्नाभावगर्भव्यभिचाराप्रसिद्धिः, अन्वयिप्रतियोगिकाभावगर्भतत्प्रसिद्धावपि तत्सम्बन्धस्य न वैयधिकरण्यं नापि तेन सम्बन्धेन विधेयताऽवच्छेदकावच्छिन्नाभावसत्त्वमिति वाच्यं, स्वरूपसम्बन्धाद्यवच्छिन्नप्रतियोगिताकाभावेन मुख्यपदार्थेन यद्धर्मावच्छिन्नप्रतियोगिताकेन वा घटितो व्यभिचारः परम्परासम्बन्धतदन्यधर्मावच्छिन्नस्याभावे व्यधिकरणतया प्रतियोगिताऽवच्छेदक इत्यनुपपत्त्यभावात्, स्वावच्छिन्नाभाववद्वृत्तित्वसंबन्धेन तत्तद्विधेयताऽवच्छेदकाभावनिवेशेऽपि दोषः सामान्यनिरुक्तिग्रन्थप्रसिद्धो बोध्यः। सर्वे घटाः पटा वा रूपवन्तो जातिमन्तो वेत्यादौ घटत्वपटत्वादिव्यापकरूपवत्त्वजातिमत्त्वादिव्याप्यत्वेन पर्याप्त्युपादाने शक्तिभेदशङ्कां निराकरोति–अत्र चेति। विशेषणतयेत्युपेक्ष्योपलक्षणतयेत्युक्तेः फलमाह–न वेति। अव्यावर्तकमेवेति। उद्देश्यताऽवच्छेदकघटत्वादिव्यापकताया रूपव्याप्यपर्याप्तौ सत्त्वात्; सर्वाणि द्रव्याणि रूपवन्तीत्यादिप्रयोगस्येत्यादिः, स्वपदं सर्वपरं, प्रागिति। तथा च स्वपदजन्यशाब्दबोधोत्तरमनुगमकरूपग्रहणे शक्तिग्रहे पश्चात्तादृशशाब्दबोध इत्यन्योन्याश्रय इत्यर्थः। पूर्ववदिति। स्वोच्चारणानुकूलोद्देश्यताऽवच्छेदकत्वेन स्वसमभिव्याहृतपदप्रतिपाद्यत्वेन वक्तृबुद्धिः=तद्विषयधर्मव्यापकविधेयताऽवच्छेदकत्वेन स्वसमभिव्याहृतपदप्रतिपाद्यत्वेन वक्तृबुद्धिः, तद्विषयधर्मावच्छिन्नव्याप्यश्च यो धर्मस्तदवच्छिन्नविषयकत्वस्वजन्यत्वोभयसंबन्धेन सर्वपदप्रकारको बोधविशेष्यकः संकेतः, तत्र स्वपदार्थो न सम्बन्धे प्रविष्टः, सर्वपदत्वेन प्रवेशाच्च न शक्त्यानन्त्यमित्यादि प्राग्वत्। एवं च द्रव्येषु जातिः, सर्वाणि द्रव्याणि सत्तावन्तीत्यादौ जातिमद्द्रव्यत्वव्यापकत्वगर्भानुगमकनिर्वाहाय वक्तृतात्पर्योत्कीर्तनसंगतिः। येषु जातिस्तानि सर्वाणि द्रव्याणीत्यादौ तदादिपदशक्त्या द्रव्याद्यन्यतमतयोपस्थिते तद्घटितजातिमत्त्वस्योद्देश्यताऽवच्छेदकत्वमक्षतमेव।

माधवी।

न चोद्देश्यताऽवच्छेदकव्यापकविधेयव्याप्यधर्मावच्छिन्न एव लाघवाच्छक्तिरस्तु किं गुरुतरतादृशरूपपर्याप्तिकधर्मावच्छिन्ने शक्तिकल्पनयेति वाच्यम्। सर्वं द्रव्यं रूपवदित्यादौ द्रव्यत्वव्यापकपर्य्याप्तिकरूपवद्भेदव्याप्यपर्य्याप्त्यप्रसिद्ध्या तादृशवाक्यस्य प्रामाण्यभिया सर्वपदशक्तेरेवात्र खण्डशः स्वीकरणीयतया तादृशस्थल उद्देश्यताऽवच्छेदकद्रव्यत्वव्यापकपर्य्याप्तिकधर्मावच्छिन्ने रूपवद्भेदबोधकतयाऽप्रामाण्योपपत्तेः तादृशलघुधर्मावच्छिन्ने शक्तिः शङ्किता, तत्र द्रव्यत्वव्यापकधर्मावच्छिन्ने रूपवद्भेदबोधस्य स्वीकरणीयतया तादृशवाक्यस्याप्रामाण्यापत्तेः। तथा

हि–द्रव्यं न रूपवदित्यादिवाक्यस्य प्रामाण्यवारणाय; अनुयोगिताऽवच्छेदकावच्छेदेन नञोऽभावबोधकत्वव्युत्पत्तेः स्वीकरणीयतया द्रव्यत्वसत्तादेरपि द्रव्यत्वव्यापकतया तदवच्छेदेन रूपवद्भेदासत्त्वात् तादृशवाक्यस्य प्रामाण्यापत्तिर्दुर्व्वारा, अस्माकन्तु द्रव्यत्वव्यापकपर्य्याप्तिकयावत्त्वरूपव्यासज्यवृत्तिधर्म्मसामानाधिकरण्येन रूपवद्भेदबोधकतया तादृशवाक्यस्य प्रामाण्योपपत्तिः ।

न च नञोऽनुयोगिताऽवच्छेदकावच्छेदेनाभावबोधकत्वव्युत्पत्तिभङ्ग इति वाच्यम् । व्यासज्यवृत्तिधर्म्ममात्रवृत्तिधर्मावच्छिन्नाविशेषितानुयोगिवाचकपदसमभिव्याहृतनञ एव तथा व्युत्पत्तिस्वीकारादिति, इत्थं चात्र द्रव्यत्वादिव्याप्तेर्घटादिप्रकारकाधिकरणे विभिन्नतया तत्तत्पर्याप्तेर्न द्रव्यत्वव्यापकत्वं, तद्वृत्तियावत्त्वपर्याप्तेश्चाधिकरणभेदेनाभिन्नतया द्रव्यत्वसमानाधिकरणभेदप्रतियोगिताऽनवच्छेदकत्वरूपव्यापकत्वस्य तत्राक्षततत्वमिति दिक् ।

एवं विधेयवाचकपदसमानाधिकरणसर्व्वपदस्य विधेयताऽवच्छेदकधर्म्मव्यापकधर्म्मावच्छिन्ने शक्तिकल्पने घटे न सर्व्वाणि रूपाणीत्यादिवाक्यस्यायोग्यत्वापात्तस्तत्र रूपत्वव्यापकधर्म्मावच्छिन्नाभावबोधस्यैव स्वीकरणीयतया रूपत्वादिव्यापकत्वस्य रूपगुणत्वादिसाधारणतया तदवच्छिन्नाभावस्य घटेऽभावाद्, रूपत्वव्यापकपर्य्याप्तिकधर्म्मावच्छिन्नशक्तिस्वीकारे च तावद्रूपवृत्तियावत्त्वादेरेव तादृशत्वात् तस्य च व्यासज्यवृत्तितया तदवच्छिन्नाभावश्चात्राक्षत एवेति । व्यभिचारित्वसम्बन्धेनेति । न च व्यभिचारित्वसम्बन्धस्य वृत्त्यनियामकत्वात् तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्धिरिति वाच्यम् । इह हेतावुपाधिर्नेह हेतावुपाधिरिति सर्व्वजनानुभवसिद्धप्रसिद्धरीत्या तत्सम्बन्धस्य वृत्तिनियामकत्वादिति । उद्देश्यताऽवच्छेदकविधया=उद्देश्यताऽवच्छेदकतया, तृतीयाऽर्थोऽभेदः । स्वसमभिव्याहृतपदप्रतिपाद्यत्वं=स्वघटितानुपूर्व्वीघटकपदजन्यप्रतीतिविषयत्वं, तथा चोद्देश्यताऽवच्छेदकत्वाभिन्नस्वसमभिव्याहृतपदप्रतिपाद्यत्वमित्यर्थः ।

दुर्घटं=न निश्चयविषयीभूतम् । तादृशपदप्रतिपाद्यत्वेन=स्वसमभिव्याहृतपदजन्यप्रतीतिविषयत्वेन । उद्देश्यताऽवच्छेदकविधयेत्यनुषज्यते । वक्तृबुद्धिरित्यस्य विषयत्वमित्यर्थः । वक्तृबुद्धिश्च सर्व्वे घटा रूपवन्त इत्यादिवाक्यजन्यबोधीयरूपत्वावच्छिन्नविधेयतानिरूपितोद्देश्यताऽवच्छेदकतावद्घटत्वमिष्टसाधनमित्याकारिका, वक्तृतात्पर्य्यमपि तादृशावच्छेदकतावद् घटत्वं भवत्वित्याकारकमित्यवधेयम् । प्रकरणा-

दिना=प्रथमोपदिष्टत्वादिना। पूर्व्ववत्समाधेय इति। उद्देश्यताऽवच्छेदकवि-
धया स्वसमभिव्याहृतपदप्रतिपाद्यत्वेन वक्तृबुद्धिविषयत्वाश्रयधर्म्मावच्छिन्नव्यापकविधेयताऽवच्छेदकविधया स्वसमभिव्याहृतपदप्रतिपाद्यत्वेन वक्तृबुद्धिविषयत्वाश्रयधर्मावच्छिन्नव्याप्यपर्य्याप्तिकधर्मावच्छिन्नविधेयताकत्वस्वजन्यत्वोभयसंम्बन्धेन बोधः सर्वपदवान् भवत्वित्याकारको भगवत्संकेतः स्वीकार्य इति भावः । इदमप्यस्मदुक्ततत्पदस्थलीयदिशा परिष्कार्य इति । उद्देश्यताऽवच्छेदकव्यापकेत्यत्र व्यापकता; उद्देश्यताऽवच्छेदकताघटकसम्बन्धेन; अन्यथा सर्व्वाणि द्रव्याणि रूपवन्तीत्यादिप्रयोगापत्तेः। घटगतयावत्त्वस्य घटानुयोगिकसमवायेन द्रव्यत्वव्यापकत्वाद्, एवं विधेयताव्याप्यत्वमपि विधेयताऽवच्छेदकताघटकसम्बन्धेन विधेयाभावघटितं, तेन सर्वाणि जन्यद्रव्याणि घटत्ववन्तीत्यादिको न प्रयोगः, अन्यथा जन्यद्रव्यत्वव्यापकयावत्त्वस्य कालिकेन घटाभाववदवृत्तित्वात् तादृशप्रयोगवारणासम्भवादिति केचित् ।

तन्न-सर्व्वेषु द्रव्येषु रूपमित्यादौ विशेष्यताऽऽख्यविधेयताऽवच्छेदकसम्बन्धाप्रसिद्ध्या तदनुपपत्तेः । एवं विधेयवाचकपदसमानाधिकरणसर्व्वपदस्थल उभयसाधारणशक्त्यनुगमस्थले चानुपपत्तिर्बोध्या । एवमन्यत्रापि केषांचिदाशङ्कितं तत्तुच्छतया नाशङ्कितं; तस्माद्वक्ष्यमाणमस्मदुक्तसमाधानमेवावलम्बनीयमिति ।

विनोदिनी ।

समाधत्ते-अत्रोच्यत इत्यादिना । घटत्वव्यापकत्वादिति । व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकपर्य्याप्तेरनुयोगिभेदेऽप्यैक्यादिति भावः । तयोरपि=प्रकृते घटत्वरूपयोरपि ।

अर्थतः=अनुमानतः । लभ्यते=अनुमीयते, एवं च यदीयव्यापकं यदीयव्याप्यं भवति तदपि तद्व्याप्यं भवतीति सुकरमनुमानमुक्तव्याप्तेरिति भावः । क्षतिः=सर्वाणि द्रव्याणि रूपवन्तीत्यादिव्यवहारापत्तिः ।

समाधेय इति । उद्देश्यताऽवच्छेदकत्वावच्छिन्नस्वघटितवाक्यजन्यप्रतिपाद्यत्वप्रकारताकवक्तृतात्पर्य्यविषयतासम्बन्धेन सर्वपदविशिष्टधर्मव्यापकत्वविशिष्टा या विधेयताऽवच्छेदकत्वावच्छिन्नस्वघटितवाक्यजन्यप्रतिपाद्यत्वप्रकारताकवक्तृतात्पर्य्यविषयतासंबन्धेन सर्वपदविशिष्टधर्मवद्व्याप्या पर्य्याप्तिस्तत्प्रतियोगियावत्त्वावच्छिन्नविषयताकत्वसंबन्धेन सर्वपदविशिष्टो बोधो भवत्वित्याकारकं शक्तिज्ञानं स्वीकार्य्यमतो न शक्त्यानन्त्यमिति भावः ।

उद्देश्यविधेयभावश्च न विशेष्यविशेषणभावनियतोऽतः सर्वेषु घटेषु रूपमित्यादावपि घटत्वादिरूपत्वाद्योरुद्देश्याविधेयताऽवच्छेदकभावोऽक्षत एवेति न घटत्वादिव्यापकरूपत्वाद्यवच्छिन्नव्याप्यपर्याप्तिकयावत्त्वभानानुपपत्तिः।

इयं च व्युत्पत्तिरुद्देश्यवाचकपदसमानाधिकरणसर्वपदे। विधेयवाचकपदसमानाधिकरणसर्वपदस्य च विधेयताऽवच्छेदकव्यापकोद्देश्यताऽवच्छेदकावच्छिन्नसम्बन्धव्याप्यपर्याप्तिकं यावत्त्वमर्थः, अतः काले सर्वे वृत्तिमन्तः; कालः सर्वधर्मवानित्यादौ सर्वपदेन वृत्तिमत्त्वादिव्यापककालादिसम्बन्धव्याप्यपर्याप्तिकं यावत्त्वं प्रतीयते।

अथ वा स्वार्थान्वयिताऽवच्छेदकधर्मव्यापकतादृशधर्मावच्छिन्नान्वयिताऽवच्छेदकावच्छिन्नव्याप्यपर्याप्तिकधर्मावच्छिन्नं सर्वपदार्थ इत्युद्देश्यविधेयभावं विशिष्यानिवेश्य सर्वसाधारण्येका व्युत्पत्तिरेव स्वीक्रियते। अन्वयित्वं च विशेष्यविशेषणभावसाधारणम्।

सर्वं प्रमेयमित्यादौ वस्त्वादिपदाध्याहारमन्तरेण बोधोपगमे तदनुरोधेनान्योन्याभावप्रतियोगिताऽनवच्छेदकविधेयव्याप्यपर्याप्तिकयावत्त्वार्थकताऽपि सर्वपदस्य स्वीकार्या, अयं सर्वं घटं वेत्तीत्यादावेतदीयज्ञानविषयतात्वादिना विषयत्वानन्वयात् तादृशधर्मो नान्वयिताऽवच्छेदकः; अन्वयिताऽवच्छेदकविषयतात्वावच्छिन्नव्याप्यत्वमतिप्रसञ्जकमिति तत्रापि व्युत्पत्त्यन्तरं स्वयमूहनीयम्।

---

मञ्जूषा ।

स्वार्थेति । स्वपदं सर्वपरं, सर्वाणि द्रव्याणि रूपवन्तीतिप्रयोगवारणायान्योन्याभावप्रतियोगिताऽनवच्छेदकेति ।

केचित्तु प्रमेयत्वव्यापकपर्याप्तिकं यावत्त्वमित्येवं वाऽत्र बोधः, अत एव सर्वे घटा इत्यपि प्रयोगो भवत्येवेत्याहुः ।

अतिप्रसञ्जकमिति । यो नीलं घटमेव वेत्ति नान्यं, तत्र सर्वं घटं वेत्तीतिप्रयोगापत्तिरित्यर्थः । व्युत्पत्त्यन्तरमिति । स्वोच्चारणानुकूला या स्वार्थान्वयिताऽवच्छेदकत्वे समभिव्याहृतपदप्रतिपाद्यत्वेन वक्तृबुद्धिस्तद्विषयधर्मव्यापकः तद्धर्मावच्छिन्नकर्मकक्रियाकर्तृबोधकस्वसमभिव्याहृतवाक्यतात्पर्यविषयताऽवच्छेदकतादृशधर्मावच्छिन्नान्वयिवृत्तिधर्मावच्छिन्नव्याप्यपर्याप्तिकधर्मावच्छिन्नविषयकत्वस्वजन्यत्वोभयसम्बन्धेन सर्वपदवद्बोधे शक्त्यन्तरमित्यर्थः । अयं सर्वं घटं वेत्तीत्यादौ च घटत्वव्यापकैतदीयज्ञानविषयत्वरूपतादृशधर्मव्याप्यपर्याप्तिकयावत्त्वबोधः ।

अन्ये तु विषयिता द्वितीयाऽर्थः, तत्रैतदीयज्ञानविषयतात्वाद्यवच्छिन्ननिरूपकतासम्बन्धावच्छिन्नव्यापकतासम्बन्धेन प्रकृत्यर्थान्वयः, सर्वपदं च तात्पर्यग्राहकमित्याहुः ।

माधवी ।

विशेष्यविशेषणसाधारणमिति । विषयतानिरूपितविषयतारूपम् । अन्योन्याभावप्रतियोगिताऽनवच्छेदकेति । सर्व्वं घटमित्यादिप्रयोगवारणाय तादृशपर्याप्तौ विधेयव्याप्यत्वं निवेशनीयमेवं सर्व्वं वेत्ति विष्णुरित्याद्यनुरोधादन्योन्याभावप्रतियोगिताऽनवच्छेदकस्वार्थानुयोगिताऽवच्छेदकधर्मव्याप्यधर्म्मावच्छिन्नव्याप्यपर्याप्तिकधर्म्मावच्छिन्नेऽपि सर्व्वपदस्य शक्त्यन्तरमङ्गीकरणीयम्, अतस्तत्रान्योन्याभावप्रतियोगिताऽवच्छेदकविषयितात्वव्याप्यपर्य्याप्तिकधर्म्मावच्छिन्नस्य सर्व्वपदाद्बोधः । स्वयमूहनीयमिति । द्वितीयाऽर्थकर्मतायामाधेयतासम्बन्धेन घटस्यान्वये घटत्वस्यापि स्वाश्रयपर्य्याप्तिमद्वृत्तित्वसम्बन्धेन भानोपगमान्न नानुपपत्तिः, स्वाश्रयत्वञ्च=स्वव्यापकत्वस्वसमानकालीनैतदीयज्ञानविषयतात्वावच्छिन्नव्याप्यत्वोभयसम्बन्धेन ग्राह्यम् ।

विनोदिनी ।

अन्वयित्वं चेति । अन्वयोऽस्मिन्नस्तीति विशेष्यवदन्वयोऽस्यास्तीति विशेषणस्याप्यन्वयित्वे बाधकाभावो मत्वर्थीयप्रत्ययस्योभयथाऽनुशिष्टत्वादित्याशयः ।

विषयताऽनन्वयादिति । द्वितीयया शुद्धविषयतात्वेनैव विषयतोप-

स्थितिर्न तु विशिष्टविषयतात्वेन, एतेन रूपेण शक्त्यभावादिति भावः ।

ऊहनीयमिति । अयं सर्वं घटं वेत्तीत्यत्रेदमीयज्ञाने निरूपकतया द्वितीयाऽर्थविषयताया अन्वयस्यानुभविकत्वेनेदमीयज्ञानविषयताव्याप्यघटत्वव्यापकपर्याप्तिप्रतियोगियावत्त्वावच्छिन्ने सर्वपदशक्तिर्वाच्येति भावः । तथानियमोपगमादिति । अनुयोगिविशेषणावच्छेदेनैव नञाऽभावः प्रत्याय्यत इति नियमोपगमादित्यर्थः ।

---

अत्र न सर्वाणि रूपाणीत्यादौ नञर्थप्रतियोगिविशेषणार्थकसर्वशब्दस्य स्वार्थान्वयिताऽवच्छेदकरूपत्वादिव्यापकपर्याप्तिनिरूपकयावत्त्वार्थकतया तदवच्छिन्नाभाव एव प्रतीयते, व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकस्तादृशाभावो घटादावबाधित एवेति नायोग्यता । न चाव्यासज्यवृत्तिगुणत्वादिपर्याप्तेरपि रूपत्वादिव्यापकतया गुणत्वादिसाधारणरूपत्वादिव्यापकपर्याप्तिकधर्मावच्छिन्नाभावो न घटादाविति कथमत्र योग्यतेति वाच्यम् ? अव्यासज्यवृत्तिगुणत्वादेरेकैकमात्रवृत्तिधर्मावच्छिन्नपर्याप्तिकूटस्यैव सर्वाणि रूपाणि गुणा इति प्रतीत्याऽवगाहनात्सर्वसाधारणैकपर्याप्तौ मानाभावात् प्रत्येकधर्मावच्छिन्नपर्याप्तिषु रूपत्वादेर्निरुक्तव्यापकत्वाभावात् ।

सर्वं द्रव्यं न रूपवदित्यादौ द्रव्यत्वादिव्यापकयावत्त्वसामानाधिकरण्यमभावस्य प्रतीयतेऽतो नायोग्यता । अनुयोगिविशेषणावच्छेदेनैव नञाऽभावः प्रत्याय्यते द्रव्यं न रूपवदित्यादिप्रयोगादर्शनादिति कथमेतदुपपाद्यताम् ? इति तु नाशङ्कनीयम्, व्यासज्यवृत्तिधर्माविशेषितानुयोगिकाभावबोधे तथा नियमोपगमात् ।

---

मञ्जूषा ।

स्वार्थेति । एवकारेण तादृशधर्मावच्छिन्नान्वयिताऽवच्छेदकावच्छिन्न-व्याप्त्यंशव्युदासः । शक्तिभेदोद्धारोऽनुपदं द्रष्टव्यः । निरुक्तेति । रूपत्वस-मानाधिकरणभेदप्रतियोगिताऽनवच्छेदकत्वरूपेत्यर्थः ।

माधवी ।

सर्व्वपदात्तादृशान्वयतात्पर्य्येणाह-कथमिति । केचित्तु स्वार्थान्व-यिताऽवच्छेदकधर्म्मव्यापकतदवच्छिन्नान्वयिताऽवच्छेदकधर्म्मव्याप्यध-र्म्मावच्छिन्नव्याप्यपर्याप्तिकधर्म्मावच्छिन्नेऽपि सर्व्वपदस्य शक्त्यन्तरं क-ल्पनीयमतो नानुपपत्तिः, तादृशधर्म्मश्चैतदीयज्ञानविषयतात्वमेवेति ।

---

यत्तु स्वरूपसंबन्धात्मकमभावानुयोगिताऽवच्छेदकत्वमनुयोगिविशेषणे नञ्पदजन्याभावप्रतीत्या गृह्यते द्रव्यत्वादौ न तादृशरूपवद्भेदानुयोगिताऽवच्छेदकत्वमतो-द्रव्यं न रूपवदित्यादयो न प्रयोगाः, व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावाभ्युपगमेन च सर्वं द्रव्यं न रूपवदित्यादिप्रयोगा उपपादनीयाः ।

न च व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावाभ्युपगमे कस्यापि रूपादेः सर्वघटादिषु पर्याप्तिर्नास्तीति सर्वघटत्वाद्यवच्छिन्नेऽपि रूपादिमद्भेदसत्त्वेन सर्वे घटा-न रूपवन्त इत्यादिप्रयोगापत्तिरिति वाच्यम्? रूपादिपर्याप्तित्वेनानुगतपर्याप्तीनामनतिप्रसक्तेन घटादिनिष्ठयावत्त्वादिनाऽप्यवच्छेदात्तदवच्छेदेन रूपादिमद्भेदवृत्तौ विरोधाद्, द्रव्यत्वादिव्यापकयावत्त्वस्य चातिप्रसक्ततया रूपादिपर्याप्तित्वावच्छिन्नानामनवच्छेदकतया तदवच्छेदेन रूपादिमद्भेदवृत्तावविरोधादिति,

तदसद्—उक्तरीत्यैवोपपत्तौ प्रतियोगिताऽवच्छेदकादिमति तच्छून्यसाधारणव्यासज्यवृतिधर्मावच्छेदेनान्योन्याभावादिवृत्तौ मानाभावात्, तादृशाभावोपगमे प्रतिबन्धकसमवहितेऽपि देशे व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकप्रतिबन्धकाभावबलात् कार्यापत्तेः, तत्र कारणताऽवच्छेदककोटौ विशेषणान्तरं प्रक्षिप्यापत्तिवारणे तु गौरवात् ।

मञ्जूषा ।

विशेषणान्तरं=व्यासज्यवृत्तिधर्मानवच्छिन्नानुयोगिताकत्वरूपं, न च प्रतियोगिवैयधिकरण्यं कुत उपेक्षितं ? प्रतियोगिमत्यपि सर्वत्वावच्छेदेन प्रतियोग्यनधिकरणत्वसत्त्वेनाव्यावर्तकत्वात् ।

माधवी ।

विशेषणान्तरं=व्यासज्यवृत्तिधर्मावच्छिन्नत्वरूपकारणताऽवच्छेदकविशेषणताविशेषसम्बन्धविशेषणम् ।

विनोदिनी ।

विशेषणान्तरमिति । व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकत्वाभावाद्यात्मकमिति भावः ।

अथ सर्वं द्रव्यं न रूपवदित्यादौ द्रव्यत्वादिव्यापकपर्याप्तौ विधेयीभूतरूपवद्भेदव्याप्यत्वस्य बाधितत्वादयोग्यत्वं दुर्वारमेवेति चेद् ? न—तत्र विधेयव्याप्यत्वभानानुपगमात् खण्डशो विभिन्नशक्त्युपगमेन क्वचित्तदंशपरित्यागेन बोधे विरोधविरहात । सर्वं गगनमित्यादिप्रयोगाभावाद् यावत्त्ववदनेकत्वमपि सर्वपदार्थः, तच्च स्वार्थाभेदान्वयोद्देश्यताऽवच्छेदकसमानाधिकरणभेद-

प्रतियोगित्वमेव, भेदश्च सामानाधिकरण्यानिरूपकत्वोभयसंबन्धेन प्रतियोगिताविशिष्टान्यो ग्राह्यः, अतो न द्वित्वावच्छिन्नभेदमादायातिप्रसङ्गः। एतादृशोभयधर्मावच्छिन्ने शक्तिरेकैवातो नैकं धर्मं परित्यज्यापरमादाय बोधः कदा चिदपीति न कतिपयानेकतात्पर्येणाशेषैकतात्पर्येण वा सर्वशब्दः प्रयुज्यते।

---

मञ्जूषा।

खण्डश इति। स्वार्थान्वयिताऽवच्छेदकव्यापकपर्याप्तिकधर्मावच्छिन्न एकशक्तिः, स्वार्थान्वयिताऽवच्छेदकधर्मावच्छिन्नान्वयिताऽवच्छेदकावच्छिन्नव्याप्यत्वे चापरशक्तिः, तत्राद्यसमभिव्याहृतविधेयवाचकपदसमभिव्याहृतसर्वपदाधीनशाब्दबोध एकशक्तिज्ञानस्यापरशक्तिज्ञानघटितसामग्र्याः सहकारित्वोपगमात् सर्वे घटाः; सर्वं द्रव्यं न रूपवदित्यादौ घटत्वद्रव्यत्वव्यापकपर्याप्तिकयावत्त्वमात्रभानम्, अत्र सर्वत्र पर्याप्तिकान्तमुपलक्षणं यावत्त्वमात्रं भासत इति तु न सत्, क्व चित्तदंशपरित्यागेन बोध इति ग्रन्थासङ्गत्यापत्तेः। सर्वमिति। गगनत्वव्यापकपर्याप्तिकधर्मः यावत्त्वं प्रयोगप्रसञ्जकं न त्वेकत्वम्; एकत्वे लक्षणया सर्वपदप्रयोगवदत्रापीष्टापत्तेः सुकरत्वाद् घटाद्यन्तर्भावेण तत्पर्याप्तेर्गगने सद्भावात् समुदायस्य प्रत्येकानन्यत्वात्।

नन्वेवमप्यनेकत्वमात्रतात्पर्येण सर्वं द्रव्यं रूपवदिति प्रयोगापत्तिः; यावत्त्वमात्रतात्पर्येण च सर्वं गगनं शब्दवदितीत्यत आह—एतादृशेति। कतिपयेति-सर्वं द्रव्यमित्यादौ विधेयस्यायोग्यत्वशङ्कावारणार्थम्।

माधवी।

खण्डशो भिन्नशक्त्युपगमेनेति। अथ खण्डशो भिन्नशक्तिः कीदृशी? यदि स्वार्थान्वयिताऽवच्छेदकव्यापकपर्य्याप्तिकधर्म्मावच्छिन्नविधेयकस्वार्थान्वयिताऽवच्छेदकधर्म्मव्याप्यपर्य्याप्तिकधर्म्मावच्छिन्नविषयताकबोधं जनयतु सर्व्वपदमित्येवंभगवत्सङ्केतरूपा तदा तादृशोभयविषयकशाब्दबोधस्यैकसङ्केतविषयतया कथमेकं परित्यज्यान्यस्य बोधः?

यदि च नानाऽर्थवत् प्रत्येकधर्म्मावच्छिन्ने शक्तिस्तदा सकृदुच्चरितसर्व्वपदात्सति तात्पर्य्ये युगपन्नानाऽर्थभानसम्भवेऽपि सति चैकमा-

न्तात्पर्य्यं तन्मात्रभानसम्भवेऽपि सर्वे घटा रूपवन्त इतिवत् सर्वाणि द्रव्याणि रूपवन्तीत्यादिप्रयोगापत्तिः, द्रव्ये प्रत्येकशक्त्युपस्थाप्यस्य द्रव्यत्वव्यापकपर्याप्तिकधर्मावच्छिन्नस्य रूपव्याप्यपर्याप्तिकधर्मावच्छिन्नस्याभेदेन विशेषणतया भाने बाधकाभावाद् ?

एवं व्याप्यादिघटकसम्बन्धस्य दुर्निवेशतया पूर्वोक्तानुपपत्तिश्च ?

मैवम्—स्वार्थान्वयिताऽवच्छेदकावच्छिन्नान्योन्याभावप्रतियोगिताऽवच्छेदकाभावपर्याप्तिकधर्मावच्छिन्नान्योन्याभावप्रतियोगिताऽवच्छेदकावच्छिन्नेषु घटेष्वेका शक्तिः,

अपरा स्वार्थान्वयिताऽवच्छेदकावच्छिन्नान्वयिताऽवच्छेदकावच्छिन्नाभावपर्याप्तिकधर्मावच्छिन्नेषु च तेषु, इत्यत्रैव खण्डशो विभिन्नशक्तिरित्यस्य तात्पर्यम्। अत एव विभिन्नशक्त्युपगमेनेत्येतावन्मात्रं परिहाय खण्डश इत्युक्तम् ।

भगवत्सङ्केतश्च—सर्वपदं स्वार्थान्वयिताऽवच्छेदकावच्छिन्नविषयकान्योन्याभावप्रतियोगिताऽवच्छेदकत्वविषयकाभावविषयकपर्याप्तिकधर्मावच्छिन्नविषयकान्योन्याभावप्रतियोगिताऽवच्छेदकावच्छिन्नविषयकं बोधं जनयत्वित्याकारकः,

अपरश्च—सर्वपदं तादृशैकतरधर्मावच्छिन्नविषयकबोधं जनयत्वित्याकारकश्च,

एवं सर्वे घटा रूपवन्त इत्यादौ स्वार्थान्वयिताऽवच्छेदकावच्छिन्नस्य घटस्यापरसर्वपदार्थान्योन्याभावप्रतियोगिताऽवच्छेदकत्वैकदेशेऽन्योन्याभाव आधेयतयाऽन्वयाद् घटनिष्ठान्योन्याभावप्रतियोगिताऽवच्छेदकत्वलाभः, तस्य च प्रतियोगितयाऽपरपदार्थाभावेऽन्वयात्तादृगवच्छेदकत्वाभावलाभः, उभयशक्तिप्रतिपाद्यपर्य्याप्तिकधर्मावच्छिन्नयोर्मिलित्वैकएव बोधः, संभेदेनान्यतरवैयर्थ्याभावात् ।

एवं च तादृशप्रतियोगिताऽवच्छेदकत्वाभावरूपाभावयोः पर्य्याप्त्यन्वयः, पर्य्याप्तेश्च प्रतियोगितासम्बन्धेन धर्मावच्छिन्नरूपत्वाभावपदार्थैकदेशे धर्मेऽन्वयाद् घटनिष्ठान्योन्याभावप्रतियोगिताऽवच्छिन्नलाभः,

एवं च घटनिष्ठान्योन्याभावप्रतियोगिताऽनवच्छेदकरूपाभाववत्पर्य्याप्तिकप्रतियोगिकधर्मावच्छिन्नलाभः,

एवं घटस्यान्योन्याभावप्रतियोगिताऽवच्छिन्नापरपदार्थैकदेशेऽन्योन्याभाव आधेयतयाऽन्वयाद् घटनिष्ठान्योन्याभावप्रतियोगित्वावच्छिन्नलाभः,

एवं च घटनिष्ठान्योन्याभावप्रतियोगिताऽनवच्छेदकरूपाभाववत्पर्या-

प्तिकधर्म्मघटनिष्ठान्योन्याभावप्रतियोगित्ववदभिन्नो घटो रूपवानित्याकारकस्तत्र बोधः, आकाङ्क्षाकार्य्यताऽवच्छेदकतया तादृशविषयताशालयेव बोधस्तादृशस्थले; न तु कदा चिदपि विधेयव्याप्यत्वं परित्यज्य।

एवं च सर्वं द्रव्यं न रूपवदित्यादावाकाङ्क्षावैचित्र्याद् विधेयव्याप्यत्वं परित्यज्यापि बोधो निष्प्रत्यूह एवेति।

एवं काले सर्वे वृत्तिमन्तः, कालः सर्वधर्म्मवान् इत्यादौ स्वार्थान्वयिताऽवच्छेदकधर्म्मावच्छिन्नान्वयिताऽवच्छेदकावच्छिन्नस्य कालस्याकाङ्क्षावैचित्र्यात् कालिकसम्बन्धावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनैव विशेषणत्वं तादृशतादृशसम्बन्धभानस्याकाङ्क्षाया एव नियामकत्वादिति चतुरस्रम्।

अथ स्वार्थान्वयिताऽवच्छेदकधर्म्मावच्छिन्नानुयोगिताऽवच्छेदकावच्छिन्नव्याप्यपर्य्याप्तिकधर्म्मावच्छिन्नस्य केवलस्य कदा चिदप्यभानात् पर्य्याप्तिकधर्मावच्छिन्ने द्वितीयशक्तिं प्रकल्प्य संभेदे नान्यतरवैयर्थ्यमित्याद्युक्तिरनुचितेति चेद् ? न—

कल्प्यैव तत्र शक्तिः, स्वार्थान्वयिताऽवच्छेदकावच्छिन्नाभावयोरेव द्वितीयशक्तिः स्वीकरणीयेति। न च स्वार्थान्वयिताऽवच्छेदकधर्म्मव्याप्यपर्याप्तिकधर्म्मस्वार्थान्वयिताऽवच्छेदकधर्म्मवन्निष्ठान्योन्याभावप्रतियोगित्वोभयधर्म्मावच्छिन्न एव शक्तिः स्वीक्रियतां द्वितीयशक्तिप्रतिपाद्यविधेयाद्यभावस्य तादृशशक्यताऽवच्छेदककोटिप्रविष्टपर्य्याप्तावन्वयस्वीकारेणैवोपपत्तेरिति वाच्यम् ? शक्यताऽवच्छेदके तदन्वये व्युत्पत्तिविरोधापत्तेः।

यदि च व्युत्पत्तिवैचित्र्यात् परमसुन्दर इत्यादिवत् तादृशान्वयबोधः स्वीक्रियते; तदा तादृशोभयधर्म्मावच्छिन्न एव तादृशशक्तिः स्वीकार्या, अत एव तादृशोभयधर्म्मावच्छिन्ने शक्तिरेकैवेति ग्रन्थस्यापि संगतिरिति बोध्यम्।

विनोदिनी।

खण्डश इति। स्वार्थान्वयिताऽवच्छेदकव्यापकत्वे; स्वार्थान्वयिताऽवच्छेकावच्छिन्नव्याप्यत्वे; पर्याप्तिप्रतियोगियावत्त्वावच्छिन्ने, च पृथक् पृथक् शक्तिस्वीकार इत्याशयः।

---

चैत्रो दधि भुङ्क्ते मैत्रः पयो भुङ्क्ते देवदत्तो घृतं भुङ्क्ते विष्णुमित्रः सर्वमेवेत्यादौ सर्वपदेन प्रत्येकं-

दधिपयोघृतानां भोजनकर्मतया प्रतिपादनाद् यद्रूपावच्छिन्ने पदान्तरोपस्थाप्यार्थे स्वार्थान्वयस्तद्रूपावच्छिन्नान्विततया यावद्धर्मावच्छिन्ना उपक्रान्ताः प्रत्येकं तावद्धर्मावच्छिन्नेषु सर्वपदस्य शक्त्यन्तरमङ्गीकार्यम्, उपक्रान्तैकधर्मावच्छिन्नान्वययोग्यताविरहे वाक्यस्याप्रामाण्यात् तादृशस्थले तथाविधसकलधर्माणामेवान्वयिताऽवच्छेदकतया भाननियमः, तन्निर्वाहिका च तथाविधयावद्धर्मप्रकारकं बोधं जनयतु सर्वपदमित्याकारकसङ्केतरूपा विलक्षणशक्तिरेव, तादृशशक्तिज्ञानेनैकधर्मप्रकारकबोधजननेऽपरापरतथाविधधर्मप्रकारकबोधसामग्र्याः पुष्पवन्तपदशक्तिज्ञानेन चन्द्रत्वसूर्यत्वयोरेकतरप्रकारकबोधजननेऽपरप्रकारकबोधसामग्र्या इव प्रयोजकत्वोपगमात्।

न च प्रक्रान्तानां दध्यादीनां प्रत्येकमन्वये वाक्यभेदापत्त्या साहित्यप्रकारेण तावत्पदार्थवाचकत्वमेव सर्वपदस्य किं नोपेयत इति वाच्यम्? साहित्यविशिष्टान्वयस्य समभिव्याहृतपदार्थे यत्र बाधस्तत्रापि तथा प्रयोगाद् वाक्यभेदस्य च गत्यन्तरविरहेणेष्टत्वाद्, अत एव प्रत्येकं पुत्रपश्वादिरूपफलकामकर्तव्यतया क्रतूनभिधायाभिहितेन "सर्वेभ्यो दर्शपूर्णमासावि"त्यनेन मिलितानां तावत्फलानां दर्शपौर्णमासकर्तव्यताप्रयोजककामनाविषयत्वं न प्रतिपाद्यते; प्रक्रान्तवाचिना सर्व-

नामपदेन मिलितत्वेन फलानुपस्थापनाद्; अपि तु प्रत्येक-फलकामस्यैव तत्राधिकार इति योगसिद्ध्यधिकरणासिद्धान्तोऽपि सङ्गच्छते ।

---

मञ्जूषा

यद्रूपं=भोजनत्वं भोजनकर्मतात्वं वा, पदान्तरं धातुपदं, द्वितीयपक्षे द्वितीयासहितधातुतात्पर्यार्थो बोध्यः । तथाविधेति । स्वसमभिव्याहृतपदतात्पर्यविषयताऽवच्छेदकावच्छिन्नान्वयितया वक्तृतात्पर्यविषयताऽवच्छेदकत्वोपलक्षितेत्यर्थः ।

नन्वेवमपि यत्र चैत्रो दधीत्यादिक्रमेण विष्णुमित्रो दधि विहाय सर्वमित्यादौ दधिभोजनबोधापत्तिः तत्र सर्वपदस्य दधन्यपि शक्तिस्ततो-दध्युपस्थितेश्च ?

मैवं-प्रक्रान्तक्रियाविरहार्थकहाधातुवशात् समानकालीनेन दधिभोजनत्यागभानेन प्रतिबन्धाद्दधिभोजनाभानाद्, दधि विना सर्वमित्यादौ तु बोध ऊह्यः । अत्रापि स्वत्वाननुगमः पूर्ववत्परिहरणीयः । योगसिद्धीति । अथ तत्र पुत्रत्वादिनैव फलोपस्थितिः न तु पश्वाद्यभावविशिष्टपुत्रत्वेन, कामनासत्त्वे पुत्रत्वाद्यवच्छिन्नकामनात्वेनाधिकारलाभात् सकृदनुष्ठानेनापि फलसमुच्चयो दुर्वार इति चेद् ? न-यतः सर्वेभ्यो दर्शपूर्णमासाविति वाक्ये वाक्यभेद इष्ट इति प्रत्येकप्रक्रान्तफलान्वयो; न पुत्रपश्वादिकामनायाः समूहालम्बन एकबोधो जायते, कामनायां च प्रक्रान्तस्य स्वेतरप्रक्रान्ताविषयकत्वस्वविषयकत्वोभयसम्बन्धेन, एवं पशोः, एवमन्यस्येति क्रमेण प्रक्रान्तफलान्वये योगसिद्ध्यधिकरणसिद्धान्ततात्पर्यं मिलितत्वेन फलानुपस्थापनादित्युक्तेः मिलितत्वं साहित्यमिति तदुपलक्षितफलानुपस्थितेरपि विवक्षितत्वात् ।

माधवी ।

तद्रूपावच्छिन्नान्विततया = तद्रूपावच्छिन्नविषयतानिरूपितविषतया । अभेदे तृतीया । उपक्रान्ताः = पूर्वशाब्दबोधविषयीभूताः । अस्य तृतीयार्थाभेदेऽन्वयः । प्रत्येकतद्रूपावच्छिन्नेषु = दधित्वपयस्त्वघृतत्वाद्यवच्छिन्नेषु । यद्धर्मावच्छिन्नेत्यादि उपक्रान्ताइत्यन्तं प्रथमतः शक्तिग्राहकतया परतश्च शक्तिस्मारकतयाऽभिहितं न तु शक्यताऽवच्छेदकघटकत्वप्रदर्शनपरं, शक्तिस्तु प्रत्येकधर्मावच्छिन्न एवेत्यवधेयम् । साहित्यं=धीविशेषविषयत्वं,-मीमांसकमतेऽतिरिक्तपदार्थो द्वित्वादिवद् व्यासज्यवृत्ति । बाध इति ।

दध्यादिकर्म्मत्वानां विभिन्नतया कस्मिन्नपि दध्यादियावत्पदार्थस्यास-त्त्वादत्रैव बाध इति भावः।

यद्यपि कर्म्मत्वानां विभक्तत्वेऽपि कर्म्मतात्वावच्छिन्ने स्वीयस्वीय-कर्म्मत्वे स्वस्वप्रकारकशाब्दबोधस्य खले कपोतन्यायेन सम्भवाद् वाक्यभेदस्वीकारोऽनुचितः, तत्तद्विशेष्यताया भिन्नत्वेऽपि कर्म्मतात्वनिष्ठावच्छेदकताया ऐक्यादेकवाक्यतासंभवाद्, अत एव धवखदिरपलाशान् छिन्धीत्यादावेताद्दृशरीत्या शाब्दबोधः स्वयमेवोक्तः, अत्रैकवाक्यत्वाभावे समासानुपपत्तिरपि स्वयमेवोक्ता, सर्व्वेभ्यो दर्शपौर्णमासावित्यादावप्येताद्दृशरीत्या शाब्दबोधसम्भवान्न वाक्यभेदप्रसक्तिः; तथाऽपि सर्व्वपदस्य साहित्यविशिष्टवाचकतामात्रखण्डनायापत्तेस्तत्र वाक्यभेदस्वीकार इत्यवधेयम्। यज्ञं विधायेति। यज्ञः = प्रधानप्रयोगः। क्वचित् क्रतूनभिधायेति पाठः।

विनोदिनी।

योगसिद्ध्यधिकरणसिद्धान्तोऽपीति। जैमिनीयतन्त्रे तुरीयाध्याये तार्त्तीयीकचरणेऽधिकरणमिदमेकादशत्वेनागतम्—

अत्र "एकस्मै वा अन्या इष्टयः कामायाह्रियन्ते; सर्वेभ्यो दर्शपौर्णमासौ" इति; एकस्मै वा अन्ये यज्ञक्रतवः कामायाह्रियन्ते; सर्वेभ्यो ज्योतिष्टोमः" इति च श्रौते विषयवाक्ये उपादाय; एकेनैवानुष्ठानेन सर्वफलप्राप्तिराहोस्वित् पर्यायेणेति संशय्य; "तत्र सर्वेऽविशेषाद्", तत्र=सकृत्प्रयोगे, सर्वे=अर्थाः, संबध्यन्त इति शेषः, विशेषस्याश्रवणादिति पूर्वपक्षं सूत्रयित्वा; "योगसिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगित्वाद्" इति सूत्रेण योगेन=प्रत्येकप्रयोगसंबन्धेन, सिद्धिः=तत्तत्फलोत्पत्तिः, क्रमेणेति यावद् वा=एतत्पक्षदार्ढ्यद्योतकः, उत्पत्त्या=यावत्फलसाहित्योत्पत्त्या, असंयोगित्वाद्=अविधायकत्वाद्, अर्थस्य=विधेः शास्त्रस्येति सिद्धान्तः सूचितः।

न च "सर्वेभ्यः" इत्येकेनैव श्रौतपदेन स्वर्गपश्वादिफलानामुद्दिष्टतया साहित्यमिह विवक्षितमिति वाच्यम्? उद्देश्यगतत्वेन साहित्यविवक्षानियमाभावाद्,

न च शब्दात्साहित्यनियमाप्रतीतावप्येककर्मफलत्वादार्थिकसाहित्यप्रत्ययो दुर्वार इति वाच्यम्? स्वर्गपश्वादीनां मिथोऽनपेक्षाणामेव फलत्वविश्रान्तेः, अन्यथा सर्वशब्दस्वारस्यभङ्गप्रसङ्गः; तस्माद्यद्यत्फलविषयिकेच्छा भवेत्तत्तद्विषयसाधनत्वप्रतिपादकताऽत्रत्यसर्वशब्दस्येति रहस्यम्।

यद्यप्येतत्सिद्धान्तसूत्रमधिकरणान्तरसिद्धान्ततया पार्थसारथिमिश्रै-"रेवं वे"ति शाबरभाष्यमाश्रित्य व्याख्यातमिति तद्रीत्या न प्रकृतोप-

योगि; तथाऽपि बहुभिर्व्याख्यातृभिः शाबरभाष्यीयामयौगपद्यपरतां मुख्यतयोपगम्य; निर्दिष्टसूत्राभ्यामेव प्रकृतमधिकरणं व्यवास्थापीति न चोद्यावकाश इति सर्वमनवद्यम् ।

विधेयव्याप्योद्देश्यताऽवच्छेदकधर्मवानिति सर्वपदार्थनिर्वचनपक्षे घटत्वत्वाद्यनुपस्थितिदशायां सर्वे घटा रूपवन्त इत्यादिनिश्चयस्य विपरीतज्ञानाविरोधित्वदोषनिरासाय प्रवृत्ताभ्यां माधवतर्कसिद्धान्तहरिनाथतर्कसिद्धान्ताभ्यां प्रतिबिभन्त्सनीयविपरीतज्ञानस्वरूपे प्रदर्शितेऽनुभवविरुद्धतां प्रदर्शयन्तः श्रीनवद्वीयमण्डनाः पूज्यपादास्मदध्यापका महामहोपाध्यायाः श्रीयदुनाथनैयायिकसार्वभौमभट्टाचार्य्यमहाशयपादास्तु सर्वे घटा रूपवन्त इत्यादिनिश्चये घटत्वसामानाधिकरण्येन रूपवद्भेदबुद्धौ यप्रतिबन्धकतायामविवादात् सर्वपदस्य ताद्दृगर्थनिरूपितशक्तिस्वीकरणे तथाभूतप्रतिबन्ध्यप्रतिबन्धकभावः सूपपादस्तादृगर्थ एव सर्वपदार्थत्वं स्वाभ्युपगमं, तथा च सर्वे जातिमन्तो भावत्ववन्त इत्यादौ जातिसामानाधिकरण्येन भावभेदबुद्धौ सर्वे घटत्ववन्तो रूपवन्त इत्यादौ घटत्वत्वरूपेण घटत्वसामानाधिकरण्येन रूपवद्भेदबुद्धौ च जातिर्भावत्वव्याप्या घटत्वं रूपवद्व्याप्यमित्याकारकसर्वपदार्थनिश्चयस्य प्रतिबन्धकता सुसंपद्यत एव, अभिमतधर्मिताऽवच्छेदकसामानाधिकरण्येनाभावबुद्धौ प्रतियोगिनि ताद्दृशधर्मिताऽवच्छेदकव्यापकनिश्चयस्येव ताद्दृशधर्मिताऽवच्छेदके प्रतियोगिव्याप्यत्वनिश्चयस्यापि प्रतिबन्धकतायामविवादात्, परन्तु घटत्वत्वाद्यनुपस्थितिदशायां घटत्वे निर्धर्मिताऽवच्छेदकव्याप्तिनिश्चयस्य स्वरूपतोऽस्वरूपतो वा भासमानघटत्वसामानाधिकरण्येन रूपादिमद्भेदबुद्धौ प्रतिबन्धकता न संगच्छतेऽत एवाग्रे सर्वपदस्य व्यापकत्वार्थकतोक्तिरपि समञ्जसा, स्वरूपतो भासमानघटत्वघटितव्यापकत्वस्य रूपवन्निष्ठस्य निश्चये घटो न रूपवानित्यादिबुद्धिनिरूपितविरोधिताया-विवादानास्पदत्वादिति प्राहुः ।

---

किंपदस्य जिज्ञासिते शक्तिः, अत एव स्वीयजिज्ञासाज्ञापनाय किंपदघटितप्रश्नवाक्यं प्रयुज्यते । तत्रोद्देश्यवाचककिंपदस्य स्वसमभिव्याहृतपदोपस्थाप्यताऽवच्छेदकधर्मावच्छिन्नविधेयतानिरूपितोद्देश्यतावऽच्छेदकत्वेन

वक्तृजिज्ञासितो धर्मः प्रवृत्तिनिमित्तम्, उपस्थाप्यताऽवच्छेदकान्तमुपलक्षणतयाऽनुगमकं, शाब्दबोधे तदभानात्। एवं च कः पचतीत्यादितः पाककृतित्वावच्छिन्नविधेयतानिरूपितोद्देश्यताऽवच्छेदकत्वेन वक्तृजिज्ञासितो यो धर्मस्तद्वान् पचतीत्याकारकोऽन्वयबोधः; किञ्चिद्धर्मावच्छिन्नोद्देश्यकपाककर्तृत्वविधेयकं ज्ञानं भवत्वित्याकारकजिज्ञासायास्तादृशबोधविषयकतया तादृशेच्छाविषयीभूतज्ञानजनकाद् ब्राह्मणः पचतीत्युत्तरवाक्यान्निवृत्तिरिति तादृशप्रश्नानन्तरं तथैवोत्तरं प्रयुज्यते ।

---

मञ्जूषा ।

कः पचतीति किंवान् पचतीत्यादौ च तादृशोद्देश्यताऽवच्छेदकताऽवच्छेदकत्वेन जिज्ञासितो धर्मस्तद्वान् पचतीति बोधः, किंचिद्धर्मावच्छिन्नावच्छिन्नोद्देश्यतेत्यादिक्रमेण जिज्ञासा, कलायवान् पचतीत्याद्युत्तरं चेत्यादि बोध्यं, तादृशेच्छा=जिज्ञासा ।

विनोदिनी ।

किंपदस्य शक्तिं विचारयितुमुपक्रमते–किंपदस्येति । अत एव=जिज्ञासायाः किंपदप्रवृत्तिनिमित्तताऽवच्छेदकत्वादेव । उपलक्षणतयेति । एवं च स्वसमभिव्याहृतपदोपस्थाप्यताऽवच्छेदकत्वोपलक्षितधर्मावच्छिन्नविधेयतानिरूपितोद्देश्यताऽवच्छेदकत्वप्रकारतानिरूपकवक्तृजिज्ञासानिरूपितविशेष्यताको धर्मः किंपदप्रवृत्तिनिमित्तमिति फलितम् ।

---

न चैवं प्रमेयः पचतीत्याद्युत्तरवाक्यमेव कथं न तादृशप्रश्नानन्तरं प्रयुज्यते, तज्जन्यज्ञानस्यापि तादृशेच्छाविषयत्वादिति वाच्यम् ? स्वसमभिव्याहृतपदोपस्थाप्यविधेयन्यूनवृत्तिधर्मावच्छिन्न एव तादृशकिंपदस्य श-

क्त्यभ्युपगमात् ।

अभेदेन स्वार्थान्वितोद्देश्यवाचकपदान्तरसमभिव्याहृतकिंपदशक्यताऽवच्छेदकगर्भे च स्वार्थाभेदान्वयिताऽवच्छेदकत्वोपलक्षितधर्मन्यूनवृत्तित्वमपि धर्मांशे विशेषणं देयमतः को ब्राह्मणः पचतीत्यादिप्रश्नानन्तरं चैत्रः पचतीत्याद्याकारकोत्तरवाक्यं प्रयुज्यते; न तु मनुष्यः पचतीत्यादिकं, मनुष्यत्वादेर्ब्राह्मणत्वाद्यन्यूनवृत्तित्वात्तदवच्छिन्नोद्देश्यकत्वेन ज्ञानगोचरेच्छायास्तत्राप्रतीतेः ।

---

मञ्जूषा ।

स्वार्थेति । स्वसमभिव्याहृतपदोपस्थाप्यताऽवच्छेदकधर्मावच्छिन्नविषयतानिरूपितस्वार्थभेदान्वयिताऽवच्छेदकावच्छिन्नोद्देश्यतानिरूपिताभेदसंसर्गावच्छिन्नावच्छेदकताऽवच्छेदकत्वेन जिज्ञासितो यः स्वार्थभेदान्वयिताऽवच्छेदकधर्मन्यूनवृत्तिधर्मस्तद्वान् किंपदार्थः, को ब्राह्मण इत्यादौ च पाककृतित्वावच्छिन्नविधेयतानिरूपितब्राह्मणत्वावच्छिन्नोद्देश्यतानिरूपिताभेदसंसर्गावच्छिन्नाऽवच्छेदकत्वेन जिज्ञासितो यो ब्राह्मणत्वन्यूनवृत्तिधर्मस्तद्वदभिन्नो ब्राह्मणः पचतीति बोधः, पाककृतित्वावच्छिन्नविधेयतानिरूपितब्राह्मणत्वावच्छिन्नोद्देश्यतानिरूपिताभेदसंसर्गावच्छिन्नकिंचिद्धर्मावच्छिन्नावच्छेदकताशालि ज्ञानं भवत्विति जिज्ञासा ।

माधवी ।

विधेयन्यूनेति । स्वसमभिव्याहृतपदोपस्थाप्यताऽवच्छेदकोपलक्षितधर्मावच्छिन्नन्यूनवृत्तिरित्यर्थः, तेन विधेयत्वस्य केवलान्वयित्वान्न दोष इति । तादृशकिम्पदेति । उद्देश्यवाचककिम्पदेत्यर्थः । तथा च पाककृतित्वावच्छिन्नविधेयतानिरूपितोद्देश्यताऽवच्छेदकत्वेन जिज्ञासाविषयककृतिन्यूनवृत्तिधर्मवान् पचतीत्याकारक एव कः पचतीत्यादितो बोध इति ।

विशेषणं देयमिति । तथा च स्वसमभिव्याहृतपदोपस्थाप्यताऽवच्छेदकधर्मावच्छिन्नविधेयतानिरूपितार्थाभेदान्वयिताऽवच्छेदकत्वोपलक्षितधर्मावच्छिन्ना योद्देश्यता तन्निरूपिताभेदसंसर्गावच्छिन्नावच्छेदक-

ताकत्वेन जिज्ञासाविषयस्वार्थाभेदान्वयिताऽवच्छेदकत्वोपलक्षितधर्म्म-न्यूनवृत्तिधर्मावच्छिन्ने तादृशकिंपदस्य शक्तिः । एवं च को ब्राह्मणः पचतीत्यादितः स्वसमभिव्याहृतपदोपस्थाप्यताऽवच्छेदकत्वोपलक्षित-धर्म्मावच्छिन्नविधेयतानिरूपितब्राह्मणत्वावच्छिन्नोद्देश्यताऽवच्छेदकत्वेन जिज्ञासाविषयब्राह्मणत्वन्यूनवृत्तिधर्म्मवदभिन्नो ब्राह्मणः पचतीत्याकारको बोधः, चैत्र इत्यनन्तरं ब्राह्मण इत्यध्याहार्य्यमतो जिज्ञासाविषय-बोधलाभः । तदवच्छिन्नोद्देश्यताऽवच्छेदकत्वेन=मनुष्यत्वावच्छिन्नोद्देश्य-ताऽवच्छेदकताकत्वेनेत्यर्थः ।

विनोदिनी ।

न्यूनवृत्तित्वमपीति । एवं च स्वार्थाभेदान्वयिताऽवच्छेदकत्वोपल-क्षितधर्मन्यूनवृत्तित्वविशिष्टस्वसमभिव्याहृतपदोपस्थाप्यताऽवच्छेदकाव-च्छिन्नविधेयतानिरूपितोद्देश्यताऽवच्छेदकत्वप्रकारतानिरूपकवक्तृजि-ज्ञासानिरूपितविशेष्यताकधर्मः; अभेदेन स्वार्थान्वितोद्देश्यवाचकपदा-न्तरसमभिव्याहृतकिंपदस्य प्रवृत्तिनिमित्तम् ।

---

एवं यत्रोद्देश्यताऽवच्छेदके किंपदार्थस्याभेदेनान्व-यस्तत्र तदन्वयिताऽवच्छेदकधर्मावच्छिन्ने विशेषणताऽऽपन्न-तदन्वयिताऽवच्छेकधर्मन्यूनवृत्तिधर्मावच्छिन्नोद्देश्यताऽव-च्छेदकताकप्रकृतविधेयज्ञानगोचरेच्छा किंपदेन बोध्यते, एवं च प्रकृतसत्तानिष्ठविधेयतानिरूपितघटवृत्त्युद्देश्यता-ऽवच्छेदकतानिरूपितसंख्यात्वन्यूनवृत्तिधर्मनिष्ठावच्छेदक-त्वेन जिज्ञासितो यो धर्मस्तद्वान् किंपदार्थः, अतः कति घटाः सन्तीत्यादौ डतिप्रत्ययार्थे संख्याऽऽदौ किंपदार्थ-स्य जिज्ञासितधर्मावच्छिन्नस्याभेदेनान्वयात्संख्यात्वन्यून-वृत्तिदशत्वत्वावच्छिन्नोद्देश्यताऽवच्छेदकताकबोधजनकं द-शसंख्याका घटाः सन्तीत्युत्तरं प्रयुज्यते ।

यत्र चोद्देश्यताऽवच्छेकीभूतविभक्त्याद्यर्थे भेदेन किंप-

दार्थान्वयः कस्य पुत्रः सुन्दर इत्यादौ; तत्र यादृशसम्बन्धेन यदवच्छिन्ने तदन्वयः तादृशसम्बन्धेन विशेषधर्मावच्छिन्नविशेषिततदवच्छिन्ननिष्ठोद्देश्यताऽवच्छेदकताकप्रकृतविधेयज्ञानगोचरेच्छा प्रतीयते ।

---

मञ्जूषा

तदन्वयिताऽवच्छेदकेति । किंपदार्थान्वयिताऽवच्छेदकं प्रकृते संख्यात्वादि, तदवच्छिन्नविशेषणताऽऽपन्नं किंपदार्थान्वयिताऽवच्छेदकसंख्यात्वादिन्यूनवृत्तिधर्मो दशत्वादिस्तदवच्छिन्नोद्देश्यताऽवच्छेदकताकेत्यर्थः, एवं च पूर्ववद्विधेयताऽन्तं निवेश्य तन्निरूपिततादृशधर्मावच्छिन्नान्वयिताऽवच्छेदकावच्छिन्नोद्देश्यतानिरूपिताभेदसंसर्गावच्छिन्नावच्छेदकतानिरूपितस्वार्थभेदान्वयिताऽवच्छेदकधर्मावच्छिन्नावच्छेदकत्वेन जिज्ञासितो यः स्वार्थभेदान्वयिताऽवच्छेदकन्यूनवृत्तिधर्मस्तदवच्छिन्ने किंपदस्य शक्तेर्बोधोपयोगिनं तदर्थमाह-एवं चेति । सत्तानिष्ठेति । एतद्देशवृत्तित्वावच्छिन्नेत्यर्थः । घटवृत्तीति । घटत्वावच्छिन्नेत्यर्थः। प्रथमाऽवच्छेदकताऽभेदसंसर्गावच्छिन्ना बोध्या। संख्यात्वेत्यादेः संख्यात्वावच्छिन्नावच्छेदकताऽवच्छेदकत्वेन जिज्ञासितः संख्यात्वन्यूनवृत्तिधर्म इत्यर्थः । संख्यात्वावच्छेदकतायां निरूपितान्तार्थान्वयः। अन्वयादिति । एतद्देशवृत्तित्वत्वावच्छिन्नविधेयतानिरूपितघटत्वावच्छिन्नोद्देश्यतानिरूपिताभेदसंसर्गावच्छिन्नावच्छेदकतानिरूपितसंख्यात्वावच्छिन्नावच्छेदकताऽवच्छेदकत्वेन जिज्ञासितो यः संख्यात्वन्यूनवृत्तिधर्मस्तद्वद्भिन्नसंख्यावद्भिन्ना घटा एतद्देशवृत्तय इति बोधः । तादृशसंख्यात्वावच्छिन्नकिंचिद्धर्मावच्छिन्नावच्छेदकताशालि ज्ञानं भवत्विति जिज्ञासा। दशसंख्याका इति। यदि दश घटाः सन्तीत्युत्तरं प्रयुज्यते तत्रापि दशेत्यस्य दशसंख्याकान्वयित्वेन स्वार्थभानात् ।

अन्ये तु दश घटाः सन्तीत्यादिसंख्यात्वविषयकोत्तरानुरोधात् तादृशसंख्यानिष्ठकिंचिद्धर्मावच्छिन्नावच्छेदकताशालि ज्ञानं भवत्विति जिज्ञासाऽऽदिकम्, अत एव संख्याग्रन्थे संख्यात्वव्याप्यं दशत्वत्वादिकं जातिः, कति भवतः पुत्रा इति प्रश्ने दशेत्युत्तरमित्युक्तमित्याहुः ।

न्यूनवृत्तित्वोपादानात् ससंख्याका घटा इत्यादि नोत्तरम् । कस्येति । यत्तत्पदे विभक्त्यर्थताऽवच्छेदकपरे, अत्र सुन्दरत्वावच्छिन्नविधेयतानिरू-

पितपुत्रत्वावच्छिन्नोद्देश्यतानिरूपितसम्बन्धत्वावच्छिन्नावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नकिंचिद्धर्मावच्छिन्नावच्छेदकताशालिज्ञानं भवत्वितीच्छेत्यतस्तथा विधनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताऽवच्छेदकत्वेन जिज्ञासितो यः पुत्रानुयोगिकाश्रयत्वप्रतियोगिजन्यत्वानुयोगिकनिरूपितत्वसम्बन्धप्रतियोगित्वस्य विशेषधर्मस्तद्वन्निरूपितसम्बन्धवत्पुत्रः सुन्दर इति बोधः । विधेयताऽन्तं निवेश्य तन्निरूपितस्वसमभिव्याहृतपदोपस्थाप्यान्वयिताऽवच्छेदकधर्मावच्छिन्नोद्देश्यतानिरूपितस्वार्थभेदान्वयिताऽवच्छेदकधर्मावच्छिन्नावच्छेदकतानिरूपितस्वार्थभेदसम्बन्धावच्छिन्नावच्छेदकताऽवच्छेदकत्वेन जिज्ञासितो यः स्वसमभिव्याहृतपदोपस्थाप्यान्वयिनिष्ठान्वयप्रतियोगिकस्वार्थान्वयिताऽवच्छेदकावच्छिन्नानुयोगिकान्वयप्रतियोगित्वस्य विशेषधर्मः तद्वति किंपदशक्तिः, विशेषधर्मपदात् प्रमेयस्य सुन्दर इति नोत्तरं, मनुष्यस्य सुन्दर इति तूत्तरं भवत्येव ।

माधवी ।

तदन्वयिताऽवच्छेदकेति । किंपदार्थान्वयिताऽवच्छेदकेत्यर्थः। दशसंख्याका घटाः सन्तीत्यनन्तरं तत्र प्रयुज्यत इति । तादृशकिंपदशक्तिस्तु स्वसमभिव्याहृतपदोपस्थाप्यताऽवच्छेदकत्वोपलक्षितधर्म्मावच्छिन्नविषयतानिरूपितस्वार्थाभेदान्वयिताऽवच्छेदकधर्म्मावच्छिन्नान्वयिताऽवच्छेदकत्वोपलक्षितधर्म्मावच्छिन्नोद्देश्यताऽवच्छेदकतानिरूपिताभेदसंसर्गावच्छिन्नावच्छेदकताकत्वेन जिज्ञासितस्वार्थाभेदान्वयिताऽवच्छेदकत्वोपलक्षितधर्मन्यूनवृत्तिधर्मावच्छिन्ने; अतः कति घटाः सन्तीत्यादावस्तित्वावच्छिन्नविधेयतानिरूपिता या घटत्वावच्छिन्नोद्देश्यता तन्निरूपिता या संख्यात्वावच्छिन्नावच्छेदकता तन्निरूपिताभेदसंसर्गावच्छिन्नावच्छेदकताकत्वेन जिज्ञासितसंख्यात्वन्यूनवृत्तिधर्म्मावच्छिन्नाभिन्नसंख्यावन्तो घटाः सन्तीत्याकारक एव तत्र बोध इति । एतादृशजिज्ञासाविषयज्ञानजनकं दशसंख्याका घटाः सन्तीत्युत्तरवाक्यं प्रयुज्यते, दश घटाः सन्तीत्युत्तरवाक्यं यदि प्रयुज्यते तदा दशपदस्य दशसंख्यके लक्षणया तादृशबोधः, अन्यथा जिज्ञासाविषयबोधासम्पत्त्या जिज्ञासानिवृत्तिरेव न स्यादिति बोध्यम् ।

'कस्य पुत्रः सुन्दर इत्यादाविति । तदन्वयः=किंपदार्थान्वयः। निषेकद्वारा जन्यतावान् पुत्रपदार्थः, षष्ठ्यर्थश्च जन्यत्वं, तत्र निरूपितत्वसम्बन्धेन किंपदार्थस्यान्वयस्तथा च सौन्दर्य्यावच्छिन्नविधेयतानिरूपिता या पुत्रत्वावच्छिन्नोद्देश्यता तन्निरूपिता या जन्यत्वावच्छिन्नाऽव-

च्छेदकता तन्निरूपिता निरूपितत्वसम्बन्धावच्छिन्नाऽवच्छेदकता तदव-च्छेदकत्वेन जिज्ञासितनिरूपितत्वसम्बन्धप्रतियोगित्वन्यूनवृत्तिर्यो धर्म्मो-निरूपितत्वसम्बन्धेन तदवच्छिन्नजन्यतावान् पुत्रः सुन्दर इत्यन्वयबोधः, अतस्तादृशबोधस्य तादृशन्यूनवृत्तिधर्म्मावच्छिन्नोद्देश्यताऽवच्छेदकता-ऽवच्छेदकताकप्रकृतविधेयकबोधविषयकेच्छाविषयतया तादृशेच्छानि-वर्त्तकं चैत्रस्य पुत्रः सुन्दर इत्याद्युत्तरवाक्यं प्रयुज्यते, शक्तिस्तु पूर्व्ववदूह्या ।

विनोदिनी ।

किंपदेन बोध्यत इति । एवं चाभेदेन स्वार्थान्वयिताऽवच्छेदकधर्म-न्यूनवृत्तित्वविशिष्टस्वसमभिव्याहृतपदोपस्थाप्यताऽवच्छेदकधर्मावच्छि-न्नविधेयतानिरूपितोद्देश्यताऽवच्छेदकत्वप्रकारतानिरूपकवक्तृजिज्ञा-सानिरूपितविशेष्यताकधर्म उद्देश्यताऽवच्छेदकेऽभेदान्वयिस्वार्थककिं-पदस्य प्रवृत्तिनिमित्तम् ।

---

एवं विधेयवाचककिंपदस्य स्वसमभिव्याहृतपदोप-स्थाप्यताऽवच्छेदकत्वोपलक्षितधर्मावच्छिन्नोद्देश्यतानिरू-पितविधेयताऽवच्छेदकतया जिज्ञासितो यो विशेषधर्म-स्तदवच्छिन्ने शक्तिरिति; अयं क इत्यादाविदंत्वाद्यवच्छि-न्नांशे विधेयताऽवच्छेदकत्वेन जिज्ञासितधर्मवानित्याकार-को बोधः; तेन तद्विषयकजिज्ञासाविषयीभूतज्ञानज-नकं चायं ब्राह्मण इत्याद्युत्तरवाक्यं तादृशप्रश्नान-न्तरं प्रयुज्यते ।

एवं यत्र विधेये विधेयताऽवच्छेदके वा किंपदार्थस्याभे-देन भेदेन वाऽन्वयः-इदं किं द्रव्यम् ? इदं कस्य धनं ? भ-वतः पुत्राः कति ? भवान्कस्य पुत्रः ? इत्यादौ तत्र रीतिः पूर्ववदूहनीया ।

मञ्जूषा ।

विशेषधर्म इति । समभिव्याहृतपदोपस्थाप्यताऽवच्छेदकीभूतोद्देश्यताऽवच्छेदकन्यूनवृत्तिरित्यर्थः । इदंत्वं च ब्राह्मणतदन्यवृत्तितया सामान्यधर्मः, इदंत्वावच्छिन्नोद्देश्यतानिरूपितकिंचिद्धर्मावच्छिन्नावच्छेदकताशालि ज्ञानं भवत्विति जिज्ञासा, इदं किं द्रव्यमिति । उद्देश्यताऽन्तं निवेश्य तन्निरूपितस्वार्थाभेदान्वयिताऽवच्छेदकावच्छिन्नविधेयतानिरूपिताभेदसम्बन्धावच्छिन्नावच्छेदकताऽवच्छेदकत्वेन जिज्ञासितो यः स्वार्थाभेदान्वयिताऽवच्छेदकस्य विशेषधर्मस्तदवच्छिन्ने किंपदशक्तिः, इदंत्वावच्छिन्नोद्देश्यतानिरूपितद्रव्यत्वावच्छिन्नविधेयतानिरूपिताभेदसंसर्गावच्छिन्नावच्छेदकताऽवच्छेदकत्वेन जिज्ञासितो यो द्रव्यत्वस्य विशेषधर्मस्तद्वदभिन्नद्रव्याभिन्नमिदमिति बोधः; तादृशाभेदसंसर्गावच्छिन्नकिंचिद्धर्मावच्छिन्नावच्छेदकताशालिज्ञानं भवत्विति जिज्ञासा, किंधनमिति ।

केचित्तु कस्य धनमिति षष्ठीसमासः(१) किमीयत्वत्वावच्छिन्नो लक्षणया किंपदार्थः, इदंत्वावच्छिन्नविशेष्यतानिरूपितधनत्वावच्छिन्नविधेयतानिरूपितभेदसम्बन्धावच्छिन्नावच्छेदकताऽवच्छेदकतायाः सम्बन्धत्वनिष्ठायानिरूपितत्वसम्बन्धेनावच्छेदकतायामवच्छेदकतया जिज्ञासितो यः स्वामित्वन्यूनवृत्तिधर्मः तद्वतो धनमिति बोधः, जिज्ञासाऽऽदिकं तूह्यमिति पूर्वोदाहरणाद्विशेषमाहुः; तर्हि; कस्य पुत्र इत्येतदनन्तरमेतत्पाठउचित इति ।

भवत इति।उद्देश्यताऽन्तं निवेश्य तन्निरूपितविधेयतानिरूपितस्वार्थाभेदान्वयिताऽवच्छेदकधर्मावच्छिन्नावच्छेदकताऽवच्छेदकत्वेन जिज्ञासितो यः स्वार्थाभेदान्वयिताऽवच्छेदकस्य विशेषधर्मस्तद्वति शक्तिः, भवत्पुत्रत्वावच्छिन्नोद्देश्यतानिरूपितविधेयतानिरूपितसंख्यात्वावच्छिन्नकिंचिद्धर्मावच्छिन्नावच्छेदकताऽवच्छेदकत्वेन जिज्ञासितो यः संख्यात्वस्य विशेषधर्मस्तद्वदभिन्नसंख्यावदभिन्ना भवदीयपुत्रा इत्यन्वयबोधः, तादृशसंख्यात्वावच्छिन्नकिंचिद्धर्मावच्छिन्नावच्छेदकताशालि ज्ञानं भवत्विति जिज्ञासा।भवानिति।तथाविधोद्देश्यतानिरूपितस्वार्थभेदान्वयिताऽवच्छेदकावच्छिन्नान्वयिताऽवच्छेदकावच्छिन्नविधेयतानिरूपितस्वार्थभेदान्वयिताऽवच्छेदकावच्छिन्नावच्छेदकतानिरूपितभेदसम्बन्धावच्छिन्नावच्छेदकताऽवच्छेदकत्वेन जिज्ञासितो यः स्वार्थभेदान्वयिताऽवच्छेकावच्छिन्नान्वयिताऽवच्छेदकावच्छिन्नानुयोगिताकान्वयप्रतियोगिस्वार्थभेदा-

(१) इत्थं लेखतो व्याख्यात्रा किंधनमिति समस्तः पाठो निरधारीति प्रतीयते ।

न्वयिताऽवच्छेदकावच्छिन्नान्वयिताकान्वयप्रतियोगित्वस्य विशेषधर्मस्तद्वति किंपदशक्तिः, भवत्त्वावच्छिन्नोद्देश्यतानिरूपितपुत्रत्वावच्छिन्नविधेयतानिरूपितजन्यत्वत्वावच्छिन्नावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताऽवच्छेदकत्वेन जिज्ञासितः पुत्रत्वावच्छिन्नानुयोगिताकाश्रयत्वसम्बन्धप्रतियोगिताकजन्यत्वानुयोगिकनिरूपितत्वसंबन्धप्रतियोगित्वस्य विशेषधर्मस्तद्वन्निरूपितजन्यतावत्पुत्राभिन्नो भवानिति बोधः। तादृशनिरूपितत्वसंसर्गावच्छिन्नकिंचिद्धर्मावच्छिन्नावच्छेदकताशालि ज्ञानं भवत्विति जिज्ञासा।

माधवी।

विधेयताऽवच्छेदकतया जिज्ञासितो यो विशेषधर्म्म इति। अत्रायं क इति प्रश्नानन्तरमयं प्रमेय इत्युत्तरवाक्यप्रयोग इष्ट एवेति ध्येयम्।

इदं किं द्रव्यमित्यादौ स्वसमभिव्याहृतपदोपस्थाप्यताऽवच्छेदकधर्मावच्छिन्नोद्देश्यतानिरूपितस्वार्थान्वयिताऽवच्छेदकधर्मावच्छिन्नविधेयतानिरूपिताभेदसंसर्गावच्छिन्नावच्छेदताकत्वेन जिज्ञासितस्वार्थान्वयिताऽवच्छेदकधर्म्मन्यूनवृत्तिधर्मावच्छिन्ने तत्र किंपदस्य शक्तिः, अतस्तादृशशक्तिज्ञानानन्तरमिदं रत्नं द्रव्यमित्याद्युत्तरवाक्यं प्रयुज्यते। विधेयांशेऽभेदान्वयिकिंपदार्थस्य स्थलमुक्तं, विधेयांशे भेदान्वयिकिंपदार्थस्थलमाह—इदं कस्येति। स्वसमभिव्याहृतपदोपस्थाप्यताऽवच्छेदकधर्मावच्छिन्नोद्देश्यतानिरूपितस्वार्थान्वयिताऽवच्छेदकधर्मावच्छिन्नविधेयतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकत्वेन जिज्ञासितनिरूपितत्वप्रतियोगित्वन्यूनवृत्तिधर्म्मावच्छिन्ने किंपदस्य शक्तिः तथा चेदंत्वावच्छिन्ननिरूपितस्वत्वत्वावच्छिन्नविधेयताऽवच्छेदकताऽवच्छेदकत्वेन जिज्ञासितनिरूपितत्वप्रतियोगित्वन्यूनवृत्तिधर्मावच्छिन्नवत्स्वत्ववदिदमित्याकारकस्तत्र बोधः,अतस्तत्र त्वदीयमित्युत्तरवाक्यं प्रयुज्यते, विधेयताऽवच्छेदके किंपदार्थस्याभेदान्वये, भेदान्वये चोदाहरणे स्वयमाह—भवतः पुत्राः कतीत्यादि। प्रथमे विधेयताऽवच्छेदकसंख्यायां किंपदार्थस्याभेदेन; द्वितीये विधेयताऽवच्छेदकषष्ठ्यर्थे जन्यत्वे किंपदार्थस्य भेदेनान्वयः, प्रथमकिंपदस्य शक्तिस्तु स्वसमभिव्याहृतपदोपस्थाप्यताऽवच्छेदकत्वोपलक्षितधर्मावच्छिन्नोद्देश्यतानिरूपितस्वार्थाभेदान्वयिताऽवच्छेदकत्वोपलक्षितधर्मावच्छिन्नावच्छेदकताकविधेयतानिरूपिताभेदसंसर्गावच्छिन्नावच्छेदकताऽवच्छेदकताकत्वेन जिज्ञासितस्वार्थाभेदान्वयिताऽवच्छेदकत्वोपलक्षितधर्मन्यूनवृतिधर्मावच्छिन्ना, द्वितीये तु तादृशधर्मावच्छिन्नोद्देश्यतानिरूपितस्वार्थान्वयिताऽवच्छेदकधर्मा-

वच्छिन्नान्वयिताऽवच्छेदकत्वेन विवक्षितधर्मावच्छिन्नविधेयतानिरूपितावच्छेदकताऽवच्छेदकत्वेन जिज्ञासितनिरूपितत्वसम्बन्धप्रतियोगित्वन्यूनवृत्तिधर्मावच्छिन्ना, बोधावूह्यौ, प्रत्युत्तरे अपि ऊह्ये इति संक्षेपः ।

विनोदिनी ।

प्रयुज्यत इति । एवं चात्र पुरोवर्त्तित्वधर्ममपेक्ष्य न्यूनवृत्तियों ब्राह्मणत्वादिधर्मस्तदवच्छिन्ने शक्तिरिति ।

---

किमिन्दुः किं पद्ममित्यादौ चाव्ययकिमो वाशब्दस्येव वितर्कोऽर्थः, वितर्कश्च प्रयोक्तुः संभावनाऽऽत्मकं ज्ञानं; तदर्थस्य च विशेष्यतासम्बन्धेन प्रथमाऽन्तपदोपस्थाप्ये विशेष्ये; प्रकारितासम्बन्धेन च तत्र विशेषणस्य चन्द्रादेरन्वयः, नामार्थेनाव्ययार्थस्य भेदान्वयेऽविरोधात् ।

यत्र विशेषणवाचकपदमपि प्रथमाऽन्तं तत्राभेदसम्बन्धावच्छिन्नप्रकारिता संसर्गः, यत्र च प्रकृत्यर्थविशेष्यतया स्वार्थबोधकविभक्त्यन्तं पदं; तत्र किंपदासत्त्वे तादृशविभक्त्यन्तसमुदायार्थस्य विशेष्ये यादृशसम्बन्धेनान्वयस्तादृशसंसर्गावच्छिन्नप्रकारितैव तादृशार्थस्य किंपदार्थे संसर्गोऽतः किमिन्दुरित्यादावभेदेन चन्द्रादिप्रकारिका; धनमिदं किं चैत्रस्येत्यादावाश्रयतासम्बन्धेन चैत्रस्वत्वादिप्रकारिका सम्भावना नियमतः प्रतीयते । किमिन्दुरित्यादौ सम्भावनाबोधोत्तरं तत्प्रयोजकाह्लादकत्वादिर्सोधर्म्यप्रतीतिस्त्वर्थादिति ।

कुत्साऽर्थकमपि क्वचित् किंपदं, यथा किंगौरित्यादौ ।

---

मञ्जूषा ।

तत्र = संभावनायां । किमिन्दुरिति । किमिन्दुः किं पद्ममिति मूलोक्तपद्ये त्वेकस्यामनेकस्यां वेन्द्वादिसंभावनायां मुखस्य विशेष्यता, चरमं च किंपदं वाक्यालंकारे, अथ वा तत्रेन्द्वादिप्रकारिकेत्र मुखविशेष्यिका संभावना मुख्यविशेष्यतया बोधे भासते, एनां च निश्चयान्तसंभावनां व्यपदिशन्ति, दोषविशेषजन्यतया विशेष्यवृत्त्यसाधारणधर्मभानम् । तत्प्रयोजकेति ।

पूर्णचन्द्रवदना रजनी किं वा विशालनयना हरिणी किम् ।
मन्दमत्तगमना करिणी किं पश्य गच्छति सखे ! तरुणी किमित्यादावुपात्तसाधर्म्यप्रतीतिः शाब्देऽपि बोध्या ।

माधवी ।

किमिन्दुरिति । समुदायश्लोकस्तु—

किमिन्दुः किं पद्मं किमु मुकुरबिम्बं किमु मुखं-
किमब्जे किं मीनौ किमु मदनबाणौ किमु दृशौ ।
नगौ वा गुच्छौ वा कनककलशौ वा किमु कुचौ
तडिद्वा तारा वा कनकलतिका वा किमबला इति ।

संभावना =संशयः । विशेष्यतासम्बन्धेनेति । किमिन्दुरित्यत्रेदमिति विशेष्यवाचकपदमध्याहार्य्यं तथा चाभेदसंसर्गावच्छिन्नप्रकारतासंसर्गकेन्दुविशेष्यकसंशयस्य विशेष्यतासम्बन्धेनेदंत्वावच्छिन्नविशेष्यताकबोधः । नामार्थयोर्भेदान्वयस्य विरुद्धत्वात् कथमेतदित्याह—नामार्थ इति । अव्ययार्थस्येति । निपातत्वमेव बीजम्, अव्ययकिमो निपातादत्यत्र बाधात्, तथा च निपातातिरिक्तनामार्थयोर्भेदेनान्वयो व्युत्पत्तिविरोधमादधातीति भावः ।

अथ स्वावच्छिन्नप्रतिबन्ध्यतानिरूपितप्रतिबन्धकताऽवच्छेदकत्वस्वसामानाधिकरण्योभयसम्बन्धेन प्रकारताविशिष्टप्रकारतावज्ज्ञानमेव संशयपदार्थः, अभेदसंसर्गावच्छिन्नप्रकारतासंसर्गेणेन्दुविशिष्टस्य तादृशसंशयस्य विशेष्यतासम्बन्धेनेदंपदार्थे विशेष्येऽन्वयेऽपि नेदंत्वावच्छिन्नविशेष्यताकाभेदसम्बन्धेनेन्दुप्रकारकसंशयस्य लाभः; अन्यत्रेन्दुप्रकारकसंशयात्मकेन्दुपदार्थविशेष्यकज्ञानमादायापि तत्र सम्भवादिति चेद् ? न—ज्ञानमेवात्र किंपदार्थः, तत्रेदंत्वावच्छिन्नविशेष्यतानिरूपितेन्दुभेदत्वावच्छिन्नप्रकारताविशिष्टाभेदसंसर्गावच्छिन्नप्रकारतासंसर्गेणेन्दोरन्वयेनानुपपत्त्यभावात्, तादृशसंसर्गस्त्वाकाङ्क्षालभ्य एव, एतल्लाभायैव संभावनाऽऽत्मकं ज्ञानमित्युक्तं, प्रकारतावैशिष्ट्यं च

निरुक्तोभयसम्बन्धेनेति । आलंकारिकमते व्यञ्जनातः शाब्दबोधरूपं; नैयायिकमते मानसमित्यन्यदेतद्, एवमन्योन्याभावप्रतियोगिताऽनवच्छेदकपर्य्याप्तिकधर्म्मावच्छिन्ने किंपदस्य शक्तिर्बोध्या, तेन त्वदन्यः कोन ददाति "दम्पत्योरिह को न को न तमसि क्रीडाविमिश्रो रस" इत्यादौ; त्वदन्यः सर्वो दानकर्त्ता, सर्व्वो रसो भवतीत्यादिबोधस्य त्वदन्यः कोददाति; कः संनद्धे विरहविधुरां त्वय्युपेक्षेत जायां न स्यादन्योऽप्यहमिवेत्यादौ; त्वदन्यः सर्वो न ददाति, पराधीनवृत्तिशून्यः सर्वो विरहविधुरां जायां नोपेक्षत इत्यादिबोधस्य च नानुपपत्तिः ।

त्वदन्यः को न ददातीत्यादौ त्वदन्यः सर्व्वो ददातीत्येतादृशबोधस्यानुभवसिद्धत्वेऽपि तादृशवाक्यघटकाभावान्वयेन त्वदन्यः सर्व्वो दातृत्वाभाववान् इत्येव बोधो भवितुमर्हति कथं तादृशान्वयबोध इति ।

अत्रालिकुलकोकिलललिते नैष्यति किं सुरभिसमयेऽसावित्यादौ काकुसहृशतादृशवाक्येनासंलक्ष्यक्रमव्यङ्ग्ये यथा सुरभिसमयेऽसावेष्यतीत्येतादृशार्थबोधस्तथा तादृशस्थलेऽपि तादृशान्वयबोध इति समाधानमालङ्कारिकाणामेव शोभते न तु नैयायिकानां तैर्व्यञ्जनावृत्तेरनभ्युपगमात् । न च तादृशस्थलेऽभावाभावे नञो लक्षणया त्वदन्यः सर्वो दानकर्तृत्वाभावाभाववान् इत्यन्वयबोधाद् दानकर्तृत्वाभावाभावरूपस्य दानकर्तृत्वस्य न बोधानुपपत्तिरिति वाच्यम् । अभावाभावस्याभावत्वावच्छिन्नप्रतियोगिताकाभावरूपत्वेऽप्रसिद्धेः, अभावप्रतियोगिकाभावत्वे त्वदन्यसर्व्वस्मिन् दातृत्वासत्त्वेऽप्युभयाभावादिकमादाय तादृशप्रयोगानुपपत्तेर्दुर्वारत्वात् ।

यत्तु, त्वदन्यसर्वत्वावच्छेदेन दानकर्तृत्वमेव प्रत्याय्यते, नञ्पदं तु तादृशावच्छेदकावच्छेदेनान्वये तात्पर्यग्राहकमिति, तन्मन्दं, तथा सति तादृशवाक्यघटकयुष्मत्पदार्थेऽनुभवसिद्धस्य दानकर्तृत्वाभावबोधस्यापलापापत्तेः, तत्र दानकर्तृत्वसत्त्वेऽपि त्वदन्यसर्व्वत्वावच्छेदेन दानकर्तृत्वस्याव्याघातात्, एतेन त्वदन्यः सर्व्वो दानकर्तृत्वाभावाभाववानित्येवान्वयबोधः, तत्र नञर्थाभाव आख्यातान्तार्थस्य दानकर्तृत्वस्यान्वयः, तादृशान्वयलभ्यस्य कर्तृत्वाभावस्य द्विधाऽन्वयोपगमादिति निरस्तमिति केनचिदुक्तं, तदत्यन्तमसत् तादृशयुष्मत्पदार्थे शब्दतस्तावद्दानकर्तृत्वाभावबोधासम्भवेऽपि त्वदन्यपदवैयर्थ्यशङ्कामूलकार्थतस्तल्लाभसंभवात्।

परे तु त्वदन्यः को न ददातीत्यस्य त्वदन्यः सर्व एव ददातीति शब्दजन्यबोधसमानाकारकबोधजनकतया नञ्पदमत्रान्यव्यवच्छेदार्थमेवेति त्वदन्यसर्वान्यदानकर्तृत्वाभावबोधस्य न शब्दतोऽनुपपत्तिः, एवं-

सर्वो रसो भवतीत्यत्र क्रियासंयुक्तैवकारस्यान्ययोगव्यवच्छेदवत् को रसो न भवतीत्यादावपि सर्वरसत्वावच्छेदेनोत्पन्नत्वविरोध्यनुत्पन्नत्वाभावाभावो नञा प्रत्याय्यत इति प्राहुः।

एवं त्वदन्यः को ददातीत्यादौ त्वदन्यः सर्वो दानकर्तृत्वाभाववानिति बोधस्तु; आलंकारिकाणां काकुसहकृततादृशवाक्यव्यञ्जनातः, अस्माकं त्वाख्यातार्थकृतेर्लक्ष्यार्थाभावस्य च परस्परमन्वयेन, तादृशवाक्यघटकयुष्मत्पदार्थे दानकर्तृत्वबोधस्त्वार्थः, त्वदन्यः को राजेत्यादौ विपरीतलक्षणया त्वदन्यः सर्वो राजभिन्न इत्याकारकबोधस्तादृशतादृशस्थले तादृशतादृशपदस्याभावादौ लक्षणाया अनादितात्पर्य्यमूलकतया न कविकाव्यादौ तत्प्रयोगे निग्रह इति मदेकपरिशीलितपद्धतिः।

विनोदिनी।

संभावनेति। यद्यप्युत्कटकोटिकज्ञानस्यैव शास्त्रलोकयोः सम्भावनात्वेन व्यवहारोऽत एवोत्प्रेक्षासंदेहयोः पार्थक्यमपि सुवचं; तथाऽप्यत्र विरुद्धकोटिद्वयावगाहित्वमात्रं विवक्षित्वा संशयपरताऽभ्युपगतेति बोध्यम्।

अर्थादितीति।

तादृशसम्भावनाबोधोत्तरकालिकी मानसी प्रतीतिः, न तु शाब्दीति तात्पर्य्यम्।

अत्रेदमपि विवेचनीयम्—यथाऽनुभवानुरोधतः किंशब्दस्य नानाशक्तयो दर्शितास्तथाऽपराऽपि स्वीकार्य्या, तथा हि—

प्रकृतिसुभगगात्रं प्रीतिपात्रं रमाया-
दिशतु किमपि धाम श्यामलं मञ्जुलं वः।
अरुणकमललीलां यस्य पादौ दधाते
प्रणतहरजटालीगाङ्गरिङ्गत्तरङ्गैः॥

इत्यादौ किमा शब्दजन्यप्रतिपत्तिविषयतारहितमित्यर्थः प्रत्याय्यते, एवं च शब्दाप्रतिपाद्यधर्मावच्छिन्नेऽपि किमः शक्तिरस्ति।

एवम्—

अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः।
इदं को जानीते निजकरपुटीकोटरगतं—
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः॥

इत्यादौ स्वार्थान्वयिताऽवच्छेदकाभाववत्यपि प्रकरणवशात्तस्य शा-

क्विर्वाच्या, तथा च प्रकृते तावदिदंविषयकज्ञानाश्रयत्वाभाववानिति बोधः, न कोऽपि जानीत इत्याकाराभिलप्यः।

कुत्साऽर्थकमपीति। कुत्साशक्यताऽवच्छेदककमपीत्याशयः, अन्यथा कुत्साया गवादिना सममभेदान्वयायोग्यतया कर्मधारयानुपपत्तिः स्यात्,

किं गौरिति। यदि समस्तोऽयं प्रयोगस्तदा टजप्रवृत्तिस्तु टज्विधायकशास्त्रीयोद्देश्यताऽवच्छेदकगर्भे निन्दितार्थकंकिंशब्दानुत्तरत्वनिवेशनिबन्धनाऽवगन्तव्येति।

---

तत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयताऽवच्छेदकत्वोपलक्षितधर्मावच्छिन्ने यत्पदस्य शक्तिः; अत एव यत्पदेनार्थप्रत्यायने नियमतस्तत्पदापेक्षा, तत्पदसमभिव्याहारज्ञानं विनोक्तानुगमकधर्माग्रहेण शक्तिपरिच्छेदस्यैवासम्भवात्तच्छब्दजन्यप्रतिपत्तिपूर्वमपि तत्प्रतिपाद्यतया वक्तुरभिसन्धिः प्रकरणादिना सुग्रह इति न तच्छब्दजन्यप्रातिपत्तेर्यत्पदशक्तिग्रहेऽपेक्षा, इयं च व्युत्पत्तिः प्रक्रम्यमाणपरामर्शकयच्छब्दस्य। चैत्रः समागतो यस्तत्रावलोकित इत्यादौ चैत्रादिपदेनाप्युपस्थापितस्य यच्छब्देन बोधनाद्, अत एव साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताऽधिक इत्यादौ तत्पदासत्त्वेऽपि न दोषः, पूर्वप्रक्रान्तस्यैव कृतशब्दोपस्थापितव्यापारस्याभेदेन मीलनान्वयितया यच्छब्देन बोधनात्।

एवं यं सर्वशैला इत्यादावपि, तदनुरोधेन पूर्वप्रयुक्तपदोपस्थापितेऽपि तस्य शक्त्यन्तरं स्वीकरणीयम्, अतिप्रसङ्गश्च स्वप्रयोजकबुद्धिस्थत्वमन्तर्भाव्य वारणीयः।

मञ्जूषा

शक्तिपरिच्छेदः=शक्तिग्रहः। अभिसन्धिः=तात्पर्यम्। तच्छब्दजेति। तदपेक्षाया उपगमे यत्पदजन्यप्रतीतेः तत्पदशक्तिग्रहेऽपेक्षायामन्योन्याश्रय इति भावः। अत एव=प्रक्रम्यमाणपरामर्शकयच्छब्देनार्थप्रत्यायन एव तच्छब्दापेक्षणादेव। अधिक इति।

उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनरिति–

पश्चार्धः। तत्पदासत्त्वेऽपीति। प्रक्रान्तपरामर्शीययच्छब्दस्थल इत्यादिः। अभेदेनेति। साधुकरणाभिन्नं मीलनमिति बोधात्। यमिति।

यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे।
भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम्॥

पूर्वेति। पूर्वप्रयुक्तपदोपस्थाप्यत्वेन या प्रयोजकवक्तृबुद्धिः तद्विषयताऽवच्छेदकत्वोपलक्षितधर्मावच्छिन्नाऽपीत्यर्थः, आदौ तदर्थज्ञानं ततस्तदर्थप्रत्यायनेच्छा ततस्तदर्थबोधकपदप्रयोग इति बुद्धेः स्वप्रयोजकत्वम्।

माधवी।

शक्तिपरिच्छेदः=शक्तिज्ञानं, वक्तुरभिसन्धिः=वक्तुर्ज्ञानं, तत्पदजन्यप्रतीतिविषयतावद्घटो वा मदिष्टसाधनमित्याकारकप्रकल्प्यमानपरामर्शकमिति, स्वोत्तरप्रयोक्तृपदोपस्थापितवाचीत्यर्थः—यथा यो यो धूमवान् स वह्निमान् इत्यादौ, तत्र तत्पदशक्तिस्तु स्वप्रयोजकबुद्धिविषयताऽवच्छेदकत्वोपलक्षितधर्मावच्छिन्ने बोध्या। साधु चन्द्रमसीति। श्लोकशेषार्द्धस्तु

उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनरिति।

अस्यायमर्थः। अभिरामताऽधिके स्वापेक्षयाऽतिसुन्दरे चन्द्रमसि अर्थादुदिते सति पुष्करैः पद्मैः साधु कृतं यन्मीलितं; जयिनि कामिनीमुखे सति उद्यता चन्द्रेण पुनः साहसमनुष्ठितमिति। पूर्वप्रयुक्तपदोपस्थापित इति। स्वोच्चारकपुरुषोच्चरितस्वपूर्वपदोपस्थाप्यताऽवच्छेदकधर्मावच्छिन्ने। तस्य=यत्पदस्य।

ननु हिमालयस्येव दिगादेरपि पूर्वप्रयुक्तपदोपस्थापिततया तत्रापि तादृशयत्पदस्य शक्यत्वापत्तिरत आह—अतिप्रसङ्गश्चेति। प्रयोजकबुद्धिस्थत्वमिति। तथा च स्वप्रयोजकबुद्धिविषयताऽवच्छेदकतादृशपदोपस्थाप्यताऽवच्छेदकधर्मावच्छिन्ने शक्तिकल्पनान्न दिगादौ शक्यत्वप्रसङ्ग इति भावः।

ननु स्वप्रयोजकबुद्धिविषयताऽवच्छेदकावच्छिन्न एव तादृशयत्पदस्य शक्तिरुच्यतां किं तादृशपदोपस्थाप्यतावच्छेदकत्वनिवेशेनेति वाच्यम्। हिमालयादेः पूर्वपूर्वपदानुपस्थितत्वे हिमालयादिबुद्ध्या प्रयुक्तेनापि यत्पदेन हिमालयादिबोधस्यानुभवसिद्धतया तन्निवेशस्यावश्यकत्वात्।

विनोदिनी ।

यच्छब्दशक्तिं विविञ्चन् पूर्वं प्रक्रम्यमाणपरामर्शियच्छब्दस्य तां विविनक्ति—तत्पदेति ।

ननु तत्पदघटितवाक्यस्य यत्पदघटिततयाऽगृहीतयत्पदशक्तिकेन तत्पदप्रतीतिघटितानुगमकधर्म एव न ज्ञायेतेति शङ्कामपनुदन्नाह—प्रकरणेति ।

प्रक्रान्तपरामर्शियच्छब्दस्थलमाह—चैत्र इति । बोधनादिति । तथा च प्रक्रम्यमाणपरामर्शियच्छब्दो नियमेन तत्पदापेक्षी, न प्रक्रान्तपरामर्शी यच्छब्द इति फलितम् ।

अतिप्रसङ्गः=पूर्वप्रयुक्तपदानां बहुत्वेऽनभिमतग्रहणरूपः । अन्तर्भाव्येति । तथा च पूर्वप्रयुक्तपदोपस्थाप्यताऽवच्छेदकेन स्वोच्चारणानुकूलबुद्धिस्थेन धर्मेणावच्छिन्ने प्रक्रान्तपरामर्शिनो यत्पदस्य शक्तिरिति पर्यवस्यति ।

---

एवं यत्पदोपस्थाप्ये तत्पदशक्तिर्बोध्या, अत एव प्रक्रम्यमाणपरामर्शकतच्छब्देनापि नियमतो यत्पदमपेक्ष्यते तमानय य इहास्तीत्यादाविव तमानय घट इहास्तीत्यादितो घटानयनादिप्रतीतेरनुभवविरुद्धत्वात् । प्रक्रान्तपरामर्शकस्य च न तदपेक्षानियमः, तदन्वये शुद्धिमतीत्यादौ वैवस्वतादिपदोपस्थाप्यस्यापि तच्छब्देन परामर्शात्, तदनुरोधेन च तच्छब्दस्यापि पूर्ववत् पूर्वप्रयुक्तपदोपस्थापिते शक्त्यन्तरमङ्गीकार्यम्, उपस्थितिश्च स्वाविशेष्यकशक्तिज्ञानाधीना ग्राह्या, अतः पशुरस्ति तं पश्येत्यादौ पश्वादिपदोपस्थापितलोमादीनां तदादिशब्देन न परामर्शः।

प्रसिद्धार्थकमपि तत्पदम्, यथा—कला च सा कान्तिमतीत्यादौ ॥

---

मञ्जूषा ।

तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ।
दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविवेति ॥

वैवस्वतादीति । यत्पदानुपस्थाप्यस्येत्यादिः । पूर्वेति । पूर्ववत् । उपस्थितिश्चेति । यत्पदशक्तावपीदं बोध्यम् । कला चेति ।

द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदीति ॥

माधवी ।

एवं यत्पदोपस्थाप्य इति। यत्पदोपस्थाप्यताऽवच्छेदकधर्मावच्छिन्ने।

न च यत्पदोपस्थाप्यताऽवच्छेदकधर्मावच्छिन्ने शक्तिस्वीकारे यत्पदशक्तिग्रहाधीनपदपदार्थोपस्थितिस्ततो यत्पदोपस्थाप्यताऽवच्छेदकत्वरूपानुगतधर्म्मग्रहस्ततस्तादृशानुगतधर्मोपलक्षितधर्म्मावच्छिन्ने तत्पदशक्तिग्रहः, तत्स्थलीययत्पदशक्तिग्रहश्च स्वपूर्वपदोपस्थाप्यताऽवच्छेदकधर्म्मावच्छिन्न इति यत्पदशक्तिग्रहस्तादृशानुगतधर्म्मग्रहाधीनस्तादृशानुगतधर्म्मश्च तत्पदशक्तिग्रहाधीन इत्यन्योन्याश्रयात् पदप्रतिपाद्यताऽवच्छेदकधर्म्मावच्छिन्ने शक्तिस्वीकारेऽपि यत्पदशक्तिज्ञानाधीना प्रतिपत्तिस्ततोऽनुगतधर्मग्रह इति पूर्वोक्तरीत्या तथैवान्योन्याश्रय इति वाच्यम् ?

यत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयताऽवच्छेदकत्वोपलक्षितधर्म्मावच्छिन्ने तत्शक्तेः; स्वपूर्वपदप्रतिपाद्यतया बुद्धिविषयताऽवच्छेदकधर्म्मावच्छिन्ने यत्पदशक्तेश्च कल्पनाद्, यत्पदादिप्रतिपत्तेरनपेक्षितत्वेऽपि प्रकरणादिना तादृशानुगतधर्मग्रहसम्भवाद् नान्योन्याश्रयशङ्काऽवकाशः।

एवं च यत्पदोपस्थाप्य इति वस्तुकथनं न त्वनुगतधर्म्मप्रदर्शनमिति ध्येयम्।

पूर्वप्रयुक्तपदोपस्थापित इति। स्वोच्चारकपुरुषप्रयुक्तपूर्वपदजन्योपस्थितिविषयताऽवच्छेदकत्वोपलक्षितधर्मावच्छिन्नेऽपि शक्तिरित्यर्थः, तादृशविषयताऽवच्छेदकधर्मे स्वप्रयोजकबुद्धिविषयताऽच्छेदकत्वं निवेशनीयम्; अतस्तदन्वये शुद्धिमतीत्यादौ वैवस्वताद्यतिरिक्तस्य पूर्वपदोपस्थाप्यत्वेऽपि न तादृशतत्पदाद्बोधः।

न च तत्पदस्य तादृशशक्तिस्वीकारे पूर्वं स्वप्रयोजकबुद्धिविषयताऽवच्छेदकत्वोपलक्षितधर्मावच्छिन्ने शक्तिस्वीकारो व्यर्थः, न च तदङ्गीकारे तमानयेत्यादौ तत्पदेन घटादिबोधानुपपत्तिरिति वाच्यम् ? इष्टत्वात्, स्वपूर्वपदोपस्थापितस्य तत्पदेन क्व चिदप्यबोधनाद्, अत-

एव ग्रन्थकृता पूर्वघटस्य प्रकान्तत्वलाभाय; इहास्ति तमानयेत्युक्तमिति पूर्वोक्तायामेव शक्यतायामवच्छेदके स्वप्रयोजकबुद्धिविषयताऽवच्छेदकधर्मेऽतिप्रसङ्गभङ्गाय, प्रसङ्गादिदानीं स्वपूर्वपदोपस्थाप्यताऽवच्छेदकत्वमात्रनिवेशे तात्पर्य्याद् न तु स्वातन्त्र्येण शक्तिकथनमिति ध्येयम् ।

प्रसिद्धार्थकमपीति । प्रसिद्धत्वञ्चानेकज्ञानविषयत्वम् । कला च सेति । समुदायश्लोकस्तु--

द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदीति॥

पशुपतिप्रार्थनया तपःपरायणां पार्वतीं प्रति कपटपरिच्छदस्य पशुपतेः स्वापकर्षत्वबोधिकोक्तिरियम्, तस्या अयमर्थः-कपालिनः शिवस्य समागमप्रार्थनया पूर्वं कलावतश्चन्द्रस्यैत्रैकस्य सा प्रसिद्धा कलैव शोचनीयतां गता; त्वया कपालिनः समागमप्रार्थनया सम्प्रति द्वयं शोचनीयं-शोचनीयतां गतमिति, कपालिन इत्यनेन कलायाः कान्तिमत्त्वस्य भगवत्या नेत्रकौमुदीत्वस्य कथनेन शोकबीजं प्रदर्शितम् ।

विनोदिनी ।

प्रसङ्गागतां प्रक्रम्यमाणपरामर्शितच्छब्दशक्तिमाह-एवमिति । यत्पदोपस्थाप्य इति । यत्पदजन्योपस्थितिविषयत्वप्रकारकवक्तृबुद्धिविषयताऽवच्छेदकावच्छिन्न इत्यर्थः ।

प्रक्रान्तपरामर्शितच्छब्दस्य पूर्वतो वैलक्षण्यमाह-प्रक्रान्तेति । तदपेक्षानियमः=यत्तदापेक्षानिययः । पूर्ववदिति । एवं च पूर्वप्रयुक्तपदोच्चारणानुकूलबुद्धिस्थत्वे सति तादृशपदजन्योपस्थितिविषयताऽवच्छेदको यो धर्मस्तदवच्छिन्ने प्रक्रान्तपरामर्शितच्छब्दस्य शक्तिरिति भावः ।

नन्वेवं सति "दर्शते राजमातङ्गा" इत्यादौ लक्षणाऽऽत्मकवृत्तिज्ञानाधीनोपस्थितीयमुख्यविशेष्यताया राजसंबन्धिनि सत्त्वेन तच्छब्दाद्राज्ञ उपस्थितेरनुपपत्तिरिति चेद्? न-मातङ्गसंबन्धी राजा राजपदशक्य इत्येवंरूपलक्षणाऽधीनज्ञानीयविशेष्यतां राजनि संपाद्य निर्वाहाद् । मूले शक्तिपदसत्त्वे तु विवादाभावः ।

प्रसिद्धार्थकमपीति । प्रसिद्धिः=बहुलोकसमवेतज्ञानविषयता ।

उपलक्षणं चैतद् अनुभूतार्थकताऽपि तच्छब्दस्यास्ति, तेन "तद्रूपं सञ्चक्रम" इत्यादौ नानुपपत्तिः ।

---

## इदमेतदोः प्रत्यक्षबुद्धिविषये शक्तिः ।

---

माधवी ।

प्रत्यक्षबुद्धिविषये=लौकिकप्रत्यक्षविषयताविशिष्टे ।

ननु लौकिकप्रत्यक्षाविषयगगनादितात्पर्य्येणापीदं शब्दवदित्यादिव्यवहारात् तत्र का गतिः? तादृशव्यवहारानङ्गीकार एव गतिः, अङ्गीकारे तु गगनादितत्तद्व्यक्तित्वावच्छिन्नेऽपि नानाशक्तिकल्पनैवेति, तत्तद्व्यक्तित्वञ्च तत्तादात्म्यविशिष्टघटत्वादिकमेव न त्वखण्डोपाधिविशेषः, अतिरिक्तधर्मकल्पनामपेक्ष्य क्लृप्ते व्यवहारविषयत्वकल्पनस्य न्याय्यत्वाद्, न च तादात्म्यनिष्ठं तत्त्वं तद्व्यक्तित्वमन्यस्य दुर्वचत्वात् तथा च तस्याखण्डरूपधर्मताया आवश्यकतया घटनिष्ठतादृधर्मस्वीकार एवोचित इति वाच्यम्?

अखण्डतादृशधर्मकल्पनेऽपीदमादिपदस्य च त्वित्तादात्म्यस्यापि बोधकतया तादात्म्यनिष्ठतादृशकल्पनस्य भवतोऽप्यावश्यकत्वाद्, घटादितात्पर्य्यकेदंपदस्य क्लृप्ततादृशधर्मघटितघटत्वादिबोधकतयैवोपपत्तेर्घटनिष्ठतादृशधर्मकल्पनाया अन्याय्यत्वात् ।

न च तत्तद्घटादितादात्म्यस्य तत्तद्घटादिस्वरूपतया नास्माकमतिरिक्तकल्पनेति वाच्यम्? तादात्म्यस्य घटाद्यतिरिक्तत्वात् ।

न चातिरिक्तं तादात्म्यं कल्प्यते किं वा तादृशधर्म इत्यत्र विनिगमकाभाव इति वाच्यम्?

तत्तद्घटादितादात्म्यस्य तत्तद्घटादिस्वरूपाद्यनेकत्वेन क्लृप्तपदार्थान्तर्गतत्वात् ।

न च तादृशरूपादेर्घटाद्यप्रतियोगिकतया न घटसम्बन्धतेति वाच्यम्? तादात्म्यत्वेन सम्बन्धतास्वीकारेण तत्प्रतियोगिकत्वोपगमाद्, अन्यथा घटादिस्वरूपतोपगमेऽप्यनिस्तारात्, तादात्म्यस्य घटादिस्वरूपतामते तु घटनिष्ठतद्व्यक्तित्वमखण्डमेवेति दिक् ।

विनोदिनी ।

इदमेतदोस्तुल्यार्थकतया यौगपद्येन शक्तिं तयोराह-इदमेतदोरिति । चक्षुःसमवेतप्रत्यक्षज्ञानीयलौकिकविषयताशालिनीति भावः ।

---

## अदसः परोक्षबुद्धिविषये शक्तिः ।

---

माधवी ।

परोक्षेति । परोक्षत्वं प्रत्यक्षभिन्नज्ञानत्वम् ।

विनोदिनी ।

परोक्षेति । अत्र परोक्षपदं संनिकृष्टवस्तुनिष्ठविषयताभिन्नविषयताशालिवस्तुपरं तेना "लौ मरुच्चुम्बितचारुकेसर" इत्यादौ विप्रकृष्टस्य; "इहामुत्र फलभोगविराग" इत्यादौ परोक्षस्य च विषयस्य बोध उपपद्यते ।

---

स्वशब्दस्य स्वसमभिव्याहृतपदोपस्थाप्ये शक्तिः, समभिव्याहारश्चात्रैकवाक्यघटकत्वम् ।

अथैवं चैत्रः स्वपुत्रं पश्यतीत्यादाविव स्वं चैत्रपुत्रः पश्यति; चैत्रभ्राता स्वपुत्रं पश्यतीत्यादौ कथं न स्वशब्देन चैत्रः प्रत्याय्यते ? मुख्यविशेष्यवाचकताव्युत्पत्त्यभ्युपगमे स्वपुत्रदर्शिनं चैत्रं मैत्रः पश्यतीत्यादौ चैत्रपुत्रबोधानुपपत्तिः ।

न च तत्रावान्तरवाक्यार्थबोधे चैत्रस्य मुख्यविशेष्यतया नेयमनुपपत्तिरिति वाच्यम् ? अवान्तरवाक्यार्थधियमन्तरेणाहत्यैव विशेष्ये विशेषणमित्यादिरीत्या महावाक्यार्थबोधे यत्र तात्पर्यं तत्र तदनुपपत्तेर्दुर्वारत्वात् ।

न च स्वार्थस्य साक्षात्परम्परया वा यदर्थे विशेषणत्वं तादृशार्थवाचकताव्युत्पत्तेर्नायं दोष इति वाच्यम् ? एवमपि स्वपुत्रश्चैत्रेण दृश्यत इत्यादौ चैत्रपुत्रबोधानुपपत्तेः ।

समभिव्याहृतक्रियाऽन्वयिवाचकत्वमपि न विचारंसहते; परम्परया क्रियाऽन्वयित्वस्य चैत्रभ्राता स्वं पश्यतीत्यादौ चैत्रादिसाधारणत्वात्, साक्षात्क्रियाऽन्वयित्वस्य चैत्रः स्वं पश्यतीत्यादावप्यभावात्, तत्र विभक्त्यर्थद्वारैव नामार्थधात्वर्थयोर्भेदान्वयस्य व्युत्पन्नत्वात् ।

क्रियाऽन्वयिप्रत्ययार्थे साक्षादन्वयित्वाविवक्षणान्न दोष इति चेद्? एवमपि स्वव्यापकवन्हिसमानाधिकरणधूमवान्पर्वत इत्यादौ स्वशब्देन धूमादिपरामर्शानुपपत्तेर्वारणमशक्यमेव, एवं चैत्रेणावलोकितं स्वपुत्रं मैत्रः पश्यतीत्यादौ चैत्रपुत्रबोधापत्तिवारणमपि,

न च स्वपदार्थो यदर्थघटितविशेषणस्य विशेष्यताऽवच्छेदककोटौ यदर्थस्य विशेषणकोटौ वा निविशते स एव पदार्थः स्वशब्दवाच्यो यथा चैत्रेण स्वपुत्रो दृश्यते चैत्रः स्वपुत्रं पश्यतीत्यादौ, चैत्रपुत्रः स्वं पश्यतीत्यादौ चैत्रस्य भ्राता स्वपुत्रं पश्यतीत्यादौ च स्वपदार्थश्चैत्रस्य विशेषणकोटौ चैत्रघटितार्थस्य धर्मिताऽवच्छेदककोटौ वा न निविशत इति नातिप्रसङ्गः, चैत्रावलोकितं स्वपुत्रं मैत्रः पश्यतीत्यादौ चैत्रपदस्य चैत्रकर्तृके लक्षणया चैत्रः पदार्थैकदेशो न तु पदार्थ- इति स्वशब्दान्न तत्प्रतीतिः, चैत्रेणावलोकितमित्यादौ तु तात्पर्यसत्त्व इष्यत एव ततस्तत्प्रतीतिः, स्वपुत्रदर्शिचैत्रधनमित्यादौ चैत्रपुत्रदर्शिचैत्रासम्बन्धित्वावच्छिन्ने चैत्रान्तस्य; वाक्ये लक्षणाविरहे तु पूर्वभागं परित्यज्य तादृशलक्ष्यार्थपरस्य केवलचैत्रादिपदस्यैव वा तत्र लक्षणा तत एव चैत्रपुत्रादिप्रतीत्युपपत्तिरिति वाच्यम्?

एवं सति चैत्रस्य भ्राता स्वपुत्रो दृश्यत इत्यादौ स्वपदेन चैत्रप्रतीत्यापत्तेर्दुर्वारत्वात्।

मञ्जूषा ।

चैत्रेति । न चेष्टापत्तिः, तात्पर्यसत्त्वे तथाऽनुभवाद् । अवान्तरेति । स्वपुत्रकर्मकदर्शनाश्रयश्चैत्र इत्याकारकेत्यर्थः, स्वार्थस्य=स्वपदार्थस्य, साक्षादिति । स्वाधिकरणवृत्तिसाध्याभावको धूम इत्यादौ । वारणमपीति । तत्र समभिव्याहृतावलोकनक्रियाऽन्वयितृतीयाऽर्थकृतौ चैत्रस्य साक्षादन्वयादिति भावः । आद्ये चैत्रेणेति, द्वितीये चैत्रः स्वपुत्रमिति, एवं स्वव्यापकवन्हिसमानाधिकरणधूमवानित्यत्रापि धूमपदार्थस्य विशेषणकोटौ स्वपदार्थो निविष्ट इति धूमः स्वपदवाच्यः ।

ननु स्वपुत्रदर्शिचैत्रधनमित्यादौ चैत्रसम्बन्धिन एव पदार्थतया चैत्रस्यापदार्थत्वात् स्वशब्दशक्यत्वानुपपत्तिरित्यत आह-स्वपुत्रदर्शीति । चैत्रस्येति । चैत्रसम्बन्धवद्भ्रातृकर्तृकदर्शनविषयः स्वपुत्र इति बोधः, तत्र चैत्रपदार्थघटितविषयत्वरूपविशेषणविशेष्यताऽवच्छेदककोटौ स्वपदार्थनिवेशादिति भावः

माधवी ।

स्वं चैत्रपुत्रः पश्यति चैत्रभ्राता स्वपुत्रं पश्यतीति । स्वपदस्य समस्तासमस्तभेदेनोदाहरणम् ।

[ *ननु समभिव्याहृतपदार्थान्वयिताऽवच्छेदकधर्मावच्छिन्ने शक्तिकल्पने पूर्वस्थलद्वये न चैत्रबोधापत्तिरित्यत आह--सुन्दरचैत्रस्येति । तथा च चैत्रत्वस्य स्वसमभिव्याहृतसुन्दरपदार्थानुयोगिताऽवच्छेदकतया तत्र स्वपदेन चैत्रबोधापत्तेर्दुर्वारत्वादिति, सुन्दरचैत्रभ्रातेत्युक्तौ तत्पुरुषस्थचैत्रपदस्य सुन्दरचैत्रसम्बन्धित्वावच्छिन्ने लाक्षणिकतया स्वसमभिव्याहृतपदार्थान्वयिताऽवच्छेदकत्वाभावात् सुन्दरचैत्रस्य भ्रातेत्यसमासेन निर्देशः । ] मुख्यविशेष्यवाचकतेति । स्वघटितवाक्यजन्यप्रतीतिमुख्यताऽवच्छेदकधर्मावच्छिन्नवाचकतेत्यर्थः । चैत्रबोधानुपपत्तेरिति । तादृशबोधकधर्मत्वांशे चैत्रस्य प्रकारतया मुख्यविशेष्यताविरहादिति भावः । आहत्यैव=तादृशवाक्यघटकपदजन्यपदार्थोपस्थितिघटितसामग्र्येत्यर्थः । तादृशार्थवाचकेति । तथा च स्वपदार्थघटितविशेषणविशेष्यताऽवच्छेदकधर्मावच्छिन्नशक्तिकत्वान्न पूर्वोक्तदोषाणामवकाश इति भावः । चैत्रपुत्रबोधानुपपत्तेरिति । चैत्रबोधानुपपत्त्या चैत्रपुत्रबोधानुपपत्तेरिति भावः । समभिव्याहृतक्रियाऽन्वयिताऽवच्छेदकधर्मावच्छिन्ने शक्तिकल्पनात् तादृशक्रियाऽन्वयिवाचकमिति भावः । स्वपुत्रदर्शिनं चैत्रमित्यादौ चैत्रस्य परम्परया दर्शनक्रियाऽन्वयित्वेन स्व-

* [ ] एतच्चिन्हान्तर्गतव्याख्या पुस्तकान्तरीयपाठभेदानुसारिणी ज्ञेया ।

पुत्रः चैत्रेण दृश्यत इत्यादावपि दर्शनक्रियाऽन्वयित्वेन चैत्रबोधानुपपत्तिः। धूमादिपरामर्शानुपपत्तीति। धूमादिबोधानुपपत्तिः। चैत्रबोधानुपपत्ति-वारणमप्यशक्यतिति पूर्वेणान्वयः। विशेष्यताऽवच्छेदककोटाविति। निविशत इति परेणान्वयः, तथा च स्वार्थान्वयिताऽवच्छेदकधर्मा-वच्छिन्नविशेष्यतानिरूपितविशेषणताऽवच्छेदककोटिप्रविष्टपदार्थताऽव-च्छेदकधर्मावच्छिन्ने शक्तिरिति भावः। यदर्थस्य विशेषणकोटाविति। तथा च स्वपदार्थघटितविशेषणविशेष्यताऽवच्छेदकधर्मावच्छिन्ने श-क्तिरिति भावः। चैत्रेण स्वपुत्रो दृश्यते चैत्रः स्वपुत्रं पश्यतीत्यादिस्थ-लद्वयसंग्रहार्थोभयशक्तिकल्पनम्, अत एवकारः समुच्चयार्थः।

पूर्वोक्तस्थलद्वये चैत्रबोधापत्तिं वारयति, चैत्रपुत्र इति। ननु चैत्रावलोकितं स्वपुत्रं मैत्रः पश्यतीत्यादौ स्वपदेन चैत्रबोधापत्तिः; तत्र स्वपदार्थस्य चैत्रपदार्थघटितविशेषणस्य विशेष्यताऽवच्छेदककोटि-प्रविष्टत्वाद्, अतः चैत्रस्य प्रकृते चैत्रपदार्थतां वारयति—चैत्रावलो-कितमित्यादिना। पदार्थैकदेश इति। न तु पदार्थः पदजन्योपस्थिति-मुख्यविशेष्यः। न च चैत्रस्य तत्स्थलीयचैत्रपदार्थत्वाभावेऽपि चैत्रपदा-र्थत्वं निराबाधमेवेति वाच्यम्? शक्यताऽवच्छेदककोटौ पदार्थताऽवच्छे-दक इत्यनेन स्वसमभिव्याहृतपदार्थताऽवच्छेदकत्वविवक्षणादिति ध्येयम्।

ननु स्वपुत्रदर्शिचैत्रधनमित्यादौ चैत्रस्य स्वसमभिव्याहृतपदार्थ-त्वाभावात् कथं स्वपदेन चैत्रप्रतीतिरत आह--स्वपुत्रदर्शीति। चैत्रप्र-तीत्यापतेर्दुर्वारत्वादिति। अत्र स्वपदार्थस्य चैत्रघटितविशेषणस्य विशेष्यताऽवच्छेदककोटिप्रविष्टत्वादिति भावः।

विनोदिनी।

स्वशब्दशक्तिं निरूपयितुमुपक्रमते-स्वशब्दस्येति। आहत्यैवेति। खले कपोतन्यायेनेति भावः।

चैत्रान्तस्येति। यैर्वाक्ये लक्षणा स्वीक्रियते तेषां मते।

---

मैवम्—साक्षात्परम्परया वा यः स्वार्थस्य विशेष्यो-यश्च समभिव्याहृतक्रियाकारकपदार्थस्तदुभयत्र स्वपदस्य शक्तिः, स्वव्यापकवन्हिसामानाधिकरण्यं धूम इत्या-दावस्तीति क्रियाऽध्याहारात् स्वपदस्य समभिव्याहृत-

क्रियाकारकत्वमक्षतमेवेति न स्वपदात्तत्प्रतीत्यनुपपत्तिः । एवं "कलशे निजहेतुदण्डजः किमु चक्रभ्रमकारितागुणः" इत्यादावप्यस्तीति क्रियाऽध्याहारात् स्वपर्यायनिजशब्दात्कलशादिप्रतीतिः । स्वव्यापकवह्निसामानाधिकरण्यं धूमस्येत्यादयश्च न प्रयोगाः ।

इदं तु चिन्त्यते—यद्रूपेण समभिव्याहृतपदादुपस्थितिस्तद्रूपावच्छिन्नस्य स्वपदार्थत्व एकेन ब्राह्मणेन ब्राह्मणान्तरपुत्रदर्शनदशायां ब्राह्मणः स्वपुत्रं न पश्यतीति प्रयोगानुपपत्तिः—अन्वयिताऽवच्छेदकावच्छिन्नप्रतियोगिताकाभावस्य विशेष्ये बाधात् , समभिव्याहृतपदार्थनिष्ठतत्तद्व्यक्तित्वावच्छिन्नस्य तत्तदर्थत्वेऽपि वन्हिकालीनद्रव्यवति ह्रदादौ स्वव्यापकवह्निकालीनद्रव्यं नास्तीति प्रयोगानुपपत्तिः, तत्र द्रव्यपदस्यापि लक्षणया तत्तद्व्यक्तित्वावच्छिन्नपरत्वे महानसादावपि तथा प्रयोगापत्तिः—तथाविधयत्किञ्चिद्व्यक्त्यभावस्य तत्राबाधात् ।

तादृशसमभिव्याहृतस्थले यद्यद्व्यक्तिव्यापकता वह्नेस्तत्तद्व्यक्तित्वावच्छिन्नाभावकूट एव तत्र नियमतः प्रतीयत इति चेद् ? न—

तथाविधसकलव्यक्तिनिष्ठतत्तद्व्यक्तित्वानां युगसहस्रेणापि ज्ञातुमशक्यत्वात् कदा चित्कस्य चिज्ज्ञानसंभवेऽपि कतिपयतत्तद्व्यक्तित्वावच्छिन्नमात्रोपस्थितिदशायां-

कतिपयाभावमात्रगोचरप्रतीतेरप्यङ्गीकार्यतया तादृशनियमस्य दूरपराहतत्वादिति।

अत्र केचिद्—ब्राह्मणः स्वपुत्रं पश्यतीत्यादौ स्वपदं-ब्राह्मत्वावच्छिन्नार्थकमेव विशेष्यीभूतब्राह्मणत्वाद्यवच्छिन्ने च स्वपदार्थघटितस्य ब्राह्मणपुत्रदर्शनकर्तृत्वादिरूपविशेषणस्य न केवलमाश्रयत्वादिसम्बन्धेनान्वयः; अपि तु स्वाश्रयत्वस्वनिरूपकदर्शनविषयपुत्रजनकत्वोभयसम्बन्धेनैव, एवं च तत्र तत्र नञा तादृशोभयसम्बन्धावच्छिन्नतदभाव-एव प्रत्याय्यतेऽतो नोक्तदोषावसर इति वदन्ति।

---

मञ्जूषा।

साक्षादिति। पूर्ववत्। परम्परयेति। चैत्रः स्वपुत्रं पश्यतीत्यादौ, प्रथमाया अकारकत्वादिति भावः। इयं शक्तिरप्यावश्यकी स्वव्यापकेत्यादौ धूमे तदधिकरणवृत्तित्वव्याप्यवृत्तिध्वंसप्रतियोगिताकसमयेत्यादौ बहुव्रीह्यर्थतद्घटकाभिन्नसमये च परम्परया स्वार्थो विशेषणम्। यश्चेत्यादि। चैत्रेण स्वपुत्रो दृश्यत इत्यादौ, एवं चैत्रपुत्रः पश्यति चैत्रभ्राता स्वपुत्रं-पश्यति चैत्रस्य भ्रात्रा स्वपुत्रो दृश्यत इत्यादौ न चैत्रस्य स्वशब्दशक्यत्वप्रसङ्गः, चैत्रस्य स्वार्थं प्रत्यविशेष्यत्वात् प्रकृतक्रियां प्रत्यकारकत्वाच्चेति भावः।

नन्वेवं कलशे निजहेत्वित्यत्र स्वशब्दपर्यायनिजपदात्कलशबोधानुपपत्तिः, तस्य निजपदार्थं प्रत्यविशेष्यत्वात् प्रकृतक्रियाऽभावाच्चेत्यत-आह-कलश इति।

"स तदुच्चकुचौ भवन् प्रभाझरचक्रभ्रममातनोति यदि"त्युत्तरार्द्धं, चक्रवाकाः प्रवाहे वसन्तीति रूढिः। न प्रयोगा इति। धूमस्याकारकत्वेन स्वपदाशक्यत्वादिति भावः। कदा चिदिति। एकमात्रवृत्तित्वादिना। दुरुपगमत्वादिति। तथा च महानससामान्यमात्रवृत्तितद्व्यक्तित्वावच्छिन्नोपस्थितिदशायां महानसादावपि तथा प्रतीत्यापत्तिरिति भावः। दुरपन्हवत्वादिति पाठे अङ्गीकार्यतयेत्यत्र च्छेदः, तथा चोक्तं दूषणं-

दुर्वारमिति भावः । कुत इत्यत आह—तादृशेति योज्यं, ब्राह्मणान्तरपुत्रदर्शनदशायामपि ब्राह्मणः स्वपुत्रं पश्यतीति प्रयोगवारणाय स्वनिरूपकेत्यादि, यदाऽन्यः ब्राह्मणपुत्रं पश्यति न तु ब्राह्मणस्तदा तादृशप्रयोगवारणाय स्वाश्रयत्वनिवेशः । एवमेव ऋतौ भार्यामुपेयादित्यादौ स्वपदं विनाऽपि भार्यागमनकर्तृत्वस्य स्वाश्रयत्वघटकभार्यात्वनिरूपकत्वोभयसम्बन्धेनान्वय इति बोध्यम् ।

माधवी ।

मैवमिति । साक्षात्परम्परया स्वार्थनिष्ठविषयतानिरूपितविशेष्यताऽवच्छेदकत्वेन वक्तृबुद्धिस्थत्वाद्युपलक्षितधर्मावच्छिन्न एकशक्तिः, एतादृशशक्तिकल्पनात् स्वव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इत्यादौ स्वपदेन धूमबोधोपपत्तिरिति, सुस्ववान् चैत्र इत्यादिसङ्ग्रहाय साक्षादिति । न च तत्र मतुपः सम्बन्ध्यर्थतया चैत्रसम्बन्ध्यभिन्नः चैत्र इव बोधो जायते, तथा च परम्परयेत्यनेनैव बोधोपपत्तौ साक्षादित्यस्य वैयर्थ्यमिति वाच्यम् ? मतुपो नामार्थद्वयस्याभेदान्वयसाकाङ्क्षतया चैत्रवांश्चैत्र इत्यत्र तथान्वयबोधाद्, यद्यप्युद्देश्यताऽवच्छेदकविधेयताऽवच्छेदकैक्याच् चैत्रवांश्चैत्र इत्यादिबोधो न जायते तथाऽपि सुन्दरस्ववांश्चैत्र इत्यादौ सुन्दरचैत्रवांश्चैत्र इत्यादिबोधस्य विधेयांशेऽधिकावगाहिनः सर्वसिद्धत्वात् तत्रैव साक्षादित्यस्य व्यावृत्तिर्बोध्येति ।

अपरा च—विभक्त्यर्थद्वारा स्वसमभिव्याहृतक्रियाऽन्वयिताऽवच्छेदकत्वेन वक्तृबुद्धिस्थत्वाद्युपलक्षितधर्मावच्छिन्ने; तादृशशक्तिकल्पनाच् चैत्रः स्वपुत्रं पश्यतीत्यादौ चैत्रादिबोधोपपत्तिरिति ध्येयम् ।

एवं च चैत्रस्य भ्रातेत्यादौ चैत्रस्य साक्षात्परम्परया स्वपदार्थविशेष्यताऽभावात् स्वसमभिव्याहृतक्रियाकारकत्वाभावाच्च न स्वपदेन तद्बोधापत्तिरिति, चैत्रेणावलोकितं स्वपुत्रं मैत्रः पश्यतीत्यादौ तात्पर्यसत्त्व इष्यत एव स्वपदेन चैत्रप्रतीतिः ।

एवं स्वव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इत्यादौ तात्पर्यसत्त्वे वह्निबोधोऽपि स्वपदेनेष्यत एवेति ध्येयम् ।

यद्यपि चैत्रः स्वपुत्रं पश्यति चैत्रः स्वपुत्रं चक्षुषा पश्यतीत्यादौ दर्शनादेः परम्परया स्वपदार्थविशेष्यत्वाच् चक्षुरादेश्च समभिव्याहृतक्रियाकारकत्वाच्च स्वपदेन दर्शनचक्षुरादेरपि बोधापत्तिः; यदि च दर्शनचक्षुरादेः पुत्रादावन्वयायोग्यतयाऽभ्रान्तानां तात्पर्यसत्त्वेऽपि नान्वयबोधो; भ्रान्तानामिष्यत एव तादृशबोध इत्युच्यते ? तथाऽपि देवदत्तो-

ऽश्वेन स्वपुत्रं गमयतीत्यादौ स्वपदेनाश्वबोधापत्तेर्दुर्वारत्वात्, तत्राश्वस्य समभिव्याहृतक्रियाकरणकारकत्वात्तात्पर्य्यसत्त्वे तु तत्रेष्टापत्तेरनुभवविरोधात्, स्वसमभिव्याहृतक्रियाकारकपदं तादृशक्रियाकारकाधिकरणकारकपरमिति कश्चित्, तन्न–देवदत्तः स्वगृहे तिष्ठतीत्यादौ स्वपदेन गृहबोधापत्तेः, कारकपदस्य केवलकर्तृकारकपरत्वे धूमव्यापकवह्निसमानाधिकरणधूम इत्यादौ स्वपदेन धूमबोधानुपपत्तिरिति सुधीभिरेव ध्येयम्।

कलश इति। स घटस्तस्या दमयन्त्या उच्चकुचौ भवन् प्रभाङ्करचक्रभ्रममातनोत्यत्यन्वयः। तदर्थत्वेऽपीति। स्वपदार्थेऽपीत्यर्थः। समभिव्याहृतपदार्थनिष्ठोभयावृत्तिधर्म्मावच्छिन्ने स्वपदस्य शक्तिरिति तात्पर्य्यं नातो नानाशक्तिरिति ध्येयम्। कतिपयाभावगोचरप्रतीतेरप्यङ्गीकार्य्यतयेति। ह्रदे स्वव्यापकवह्निकालीनद्रव्यं नास्तीत्यत्र कतिपयतत्तद्व्यक्तित्वाद्युपस्थितिदशायां तादृशतत्तद्व्यक्तित्वावच्छिन्नाभावविषयकप्रतीतेरप्यङ्गीकार्य्यतयेत्यर्थः। स्वाश्रयत्वस्वनिरूपकदर्शनविषयपुत्रजनकत्वोभयसम्बन्धेनेति। अन्यपुत्रदर्शनदशायां ब्राह्मणपुत्रं पश्यतीतिप्रयोगवारणाय स्वाश्रयत्वनिवेशः। नोक्तदोषावसर इति। स्वव्यापकवह्निकालीनद्रव्यं नास्तीत्यादौ स्वाश्रयत्वस्वनिरूपकवह्निनिष्ठव्यापकत्वोभयसम्बन्धेन स्वव्यापकवह्निकालीनस्य द्रव्येऽन्वयो बोध्यः। एवं ब्राह्मणः स्वं पश्यतीत्यादौ ब्राह्मणकर्म्मताकदर्शनकृतेः स्वनिरूपकदर्शनविषयकत्वतादात्म्योभयसम्बन्धेन; ब्राह्मणेन ब्राह्मणान्तरदर्शनदशायां ब्राह्मणः स्वं न पश्यतीत्यादौ तादृशोभयसम्बन्धावच्छिन्नप्रतियोगिताकब्राह्मणकर्म्मकदर्शनानुकूलकृतेरभावः प्रत्याय्यते। एवमन्यत्राप्यूह्यम्। स्वनिरूपकदर्शनविषयकपुत्रजनकत्वादिसम्बन्धस्य वृत्त्यनियामकतया तत्सम्बन्धघटितोभयसम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धिरित्यस्वरसः केचिदित्युक्त्या सूचित इति। यदि च संयोगत्वादिनाऽव्याप्यवृत्तेरपि संयोगस्य व्याप्यवृत्तिसाधारणप्रमेयत्वादिना यथा व्याप्यवृत्तित्वं–तथा तादृशजनकत्वादिना वृत्त्यनियामकस्यापि तादृशजनकत्वादेराश्रयत्वादिसाधारणोभयत्वादिनाऽत्र वृत्तिनियामकत्वं चेति वृत्त्यनियामकसंयोगस्य सत्त्वेऽपि वृत्तिनियामकसाधारणसंयोगत्वादिना संयोगस्य प्रतियोगिताऽवच्छेदकसम्बन्धत्ववत् स्वाश्रयत्वसम्बन्धरूपवृत्तिनियामकसाधारणोभयत्वादिना तादृशजनकत्वादेः प्रतियोगिताऽवच्छेदकसम्बन्धत्वे क्षतिविरहाच्च न दोष इत्यवधेयम्।

विनोदिनी ।

साक्षादिति । तादात्म्येन शुक्लत्ववान् घट इत्यादौ स्वपदार्थविशेष्यता साक्षादेव घटे,किन्तु मतुपः संबन्ध्यर्थकत्वाभावोपगन्तृमतादेतदुदाहरणमुक्तम् ।

---

एकशब्दस्य कैवल्यादिविशिष्टे शक्तिः । कैवल्यं च सजातीयद्वितीयरहितत्वं, तच्च सजातीयनिष्ठभेदाप्रतियोगित्वं,-सजातीयत्वं चोद्देश्यविशेषणवाचकैकशब्दात्कैवल्यघटकत्वेन प्रकृतविधेयवत्त्वरूपं प्रतीयते तथा चात्रायमेको भुङ्क्ते इत्यादावेतद्देशाधिकरणकभोजनकर्तृनिष्ठभेदाप्रतियोग्ययमत्र भुङ्क्ते इत्याद्याकारको बोधः । शक्यताऽवच्छेदकानुगम उक्तादिशा चिन्तनीयः ।

अयं फलमेकं भुङ्क्ते फलमेकं भुञ्जानस्तिष्ठतीत्यादौ विधेयताऽवच्छेदककोटिनिविष्टार्थकैकपदाच्च यादृशार्थविशेषणताऽऽपन्ने यदवच्छिन्ने स्वार्थान्वयिनो विशेषणत्वं तादृशार्थानुयोगिकान्वयप्रतियोगित्वविशिष्टतद्रूपावच्छिन्नानुयोगिकाकान्वयप्रतियोगिनिष्ठभेदाप्रतियोगित्वरूपकैवल्यं प्रतीयते, अतस्तत्रैतत्कर्तृकभोजनादिनिष्ठसंसर्गप्रतियोगिकर्मत्वादिनिष्ठसंसर्गप्रतियोगिनिष्ठभेदाप्रतियोगित्वं फलादौ प्रतीयते ।

एकसमानार्थकमात्रादिस्थलेऽप्येतादृशी प्रतीतिरिति कृतं पल्लवितेन ॥

इति शक्तिवादे विशेषकाण्डः ।

मञ्जूषा ।

कैवल्यघटकत्वेनेति क्व चित्पाठः । उक्तदिशेति । स्वार्थभेदान्वयिताऽवच्छेदकोद्देश्यताऽवच्छेदकावच्छिन्नविशेषणत्वोपलक्षितविधेयताऽवच्छेदकावच्छिन्ननिष्ठभेदाप्रतियोगित्वे एकपदशक्तिः, यद्वा भेदे प्रतियोगित्वेऽभावे च शक्तिः विधेयान्वितोद्देश्यस्याधेयतासम्बन्धेन भेदेऽन्वयादिना विशिष्टलाभः, स्वाश्रयनिष्ठभेदाप्रतियोगित्वस्वाश्रयत्वोभयसम्बन्धेन विधेयान्वयस्तु न युक्तः तथा सत्येकपदार्थस्योद्देश्यविशेषणत्वभङ्गापत्तेः । यादृशार्थेति । कृत्यादिविशेषणताऽऽपन्नभोजनादिक्रियेत्यर्थः । यदवच्छिन्ने=विभक्त्यर्थताऽवच्छेदककर्मतात्वाद्यवच्छिन्ने, स्वार्थान्वयिनः=फलादेः, फलादाविति । अथ यत्र फलमेकं भुङ्क्त इत्यादि फलेतराभोजनपरं तत्र फलस्य बहुत्वादेकत्वबाध इति चेत् ?तत्रैकपदसमभिव्याहारवशात्फलनिष्ठकर्मताया इतराकर्मकत्वविशिष्टाश्रयतासम्बन्धेन भोजनेऽन्वयोपगमान्न दोषः ।

इति शक्तिवादव्याख्यायां मञ्जूषायां विशेषकाण्डः ।

---

माधवी ।

एतद्देशाधिकरणकभोजनकर्तृनिष्ठभेदाप्रतियोगीति । भेदश्चायं स्वाश्रयवृत्तित्वस्वनिरूपकत्वोभयसम्बन्धेन प्रतियोगिताविशिष्टान्यो ग्राह्यः, नातो द्वित्वावच्छिन्नभेदमादायाप्रसिद्धिः ।

उक्तदिशा चिन्तनीय इति । स्वार्थान्वयिताऽवच्छेदकधर्म्मावच्छिन्नोद्देश्यतानिरूपितविधेयताऽवच्छेदकत्वोपलक्षितधर्म्मावच्छिन्नवन्निष्ठभेदप्रतियोगित्वावच्छिन्ने शक्तिस्वीकाराद् नाननुगम इति । यादृशार्थविशेषणताऽऽपन्न इति । यादृशार्थः=एतत्कर्तृकभोजनरूपः, यदवच्छिन्ने=कर्मतात्वावच्छिन्ने, स्वार्थान्वयिनः=एकपदार्थान्वयिफलादेः । इदमत्रावधेयम्-अयं फलमेकं भुङ्क्ते इत्यादौ एकत्वविशिष्ट एव एकपदार्थस्तस्याभेदेन फलान्वये, एकत्वस्यापि स्वाश्रयत्वस्वाश्रयफलकर्मताकैतत्कर्तृकभोजनकर्मतावन्निष्ठान्योन्याभावाप्रतियोगित्वोभयसम्बन्धेन फलेऽन्वयस्वीकाराद् द्विफलभोजनस्थले न तथाविधप्रयोगप्रसङ्गः, अथ वा-अयं फलमेकं भुङ्क्ते फलमेकं ददातीत्यादिसाधारणशक्त्यनुगमकरूपाभावाद् नानाशक्तिप्रसङ्गः तत्स्वीकारेऽनुभवविरोधश्च, अनुभवविरोधस्य विरहे न विवदामहे इति । एवमयं हस्तेनैकेन ददातीत्यादौ स्वाश्रयहस्तकरणकतत्कर्तृकदानकरणनिष्ठान्योन्याभावाप्रतियोगित्वघटितताद्रूशाभयसम्बन्धेन -

कत्वस्य हस्तेऽन्वय इति । एवमन्यत्राप्यूह्यम् । मात्रादीति । आदिना केवलादिशब्दपरिग्रहः । मात्रादिशब्दस्तु यदोद्देश्यताऽवच्छेदकस्तदैकसमानार्थको बोध्यः; यदा विधेयताऽवच्छेदककोटिप्रविष्टार्थकस्तत्र नैकसमानार्थकताऽतोऽयं केवलं फलं भुङ्क्ते इत्यादौ फलान्यभोजनव्यवच्छेदस्यैव तत्र प्रतीतिविषयत्वेऽपि न क्षतिरिति ध्येयम् ।

इति शक्तिवादटीकायां माधव्यां विशेषकाण्डः ।

---

विनोदिनी ।

एकशब्दशक्तिं निर्वक्तुमारभते—एकेति ।

कवल्यादीत्यादिपदेन मुख्यत्वान्यत्वयोः परिग्रहः । उद्देश्यविशेषणैकपदार्थकैवल्यकुक्षिस्थं सजातीयत्वं निर्वक्ति—सजातीयत्वमिति ।

चिन्तनीय इति । तथा च स्वजन्यत्वस्वसजातीयनिष्ठभेदाप्रतियोगिविषयकत्वैतदुभयसम्बन्धेनैकविशिष्टो बोधो भवत्वित्याकारकः संकेतः स्वीकार्यः ।

विधेयविशेषणवाचकैकपदार्थान्तर्गतं कैवल्यमुदाहर्त्तुमाह-अयमिति । समानार्थकेति । अवधारणार्थकेत्यर्थः ।

इति शक्तिवादव्याख्यायां विनोदिन्यां विशेषकाण्डः ।

अथ

## टीकात्रयोपेते शक्तिवादे

# परिशिष्टकाण्डः

*गवादिशब्दात्संस्थानविशेषरूपाकृतेरपि बोधस्यानुभविकतया गोत्वादिजातिवत् साऽपि गवादिपदवाच्ये विशेषणं,-तस्याश्च वाच्यविशेषणत्वेऽपि न प्रवृत्तिनिमित्तता, साक्षात्सम्बन्धेन वाच्यवृत्तित्वाभावाद्, अवयवसंयोगादिरूपायास्तस्याः सामानाधिकरण्यसम्बन्धेनैव गवादौ सत्त्वात्, तत्र शक्त्या जात्याकृत्योरेकतरविनिर्मोकेणापरभानविरहाल्लाघवाच्चोभयविशिष्टे गवादिपदस्यैकैव शक्तिः स्वीक्रियते, शक्यविशेषणभेदेऽपि पुष्पवन्तपदवद्धेन्वादिपदवच्च शक्त्यैक्यस्य दुरपवदत्वात् ।

यत्तु—एकविशिष्टापरावच्छिन्ने शक्तिरिति; तदसद्-विशेषणविशेष्यभावे विनिगमनाविरहाद् गवाद्यंशे साक्षादुभयप्रकारकबोधस्यानुभवसिद्धस्य दुरपवदत्वाच्च, यत्र

*इत आरभ्य मीमांसकास्त्वितिपर्यन्तो ग्रन्थः सामान्यकाण्डस्यैव परिशिष्ट इति केचित्, तन्न मनोरमं; तथात्वे तदनन्तरमेवायं संदृभ्येत नात्रानवसरे, विशेषकाण्डीयता त्वसंबद्धतया नैव सुवचा, यत्तु स्वमतप्रदर्शनपरत्वकथनम् ; एतस्यापातरमणीयतैव-कतिपयपङ्क्तिभिरेव न्यायमतप्रदर्शनालम्बुद्धिः प्रकृतग्रन्थकारोपपादनप्रौढिमाननुरूपा, अतः प्रदिदर्शयिषितव्येषु मीमांसकमतेषु तदुत्थानावसरस्यानिर्णोषयोपोद्घातविधयैतस्यावतारणेति त्वस्मभ्यं रोचमाना सरणिः ।

विनोदिनीकारः ।

केवलाकृतिविशिष्टे गवादिपदस्य तात्पर्यं, यथा पिष्टकमय्यो गाव इत्यादौ, तत्र शुद्धगोत्वाद्यवच्छिन्नपरधेन्वादिपद इव लक्षणैव, जात्याकृतिविशिष्टायां व्यक्तौ शक्तेरैक्यं "व्यक्त्याकृतिजातयस्तु पदार्थः" इति न्यायसूत्रे बहुवचनमुपेक्ष्य पदार्थ इत्येकवचनं निर्दिष्टवतो महर्षेरप्यनुमतम् ।

---

माधवी ।

संस्थानरूपार्थकाकृतेरपीति । संस्थानमवयवसंयोगः स एवाकृतिशब्दवाच्य इत्यावेदयितुमाकृतेरपीत्युक्तं, तेन "व्यक्त्याकृतिजातयस्तु पदार्थः" इति न्यायसूत्र आकृतिर्वाच्यविशेषणमित्युक्तम्; भवता तु संस्थानस्येति तत्सूत्रविरोध इत्याशङ्का निराकृता, साऽपि=आकृतिरपि सामानाधिकरण्यसम्बन्धेनैव=स्वसमवायिसमवेतत्वसम्बन्धेनैव ।

ननु-एकतरविनिर्मोकेण यदि शक्त्या बोधस्तदोभयविशिष्ट एकशक्तिकल्पनं न सम्भवतीत्यत आह-लाघवाच्चेति । तथा चोभयविशिष्टएकशक्तिकल्पनरूपलाघवाद् नैकतरविनिर्मोकेण शक्त्या बोध इत्येवोपगम्यतेऽन्यथा शक्तिद्वयकल्पनाऽऽपत्तिरिति भावः । दुरपवदत्वाद्=दुरपन्हवत्वाद्, बोधविषयताया ऐक्यादिति भावः । विनिगमनाविरहादिति । शक्तिद्वयकल्पनाऽऽपत्तिरिति शेषः ।

ननु-एकविशिष्टापरावच्छिन्नबोधस्यानुभवसिद्धत्वे शक्तिद्वयं कल्पनीयमत आह-गवाद्यंश इति । व्यक्त्याकृतिजातयः पदार्थ इति । एकशक्तिमन्त इत्यर्थः ।

न च विशेषणवाचकपदस्य विशेष्यवाचकपदसमानविभक्तिकत्वनियमात् पदार्थ इति कथमेकवचनान्तमिति वाच्यम् ? विशेषणवाचकपदोत्तरविभक्त्यर्थसंख्याया यत्राविवक्षितत्वं तत्रैव समानवचनकत्वनियमात्, तथा चात्र विशेष्यवाचकपदोत्तरविभक्त्यर्थविरुद्धैकत्वसंख्यायाः प्रकृते विवक्षणीयत्वान्नैकवचनानुपपत्तिरिति ।

विनोदिनी ।

एवं विशेषकाण्डेन कतिपयशब्दानां विवादास्पदशक्तिकानां शक्तिं व्युत्पाद्य; निर्दिष्टदिशैवावशिष्टानामपि तज्जातीयानां सुशकनिरूपणशक्तिकतां मत्वा विशेषकाण्डं समाप्य, सम्प्रति पदनिष्ठशक्तेर्निरूपकत्वेन

योग्यासु व्यक्त्याकृतिजातिषु कुत्रत्यं तन्निरूपकत्वमत्र दार्शनिकानां विप्रतिपत्तेस्तत्रापि मीमांसकानां मिथोऽपि मतभेदेषु बहु वक्तव्यतया सूचीकटाहन्यायेन न्यायसिद्धान्तमात्रं प्रदर्शयन् विवक्षितविचारमवतारयति–गवादिशब्दादिति ।

साक्षादिति । प्रतियोग्यनुयोगिसाक्षान्निरूपितविषयताशालिसम्बन्धस्यैव साक्षात्सम्बन्धत्वमित्यर्थः ।

सामानाधिकरण्येति । स्वसमवायिसमवेतत्वेनेत्यर्थः=समवायसम्बन्धावच्छिन्नस्वनिष्ठप्रकारतानिरूपिताधिकरणत्वावच्छिन्नविशेष्यत्वावच्छिन्नविशेष्यतानिरूपितवृत्तित्वसम्बन्धावच्छिन्नप्रकारताकत्वेनेति यावत् । एवं चात्राकृतिव्यक्तिनिष्ठविषयतयोर्मिथः साक्षान्निरूप्यनिरूपकभावाभावान्न साक्षात्सम्बन्धता सामानाधिकरण्यस्येति भावः ।

लाघवाच्चेति । जात्याकृतिविशेषणभेदनिबन्धनशक्तिभेदप्रयुक्तगौरवमपेक्ष्येत्यर्थः ।

पुष्पेति । अत्र विशेष्यभेदोऽपीत्यत आह—धेन्वादीति । एवं च तत्र धानकर्मत्वगोत्वयोर्भेदेऽपि शक्त्यैक्यवदत्रापि तथेति भावः । अनुमतमिति । तथा चैकशक्तिविशिष्टपदार्थाभिन्ना व्यक्त्याकृतिजातय इति बुबोधयिषायां पदार्थोत्तरस्वर्थैकत्वस्य जात्यन्तोत्तरजसर्थबहुत्वविरुद्धस्य विवक्षितत्वमस्तीति तथा प्रयोगोऽनुमतः; यत्र विशेष्यवाचकपदोत्तरविभक्त्यर्थसंख्याविरुद्धसंख्याया विशेषणवाचकपदोत्तरविभक्त्याऽविवक्षितत्वं तत्रैव समानवचनकत्वनियमादिति संक्षेपः ।

---

मीमांसकास्तु—गवादिपदानां जातिरेव वाच्या न तु व्यक्तिराकृतिर्वा, व्यक्तिशक्तिमतेऽपि स्वरूपतस्तस्या ग्रहासम्भवेन शक्तिज्ञानप्रकारीभूतायां जातौ शक्तेस्तदवच्छेदकताया वाऽवश्यकल्पनीयतया व्यक्त्यादौ तत्कल्पनायां गौरवात्प्रयोजनविरहाच्च, व्यक्तिशक्तिमते जातेरुपलक्षणत्वासम्भवः प्रागेव दर्शितः, यथा व्यक्तिशक्तिमते गोत्वांशे शक्तिस्तदवच्छेदकता वा तद्विशेषणानवच्छिन्नैव तथा जातिशक्तिवादिमतेऽपि सा तथैवेति न गोत्वत्वादिप्रवेशाद्

गौरवशङ्काऽपि, न हि जातिशक्तिमतेऽपि शाब्दबोधे सा किञ्चिद्धर्मप्रकारेण भासते; येन प्रकारभानार्थं प्रकारविशेषमन्तर्भाव्य शक्तिः कल्पनीयाऽपि तु स्वरूपत एव ।

---

मञ्जूषा

प्रागेवेति-द्रव्यपदाद्धटत्वावच्छिन्नबोधवारणाय । जातिविशेषणताया एव वाच्यतारूपत्वाद् विशेषणं गोत्वत्वादि ।

माधवी ।

जातिरेव=गोत्वादिजातिरेव, तस्याः=व्यक्तेः, गौरवादिति ।

ननु प्रयोजनसत्त्वे गौरवमकिञ्चित्करमत आह-प्रयोजनेति ।

ननु मयाऽपि शक्तिः शक्यताऽवच्छेदकता वा जातौ न स्वीक्रियते किन्तु व्यक्तौ निरवच्छिन्नैव, गोत्वप्रकारकशाब्दबुद्धौ गोत्वधर्मिताऽवच्छेदकशक्तिज्ञानस्य हेतुत्वात् स्वरूपतो व्यक्त्यग्रहेऽपि क्षतिविरह इति, व्यक्तिशक्तिमतेऽपि न गौरवमत आह-व्यक्तिशक्तीति । जातेरुपलक्षणत्वासम्भवः प्रागेव दर्शित इति । द्रव्यत्वधर्मिताऽवच्छेदककघटादिपदशक्तिप्रमातो द्रव्यत्वरूपेण द्रव्यबोधोत्पत्त्या इत्यादिः । सा=जातिः ।

विनोदिनी ।

मीमांसकानां मतविशेषेषु प्रदर्शयितव्येषु प्रथमं भट्टमतं दर्शयति--मीमांसकास्त्विति ।

प्रागेवेति । उपलक्षणत्वाविशेषाद् गोत्वस्येव द्रव्यत्वादेरपि तथात्वेन भानापत्तेरिति भावः ।

---

अथानुमानादिना गोत्वादौ शक्तिग्रहो भवन् धर्मिताऽवच्छेदकतया गोत्वत्वादिकमवश्यं विषयीकरोति निर्धर्मिताऽवच्छेदकज्ञानस्यानुमानादिना जननासम्भवात् तादृशाज्ञानस्य विपरीतज्ञानाविरोधितयाऽनुपयुक्तत्वाच्च, एवं च तादृशधर्मस्य शक्यताऽवच्छेदकत्वं दुर्वारमेव, शक्तिग्राहकमानेन धर्मिताऽवच्छेदकांशे तदवच्छेदकताग्रहे बाधका-

भावात् । यदि चावच्छेदकताग्रहेऽपि शक्तिधियस्तदंशे भ्रमत्वं कल्प्यते; विषयबाधेनावच्छेदकत्वमेव शक्तिग्राहकमानेन न गृह्यत इत्येव वा स्वीक्रियते? तदा प्रतियोगित्वकारणत्वादीनामपि तुल्ययुक्त्याऽवच्छेदकत्वविलयप्रसङ्गः, तत्राप्येवं सुवचत्वात्, प्रतियोगित्वादिबुद्धेरवच्छेदकत्वावगाहित्वमनुभवसिद्धं यदि; तदा शक्तिधियस्तदवगाहिता न तथेति वचसि को वा श्रद्धधाति विशेषाभावात् । मा भूद्वा गोत्वत्वादिकमवच्छेदकं शक्तेस्तथाऽपि शक्तिज्ञानकारणतायां गुरुशरीरगोत्वत्वादेर्धर्मिताऽवच्छेदकताऽऽत्मकविषयतानिवेशाद् गौरवं दुर्वारमेव व्यक्तिशक्तिवादिना स्वरूपतो-गोत्वादिनिष्ठधर्मिताऽवच्छेदकत्वस्यैव निवेशादिति चेद् ?

मञ्जूषा ।

तादृशज्ञानस्येति । यत्तु-निर्धर्मिताऽवच्छेदकपरामर्शात्तादृशानुमितिरित्यर्थ इति ? तन्न निर्धर्मिताऽवच्छेदकानुमितेरलीकत्वात् तस्मात्तथाविधमानसज्ञानपरोऽयं ग्रन्थः; अनुपयुक्तत्वादित्यस्य वा स्वीकारासम्भवादित्यर्थः । भ्रमत्वमिति । अन्यथाख्यात्युपगन्तृमीमांसकमते, तदनङ्गीकर्तृगुरुमते त्वाह-विषयबाधेनेति ।

माधवी ।

अनुमानादिना जननासम्भवादिति । ननु निर्द्धर्मिताऽवच्छेदककमानसमेव सर्वत्र शक्तिज्ञानमङ्गीकार्यमत आह-तादृशज्ञानस्येति । निर्द्धर्मिताऽवच्छेदककशक्तिज्ञानस्येत्यर्थः । विपरीतज्ञानाविरोधितया, गोत्वं गोपदशक्यं न वेत्याकारकसंशयाद्यविरोधितयेत्यर्थः । अनुपयुक्तत्वात्=अशक्यत्वविपरीतज्ञानस्यैव शाब्दबोधजनकत्वादिति भावः । एवञ्च=शक्यत्वग्रहविरोधिग्रहस्याहेतुत्वे च, तादृशधर्मस्य=शक्यत्वग्रहधर्मिताऽवच्छेदकस्य गोत्वादेः, तदंशे=गोत्वनिष्ठशक्यताऽवच्छेदकांशे, अवच्छेदकावगाहित्वम्=अवच्छेदकविषयकत्वं, तदवगाहिता न तथा=अनुभवसिद्धा ।

विनोदिनी।

अनुपयुक्तत्वेति। गोत्वं गोपदाशक्यमिति निश्चयेऽपि गोपदशक्यं-तदिति ज्ञानं प्रत्यप्रतिबन्धकत्वादिति भावः।

---

न—पदविशेषणताऽऽपन्नशक्तौ निरूपितत्वसम्बन्धेन; शक्तिसम्बन्धेन पदे वा स्वरूपतो गोत्वादिप्रकारिकाया एव शक्तिधियः स्वीकाराद्, न हि समवायेनैव जातेः स्वरूपतः प्रकारतेति नियमः प्रामाणिकः, घटं जानामीत्यादौ प्रकारितासम्बन्धेन स्वरूपतो घटत्वादीनां ज्ञानाद्यंशे प्रकारतापगमात्, समवायेन धर्मिविशेषणताऽऽपन्नस्यैव सम्बन्धान्तरेणान्यत्र स्वरूपतो भानमित्यपि न नियमः, प्रामाण्यस्य परतो ग्राह्यतामते—अयं घट इत्याकारकस्य स्वरूपतो घटत्वादिज्ञानस्यानुव्यवसाये प्रकारितया तत्सम्बन्धेन ज्ञाने वा समवायेन धर्मिविशेषणताऽनापन्नस्यैव घटत्वादेर्भानात्। अस्तु वा प्रकृतेऽपि गवादिविशेषणताऽऽपन्नस्यैव गोत्वादेः शक्तौ निरूपितत्वसम्बन्धेन शक्तिसम्बन्धेन पदे वा स्वरूपतः प्रकारता; गवादेश्च शक्तौ पदे वा स्वसमवेतानिरूपितत्वस्वसमवेतवाचकत्वरूपपरम्परासम्बन्धेन प्रकारता; तादृशी च गवादिविषयता न शाब्दबोधजनकताऽवच्छेदिकेति परम्परासम्बन्धेन प्रकारताया जनकताऽवच्छेदकत्वापेक्षया साक्षात्सम्बन्धावच्छिन्नप्रकारतायास्तथात्वे लाघवेन व्यक्तिशक्तिसिद्धेर्नावकाशः।

---

मञ्जूषा ।

स्वरूपत इति । गोत्वे शक्तं पदमित्याद्याकारः; अत्र गोपदं शक्तं, गवादिपदं वा गौरित्याकारमपि हरिदासभट्टाचार्यादयो दर्शयन्ति । अनुव्यवसाय- इति । घटत्वप्रकारकं, घटत्वीयमिति मतभेदः । धर्मीति । अन्यथा प्रामाण्यस्य स्वतो ग्राह्यत्वापत्तेरिति भावः । स्वतो ग्राह्यत्वमत एवोक्तनियमेऽप्याह-अस्तु वेति । गवादीति । गोमती शक्तिर्गोपदं वा गोमदिति; स्वाश्रयप्रतियोगित्वसम्बन्धेन गोत्ववदित्यादि ।

माधवी ।

शक्तिधियः स्वीकारादिति । पदविशेषणताऽऽपन्नशक्त्यंशे निरूपितत्वसम्बन्धेन स्वरूपतो गोत्वादिप्रकारकशक्तिधीश्च पदं गोशक्तिमदित्याकारिका, प्रामाण्यस्य स्वताग्राह्यत्वमते–अयं घट इत्याकारकज्ञानस्य घटं जानामीत्याकारकानुव्यवसायस्यैवोत्पत्त्या तत्र विषयितया घटभाने घटविशेष्यित्वावच्छिन्नप्रकारितायां निरूपितत्वसम्बन्धेन तादृशप्रकारितासम्बन्धेन ज्ञाने घटभानात् तन्मते समवायेन धर्मिविशेषणताऽनापन्नस्यैवान्यसम्बन्धेन स्वरूपतो भाननियमादित्यत आह— परतो ग्राह्यत्वमत- इति । स्वाश्रयज्ञानजनकसामग्रीतः, तन्मते–अयं घट इत्याकारकज्ञानस्य घटत्वं जानामीत्याकारकानुव्यवसायज्ञानस्य तादृशप्रकारितायां निरूपितत्वसम्बन्धेन; तादृशप्रकारितासम्बन्धेन ज्ञाने स्वरूपतो घटत्वप्रकारकानुव्यवसायोदयादिति भावः ।

उभयमतसाधारणार्थमाह—अस्तु वेति । व्यक्तिशक्तिसिद्धेर्नावकाश- इति । तन्मते शक्तिविषयतानिष्ठशाब्दबोधजनकताऽवच्छेदकतानिरूपितावच्छेदकताऽऽश्रयप्रकारत्वस्य शक्यत्वव्याप्यत्वादिति भावः । समभिव्याहृतपदार्थानां नाशप्रतियोगित्वोत्पत्त्याश्रयत्वादिपरस्परासम्बन्धेन स्वाश्रितवृत्तित्वादिसम्बन्धेन गोत्वत्वादिभानाङ्गीकारापत्तिरिति गोत्वत्वाद्यनुपस्थितिदशायां गौर्नष्टेत्यादिशाब्दबोधस्यानुभवसिद्धतया तदनुपपत्तिरिति ज्ञेयम् ।

विनोदिनी ।

पदविशेषणेति । गोपदं गोत्वे शक्तमित्याकारायाम् । पदे वेति । पदं गौरित्याकारायाः ।

ज्ञानांद्यंश इति । विषयत्वसम्बन्धावच्छिन्नघटनिष्ठप्रकारतानिरूपितज्ञाननिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपितात्मविशेष्यताकानुव्यवसायविषयीभूतव्यवसाय इत्यर्थः ।

परतो ग्राह्यतेति । ज्ञानग्राहकसामग्रीतरग्राह्यतेत्यर्थः । तादृशनियमं स्वीकृत्याप्याह—अस्तु वेति । गवादिविषयता=गवादिनिष्ठप्रकारता ।

अथ जातिशक्तिमतेऽपि शाब्दबोधे व्यक्तिभानमावश्यकं गौर्नष्टा गौर्जाता गामानयेत्यादौ समभिव्याहृतपदार्थान्वयस्य जातौ बाधात्, परम्परासम्बन्धेन तदन्वयोपगमेऽप्यन्वयिताऽवच्छेदकतया गोत्वत्वादिभानस्वीकारापत्तेः शक्तौ गोत्वत्वाद्यन्तर्भावापत्तेश्च, न हि स्वरूपेण पदार्थस्य पदार्थान्तरान्वयितया भानं कैश्चित् स्वीक्रियते, स्वीकुरु वा प्रकारतया स्वरूपेणोपस्थितजातेर्भानं; विशेष्यतया तद्भानं तु न सम्भवत्येव, निर्धर्मिताऽवच्छेदककशाब्दबोधस्य प्रवृत्त्याद्यनुपयोगितया तत्स्वीकारासम्भवात् । एवं च जातिमात्रवाचकत्वेनाभ्युपगतपदस्यापि व्यक्तिबोधजनकतायामप्यविवादाद्व्यक्तिशक्तिर्निर्व्यूढैव, शक्तिभ्रमाजन्यलक्षणाग्रहाजन्यतद्बोधजनकताया एव तच्छक्तिसाधकत्वाद्; अन्यथा जातावपि शक्त्यसिद्धिप्रसङ्गात् । एवं शक्तेरीश्वरसङ्केतरूपत्वे व्यक्तिबोधकतायाः पदेऽबाधितत्वेनेश्वरेच्छाविषयतया तस्या अपि शक्यत्वं दुरपह्नवं, न हि मीमांसकैर्भगवाननुमन्यत इत्येतावतैव तादृशयुक्तेरनवकाशः; तत्साधकबहुतरयुक्तिसत्त्वेन तदुपन्यासेऽपि निरुत्तरत्वापातात् ।

---

मञ्जूषा ।

तादृशबोधमपि निरस्यति-स्वीकुरु वेति । व्यक्तौ शक्तिस्वीकारे युक्त्यन्तरमाह-एवमिति । तदुपन्यासे=ईश्वरानङ्गीकारोपन्यासे, निरुत्तरत्वापातात्=असदुत्तरत्वात्, क्वचित्तथैव पाठः ।

माधवी ।

ननु स्वरूपेण पदार्थस्य पदार्थानन्वयित्वे घटं जानामीत्यादौ विशि-

घटतात्पर्यस्थले घटान्वयिद्वितीयाऽर्थविषयतायां घटत्वस्यावच्छिन्नत्वसम्बन्धेन प्रकारतयाऽन्वयस्यानुभवसिद्धस्यानुपपत्तिरत आह-स्वीकुरुवेति । तद्बोधजनकतायास्तद्विषयकत्वावच्छिन्नजनकतानिरूपितजनकताकत्वस्येत्यर्थः, शक्तिभ्रमाद्यप्रयोज्यस्वविषयकत्वावच्छिन्नजनकताकस्य स्वस्मिन् स्वशक्तिसाधकत्वादिति पर्यवसितोऽर्थः । ईश्वरेच्छाविषयकतया=तद्विषयकबोधजनकत्वेनेश्वरेच्छाविषयतया, तृतीयार्थोऽभेदः; तस्य शक्यत्वेऽन्वयः । अस्याअपि=व्यक्तेरपि । तद्बोधकबहुतरयुक्तिसत्त्वेनेति । क्षितिः सकर्तृका कार्यत्वादित्यादिबहुतरयुक्तिसत्त्वेनेत्यर्थः । तदुपन्यासस्य= ईश्वरो नास्तीत्याद्युपन्यासस्येत्यर्थः ।

---

एवं ज्ञाने पदानां शक्तिरित्येतन्मतेऽपि व्यक्तिज्ञानजननसमर्थस्य पदस्य जाताविव व्यक्तावपि वाच्यत्वं दुरपन्हवमेव शक्तिनिरूपकज्ञानविषयत्वरूपस्य तस्याविशेषेण जातिव्यक्त्योः सत्त्वादिति चेद् ? न-

व्यक्तिशक्तावस्माकं न वैमत्यमपि तु शक्तिज्ञानहेतुतायामेव, अत एव व्यक्त्यंशे कुब्जा शक्तिरिति गीयते तदंशे तज्ज्ञानानपेक्षणाद्, अत एव व्यक्तेर्न वाच्यता, न हि शक्तिधीविषयतामात्रेणैव वाच्यता; तादृशविषयताया-अन्वयसाधारण्याद्, अपि तु यद्विषयकत्वेन शक्तिज्ञानस्य तद्विषयकशाब्दधीजनकता तत्त्वमेव तद्वाच्यत्वव्यवहारनियामकम्, अन्वयांशे कुब्जशक्तिसत्त्वेऽपि यथा तद्विषयकत्वं-शक्तिज्ञानजनकतायां नावच्छेदकं तथा व्यक्त्यंशे तत्सत्त्वेऽपि तद्विषयकत्वस्य शक्तिज्ञानजनकतायामनवच्छेदकत्वान्न व्यक्तौ तद्व्यवहारः, तद्विषयकत्वस्य शाब्दधीविशेषणत्वाद् गवादिपदशक्तिज्ञानस्य गोत्वादिज्ञानविषयकत्वेन गो-

त्वादिशाब्दधीहेतुत्वेऽपि न गवादिपदस्य गोत्वादिज्ञानवाचकताऽऽपत्तिः ।

---

मञ्जूषा ।

कुब्जशक्तिमतमालम्ब्य समाधत्ते—व्यक्तिशक्ताविति । हेतुतायामेवेति । तथा सत्यानन्त्यं व्यभिचारो वा स्यादिति भावः । अन्वयेति । अन्वयांशेऽपि कुब्जा शक्तिरिति भावः । अन्विताभिधानमते तु नायं ग्रन्थः पदार्थद्वयान्वयस्य तन्मते वाच्यत्वाद्, अन्वयांशे इत्यनुपदग्रन्थाच्च । गोत्वादिज्ञानेति । शक्तिघटकत्वेनेत्यादिः । न गवादिपदस्येति । गोत्वादिज्ञानविषयकत्वस्य तत्कार्यताऽवच्छेदकत्वादिति भावः ।

माधवी ।

व्यक्तिशक्तिज्ञानत्वेन=व्यक्तिविषयकशक्तिज्ञानत्वेन । तदंशे तज्ज्ञानानपेक्षणादिति । तदंशे=व्यक्त्यंशे । गोपदं गोत्वशक्तं गोत्वज्ञानशक्तं वेत्यादिज्ञानस्य हेतुत्वाद् व्यक्त्यंशे शक्तिज्ञानस्य न शाब्दबोधोपयोग इति भावः । अन्वयसाधारण्यात्=समवायसम्बन्धसाधारण्यात् । यद्विषयकत्वेनेति । यद्व्यक्तिनिष्ठावच्छेदकतानिरूपितविषयत्वनिष्ठावच्छेदकतानिरूपितशक्तिविषयतानिष्ठावच्छेदकताकतद्विषयकशाब्दधीजनकता तत्त्वमेव वाच्यताव्यवहारनियामकमित्यर्थः । वाच्यताव्यवहारनियामकमिति । गोत्वं गोपदवाच्यमिति व्यवहारनियामकं, व्यवहारविषयस्तु गोपदनिरूपितशक्तिविषयतानिष्ठा या गोत्वविषयकशाब्दधीजनकताऽवच्छेदकतानिरूपितावच्छेदकता तन्निरूपितविषयत्वनिष्ठावच्छेदकतानिरूपिताधेयत्वसम्बन्धावच्छिन्ना याऽवच्छेदकता तद्वद् गोत्वमिति व्यवहारः=वाच्यताव्यवहारो वाच्यत्वव्यवहारनियामकत्वघटकशाब्दबुद्धौ, अत्र विशेष्ये तद्विषयकनिवेशे व्यावृत्तिमाह—तद्विषयकेत्यादिना । गोत्वादिज्ञानविषयकत्वेनेति—शक्तिज्ञानस्येति पूरणीयम् । गोत्वादिज्ञाने वाचकत्वापत्तिः, गोत्वादिज्ञानविषयकशाब्दत्वावच्छिन्नजनकत्वादिति भावः । न च गोत्वादिविषयकशाब्दबुद्धिं समूहालम्बनाद्यात्मकस्य कदाचिदुपेत्य नोक्तापत्तिरिति वाच्यम् । तद्विषयकज्ञाने मुख्यविशेष्यताद्वयशून्यत्वस्य, स्वसमानाधिकरणभेदप्रतियोगिताऽवच्छेदकत्वस्वसामानाधिकरण्योभयसम्बन्धेन शक्तिविशिष्टशक्तिशून्यत्वस्य वा निवेशनीयत्वात् ।

विनोदिनी ।

कुब्जेति । वाच्यत्वव्यवहाराप्रयोजिका ।

---

वस्तुतो यद्विषयकत्वविशिष्टज्ञानविषयकत्वेन शक्तिज्ञानस्य शाब्दधीजनकता यद्विषयकत्वेन वा शाब्दधियः शक्तिज्ञानजन्यता तत्त्वमेव तथा ।

एतेन ज्ञानत्वज्ञानस्यापि ज्ञानपदवाच्यताऽऽपत्तिः शक्यज्ञानविषयकत्वेनैव ज्ञानपदशक्तिज्ञानस्य ज्ञानत्वज्ञानविषयकशाब्दधीजनकत्वादिति परास्तम् । कारणत्वस्य कार्यत्वस्य चावच्छेदकगर्भे गोत्वादिविषयकत्वस्य निवेशाद् गोत्वादेर्वाच्यत्वोपपत्तिः । एवं च गौर्गोपदशक्येत्याकारिकाऽपि शाब्दबोधोपयोगिशक्तिधीः सम्भवति । व्यक्त्यंशे शक्तेरबाधेनान्यथाख्यात्यापत्तिविरहात्, तादृशज्ञानस्य शाब्दधीहेतुत्वेऽपि गोत्वधर्मिताऽवच्छेदककशक्तिज्ञानत्वेन व्यक्तिविषयतामनन्तर्भाव्यैव गोत्वप्रकारकशाब्दबुद्धौ तथात्वाद् उक्तरीत्या व्यक्तेरवाच्यतोपपत्तिः ।

---

मञ्जूषा ।

संकेतशक्तिपक्षेणाभिधाय सामर्थ्यशक्तिपक्षलाघारण्येनाह-यद्विषयकत्वेनेति । शक्यज्ञानेति । शक्तिज्ञानत्वेन शक्तिविषयकज्ञानेति । एतेन=ज्ञानविषयकत्वविशिष्टज्ञानविषयकत्वेन जन्यताऽनवच्छेदकत्वेन, एवं च=वाव्यपि शक्तेः सिद्धौ च ।

माधवी ।

लाघवादाह । यद्विषयकत्वेन वेति ।

तथा=वाच्यत्वव्यवहारनियामकं शक्यज्ञानविषयकत्वेनैव, ज्ञानत्वेति । ज्ञानपदाज् ज्ञानत्वेन ज्ञानमात्रविषयकस्यैव शाब्दबोधस्याऽभिप्रेतत्वे ज्ञानत्वज्ञानविषयकत्वस्य तत्राक्षतेरिति भावः। एवं च=गवि शक्तिमत्त्वे च ।

विनोदिनी ।

यद्विषयकत्वेनेत्यादिवाच्यत्वलक्षणे ज्ञानशक्तिमते ज्ञानत्वज्ञाने ज्ञान-

पदवाच्यत्वं परिजिहीर्षुराह–वस्तुत इति । एवं च यन्निष्ठविषयतानिरूपकत्वविशिष्टज्ञाननिष्ठविषयतानिरूपकत्वावच्छिन्ना शक्तिज्ञाननिष्ठा शाब्दबोधनिरूपितजनकता; यद्वा यन्निष्ठविषयत्वनिरूपकत्वावच्छिन्ना शक्तिज्ञाननिरूपिता शाब्दबोधनिष्ठजन्यता; तत्त्वस्यैव वाच्यताव्यवहारनियामकत्वं, तथा च गोत्वादेरेव तथात्वेन वाच्यत्वं न तु गोत्वादिज्ञानस्येति भावः ।

---

न चैवं व्यक्त्यंशे शक्तिज्ञानस्यापेक्षिततया तदंशे शक्तेः कुब्जत्वानुपपत्तिरिति वाच्यम् ? कार्यकारणभावावच्छेदककोटौ व्यक्त्यनन्तर्भावस्यैव तदंशे कुब्जत्वव्यवहारनिर्वाहकत्वाद्, अत एव सामान्यलक्षणापूर्वपक्षे मणिकृतां-समानप्रकारकत्वेन शक्तिधीशाब्दधियोर्हेतुहेतुमद्भावाभिधानमपि न विरुध्यते । न च शक्त्यंशे गोत्वादिप्रकारकज्ञानस्य गवांशे गोत्वप्रकारकशाब्दबोधहेतुत्वेऽपि कार्यकारणयोः समानप्रकारकत्वस्याक्षतत्वान्नानुभव विरोध इति वाच्यम् ? शक्त्यंशे गोत्वादिप्रकारतामादाय समानप्रकारकत्वस्याभिप्रेतत्वेऽ"पूर्वे वक्ष्यत" इत्यस्यासङ्गत्यापत्तेः–अपूर्ववादे समानप्रकारकाल्लिङ्पदस्य कार्यत्वेन घटादिरूपकार्ये शक्तिज्ञानात् कार्यत्वेनापूर्वविषयकशाब्दबोध इत्येवाभिधानात्, शक्त्यंशे शाब्दबोधप्रकारप्रकारकज्ञानस्य हेतुतायास्तत्रानुक्तेः । न चैवं "जात्यंशे सा ज्ञाता व्यक्त्यंशे स्वरूपसती हेतुर्लाघवादिति कुब्जशक्तिवाद" इत्यादिचिन्तामणिग्रन्थविरोध इति वाच्यम् ? मतभेदेनोभयग्रन्थसङ्गतेः ।

वस्तुतस्तु जातिधर्मिताऽवच्छेदककशक्तिज्ञानस्य हेतु-

त्वे व्यक्तेर्विषयताऽपि कारणताऽवच्छेदककोटौ निविशते—विशेष्यताऽवच्छेदकतात्वेनैव धर्मिताऽवच्छेदकीयाविषयताविशेषस्य निवेशनीयत्वात् । अवच्छेदकतानिरूपकविशेष्यताया-व्यक्तिविषयतारूपत्वाद्, एवं च व्यक्तेरवाच्यताव्यवहारस्य कथञ्चिदुपपादनेऽपि शक्त्यंशे जातिप्रकारकज्ञानहेतुता-मतापेक्षया गौरवं दुर्वारमेव कारणताऽवच्छेदकेऽधिकविषयता-निवेशात् । एवं द्रव्यत्वादिधर्मिताऽवच्छेदककप्रमाऽऽत्मकगवा-दिपदशक्तिज्ञानाद् द्रव्यत्वादिप्रकारकशाब्दबोधवारणाय शक्त्यंशे धर्मिताऽवच्छेदकावच्छिन्नत्वावगाहित्वस्याप्यधिक-स्य निवेश्यतया गौरवमिति व्यक्तौ कुब्जशक्तिवादिना-मपि शक्त्यंशे जातिप्रकारकज्ञानहेतुतामतमेव साधीयः ।

---

मञ्जूषा ।

अत इति । यतो व्यक्तिशक्तेः कुब्जत्वं=जनकताऽवच्छेदकविषयता-वत्त्वं न च ज्ञातत्वमतइत्यर्थः । एतावता कुब्जशक्तिमतं परिष्कृत्य तत्र प्रोक्तकार्यकारणभावं दूषयति-वस्तुतस्त्विति । कथं चिदिति । यदुपर-क्तविषयता जनकताऽवच्छेदिका स एव वाच्यः, व्यक्तेस्तु गम्या विष-यता तथा; न तूपरक्तेति न तस्या वाच्यत्वापत्तिः ।

यत्तु जनकताऽवच्छेदकीभूतधर्मिताऽवच्छेदकतावत्त्वं वाच्यत्वमिति तत्तुच्छं-विनिगमनाविरहेण जनकताऽवच्छेदकधर्मितावत्त्वस्य वाच्यत्व-स्य दुर्वारत्वात् । शक्त्यंश इति । तादृशभट्टमतापेक्षयेत्यर्थः । अधिकविष-यता=व्यक्तिविषयता, संकेतशक्तिमते च व्यक्त्युपरक्ता विषयता जनक-ताऽवच्छेदिकेति महागौरवं कटाक्षितं, भट्टानां पदार्थान्तरं शक्तिः गुरूणां-सामर्थ्यं शक्तिरियान्परं भेदोऽस्तु, कार्यकारणभावस्तु सहृवदेव कार्य-इत्याह-एवमिति । शक्त्यंश इति । न्यायमत एव दोषस्य प्रागुद्धृतत्वादि-दं गुरुमते । शक्त्यंश इति । गोपदं गवि शक्तमित्याकारकम् ।

माधवी ।

अत एव=गौर्गोपदशक्य इत्याकारकज्ञानस्य हेतुत्वादेव । कथञ्चिदुपपादनेऽपीति । यद्विषयकशक्तिज्ञानस्येत्युक्तेरित्यादिः ।

विनोदिनी ।

मतभेदेनेति । व्यक्तावज्ञातशक्तेः कुब्जत्ववत् कार्य्यकारणभावावच्छेदककुक्षौ व्यक्तिविषयकत्वानन्तर्भावेऽपि कुब्जत्वव्यवहारे बाधकाभावः । अधिकेति ।व्यक्तिविषयकत्वेत्यर्थः ।

---

वस्तुतस्तु सर्वलाक्षणिकस्थलेऽप्यन्वयबोधस्यानुभविकत्वेन दुरपन्हवतया लाक्षणिकस्यानुभावकत्वं दुर्वारमेवेति तस्य लक्ष्यार्थे कुब्जशक्तिप्रसङ्ग इति नानुभवजननसामर्थ्यमीश्वरसंकेतो वा वृत्तिरूपा शक्तिः; अपि तु पदार्थान्तरमेव, सा च जातावेव कल्प्यते न तु व्यक्त्यादाविति न तत्र कुब्जशक्तिरपीति तत्त्वम् ।

अथ व्यक्तेर्गवादिपदावाच्यत्वे गवादिपदाद्व्यक्तेः स्मरणमनुभवो वा न स्याद् न च पदावाच्यत्वेऽप्यन्वयस्येव व्यक्तेर्भानं शाब्दबोधे नानुपपन्नमिति वाच्यम् ? तद्धर्मप्रकारकशाब्दबोधे तद्धर्मप्रकारकपदार्थोपस्थितेर्हेतुतया गोत्वप्रकारकबुद्धौ गोत्वादिप्रकारकव्यक्तिस्मरणस्यापेक्षणीयतया सम्बन्धग्रहाविषयतया व्यक्तेरस्मरणे व्यक्तेः शाब्दानुभवाविषयताया दुरुपपादत्वाद्, अन्वयस्य च संसर्गविधयैव भानाच्छाब्दधियोऽन्वयांशे निष्प्रकारकतया तदुपस्थित्यनपेक्षणेन तत्र वाच्यत्वानुपयोगादिति चेत ?

---

मञ्जूषा ।

इदानीं कुब्जशक्तिं खण्डयति—वस्तुत इति । ईश्वरेति । न्यायमत उक्तदोषोद्धारप्रकारप्रदर्शनेऽपीश्वरानङ्गीकर्तॄणां तत्संकेतस्य शक्तित्वं व्याहतमिति भावः । न स्यादिति । तथा च गौर्नष्टा गौर्जातेत्यादावन्वयबोधानुपपत्तिरिति भावः ।

माधवी ।

अनुभवजननसामर्थ्यं शाब्दानुभवजनकताऽवच्छेदकतानिरूपकाश्रयत्वसम्बन्धेन पदादिनिष्ठशक्तिवादादिमतसिद्धातिरिक्तमित्यर्थः ।

विनोदिनी ।

सर्वलाक्षणिकेति । धूमादित्यादौ—अत्र हि धूमस्य तज्ज्ञाने; पञ्चम्याश्च ज्ञाप्यत्वे लक्षणा ।

---

अत्र भट्टाः—पदान्न व्यक्तेः स्मरणमनुभवो वा किं त्वाक्षेपादेव व्यक्तिधीः, आक्षेपिका च जातिरेव । आक्षेपश्चानुमानमर्थापत्तिर्वा । न च जातिव्यक्त्योर्वैयधिकरण्येनाक्षेपासम्भवः? तादात्म्यसम्बन्धेन जातेराधेयतासम्बन्धेन व्यक्त्याक्षेपकतायामविरोधात् ।

वस्तुतस्तु गामानयेत्यादौ स्वाश्रयवृत्तित्वादिरूपपरम्परासम्बन्धेनानयनकर्मत्वादौ गोत्वादिजातेरन्वयः शाब्दः; तेन सम्बन्धेन गोत्वादिमत्त्वस्य चाधेयतासम्बन्धेन गवादिव्याप्यत्वनद्; आधेयतासम्बन्धेन गवादिमत्त्वं विनाऽनुपपद्यमानत्वाच्चानयनकर्मत्वादावाधेयतासम्बन्धेन गवादिव्यक्तिप्रकारिका धीराक्षेपात् । पूर्वसंसर्गघटकतया शाब्दबोधे व्यक्तिभानेऽपि कर्मत्वांशे गोत्वाद्यवच्छिन्नव्यक्तिप्रकारकभानानुरोधेनाक्षेपादरः । गोत्वं गवाश्रितं गोनिष्ठभेदप्रतियोगिताऽनवच्छेदकधर्मत्वात्, किंचिदाश्रितं वा जाति-

त्वादित्यनुमानतो व्यक्तिभानं तु न सार्वत्रिकं—तादृशहेतू-पस्थितेरसार्वत्रिकत्वाद् गवादिपदात्तादृशरूपेण गोत्वादे-रनुपस्थितेः ।

---

मञ्जूषा ।

आक्षेपादेवेति । अनाक्षिप्तभानमर्थाध्याहारो न भट्टसम्मत इति बोध्यम् । नन्वाक्षेपकल्पने विलम्बापत्तिरित्यत आह-वस्तुतस्त्विति । एतन्मते गोनिष्ठकर्मत्वज्ञानस्योत्तरत्वं दर्शयति—तेन सम्बन्धेनेति । आक्षेपोत्तरं-शाब्दबोधाय प्रकारान्तरेणाक्षेपं वदतां मतमाह-गोत्वमिति । गगनवारणाय धर्मपदम् ।

माधवी ।

आक्षेपकतायामविरोधादिति ।

ननु तादात्म्यसम्बन्धेन गोरहेतुता; आधेयतासम्बन्धेन गोत्वे गोर-नुमानसम्भवे गामानयेत्यादौ कर्म्मत्वादावाधेयतासम्बन्धेन गवादि-बोधस्यानुभवसिद्धस्यानुपपत्तिरत आह—वस्तुतस्त्विति । अर्थापत्तिप्र-योजकातिव्याप्तिं दर्शयति—गवादिमत्त्वं विनेति । अनुपपद्यमानत्वाच्चे-ति हेतुत्वं गवादिव्यक्तिप्रकारिका धीरित्यत्रान्वेति । तादृशरूपेणेति । गोनिष्ठभेदप्रतियोगिताऽनवच्छेदकत्वरूपेणेत्यर्थः ।

विनोदिनी ।

अर्थापत्तिर्वेति । तदभावप्रयोज्यसत्त्वाभाववत्त्वरूपानुपपद्यमानत्वज्ञा-नमर्थापत्तिः ।

वैयधिकरण्यादिति । तथा च हेतोरुपपादकस्य वा साध्येनोपपाद्येन वा सामानाधिकरण्याभावाद् व्याप्त्यादेरभावात् कथमनुमित्यादिरिति न वाच्यम्, हेतुताऽवच्छेदकस्य तादात्म्यसंबन्धस्य; आधेयतासंबन्धस्य च साध्यताऽवच्छेदकस्य सामानाधिकरण्यनिर्वाहकत्वात् तथा च जा-तिराधेयतया व्यक्तिमती तादात्म्येन जातेरित्यनुमानं निराबाधमेव ।

कर्मत्वांश इति । गोत्वाश्रयव्यक्तिप्रकारककर्मत्वविशेष्यकभाननि-र्वाहाय व्यक्तेराक्षेपः, स्वाश्रयवृत्तित्वसम्बन्धघटकतया व्यक्तेर्भानेऽपि तेन व्यक्तेः प्रकारतया भानानिर्वाहात्तदाक्षेपानुरोधः ।

---

अथ गवादिपदाद् व्यक्तेरस्मरणे गोत्वादिस्मरणमेव कथमुपपद्यते ? गोत्वप्रकारकस्मरणे व्यक्तेर्विशेष्यतया भाननियमात्, तद्विशेष्यकस्मरणे च व्यक्तिघटितगोत्वत्वादेः प्रकारतया भाननियमाद्, व्यक्त्यघटितप्रकारस्य स्मरणस्य संभवेऽपि स्वरूपत एव जातेः शक्यतया धर्मान्तरविशेष्यतया तत्स्मरणासम्भवात् । धर्मान्तरप्रकारेण स्मरणेऽपि गोत्वाद्यंशे निष्प्रकारकशाब्दज्ञानासम्भवेन तादृशस्मृतेरुपपयोगित्वाभावाच्चेति चेद् ? न—पदादालोचनरूपस्यैव स्मरणस्योपगमात् किंचिद्धर्मावच्छिन्नसम्बन्ध्युपरक्तसम्बन्धज्ञानाधीनतत्सम्बन्धिस्मृतेः सप्रकारकत्वनियमेऽपि निर्विशेषणकसम्बन्ध्युपरक्तसम्बन्धज्ञानान्निर्विकल्पकस्मरणे बाधकाभावात् । निर्विकल्पकस्य संस्काराजनकत्वेऽपि विशिष्टज्ञानाहितविशिष्टगोचरसंस्काराद्विशेष्यांशानुद्बोधदशायां केवलविशेषणांशस्मरणे न विरोध इति वदन्ति ।

---

मञ्जूषा ।

व्यक्त्यघटितेति । गोत्वत्वाद्यनात्मकं गोपदशक्यत्वगोत्वनिष्ठतद्व्यक्तित्वादि । आलोचनं=निर्विकल्पात्मकम् ।

माधवी ।

तद्विशेष्यकस्मरणेति । गोविशेष्यकस्मरणेत्यर्थः । व्यक्तिघटितगोत्वादेरिति । गोत्वत्वस्य गवेतरावृत्तित्वे सति सकलगोवृत्तित्वादिति भावः । व्यक्त्यघटितप्रकारस्य=गोत्वनिष्ठविषयत्वादेः, आलोचनरूपस्यैव=निर्विकल्पकरूपस्यैव; स्मरणस्योपगमादिति । पदादपि निर्विकल्पकमिति तेषां सिद्धान्तादिति भावः ।

विनोदिनी ।

तद्विशेष्यकस्मरणे=गोत्वादिविशेष्यकस्मरणे । व्यक्तिघटितेति । गोत्वत्वस्य गवेतरावृत्तित्वघटितत्वेनार्थादेव गोव्यक्तिघटितत्वमिति

भावः । सम्भवेऽपीति । प्रमेयत्वादेस्तद्घटितप्रकारस्य । तत्स्मरणासम्भवादिति । स्वरूपतो गोत्वादिविषयकशक्तिज्ञाने प्रमेयत्वादिप्रकारकशक्तिज्ञानस्याभावादित्यर्थः । स्मरणेऽपि=प्रमेयत्वादिप्रकारेणेत्यर्थः। निष्प्रकारकेति । भवदभिमतनिर्विकल्पात्मकेत्यादिः ।

---

तदसद्—गवादिपदात् स्वरूपतो गोत्वादिज्ञानेऽपि व्याप्यताऽवच्छेदकप्रकारेण तद्ग्रहासम्भवात् ततो व्यक्त्याक्षेपासम्भवात्। न च शाब्दधीविषयेण परम्परासम्बन्धेन गोत्वादिविशेषितकर्मत्वादिहेतुनाऽऽनयनादौ गवादिकर्मकत्वमनुमेयमिति वाच्यम् ? विशिष्टसाध्यस्य प्रागप्रतीतेः । एवं-गौरानीयतामित्यादौ स्वरूपत उपस्थितस्य गोत्वादेरेव विशेष्यतया भानोपगमे निर्धर्मिताऽवच्छेदककशाब्दधीस्वीकारापत्तिः, तादृशबुद्धेराक्षेपकताऽवच्छेदकावच्छिन्नविषयतया व्यक्त्याक्षेपकताऽनुपयोगिताऽऽपत्तिश्चेति व्यक्तेः शाब्दबोधे विशेष्यादिविधया भानमावश्यकमित्यवधेयम् ।

एवं गवादावानयनकर्मत्वं सामानाधिकरण्यसम्बन्धेनानयनकर्मत्वविशेषितेन गोत्वादिहेतुनाऽनुमेयं; तच्च न सम्भवति—तादृशगोत्वादेरानयनकर्मत्वादिशून्यगवादिसाधारण्येन व्यभिचारात् । सामानाधिकरण्यसम्बन्धेनानयनकर्मत्वादिविशिष्टस्य विशेषणाव्यभिचारित्वेऽपि साध्यस्य पक्षे सन्देहदशाया साध्याविशिष्टस्य हेतोः पक्षे दुर्निश्चयत्वाद्, अतो व्यक्तेः शाब्दबोधे विशेष्यादिविधया भानमावश्यकमित्यपि बोध्यम् ।

---

मञ्जूषा ।

इष्टापत्तौ त्वाह-तादृशबुद्धेरिति । "एवं गवादावि"त्यादिरधिकपाठः ।
केचित्तु- तत्र कर्मत्वस्य विशेषणत्वार्थमुपलक्षणत्वे दोषमाह-तादृशगोत्वादेरिति ।

माधवी ।

व्याप्यत्वावच्छेदकप्रकारेण तदग्रहाद्=गोत्वाग्रहात्, ततो=गोत्वादिहेतुतः, प्राग्=अनुमितेः पूर्वं, तथा च नानुमितिस्तादृशविशिष्टसाध्यज्ञानाभावात् तद्घटितव्याप्त्यादिज्ञानासम्भवात् कुतोऽनुमितिरिति भावः। दोषान्तरमाह— एवमित्यादिना ।

विशेषणाव्यभिचारित्वेऽपि=आनयनकर्मत्वाव्यभिचारित्वेऽपि, साध्यविशिष्टस्य, क्व चित्तथैव पाठः ।

विनोदिनी ।

अनुमेयमिति । आनयनं गोकर्मकं स्वाश्रयवृत्तित्वसम्बन्धेन गोत्वविशिष्टकर्मत्वनिरूपकत्वादिति प्रयोगः ।

---

• एतेन जातिवाचकपदाज् जातिबोधः शाब्दो व्यक्तिबोधस्त्वौपादानिक एवेति श्रीकरमतमनुपादेयम्—उपादानस्यार्थापत्तिरूपत्वेन भट्टमताविशेषात् । न च जातिरवे व्यक्तिबोधिका जातिकरणकत्वमेवौपादानिकत्वं बोधस्येति वाच्यम् ? जातेः प्रमाणान्तरताकल्पनापेक्षया व्यक्तिशक्तिकल्पनाया एवौचितत्वात् । एवं जातेर्नित्यतया सर्वदैव तद्धेतुकव्यक्तिधीवारणाय जातिहेतुकव्यक्तिबोधे जातिशक्तिज्ञानघटिततच्छाब्दसामग्र्याः सहकारित्वमवश्यमभ्युपगन्तव्यं; तथा च तादृशसामग्र्या एव व्यक्तिभानप्रयोजकत्वसम्भवे जातेः करणत्वकल्पनमनर्थकम । न च जातिनिरपेक्षजातिभासकसामग्र्या व्यक्तिभानप्रयोजकत्वे व्यक्त्यंशेऽपि शाब्दत्वमावश्यकं तथा सति च शक्तिज्ञान-

जन्यव्यक्तिस्मृतेरप्यपेक्षा स्याद्, जातेः करत्वे च व्यक्त्यंश-औपादानिकत्वमेव न तु शाब्दत्वमिति न तदपेक्षेति वाच्यम् ? व्यक्तिभानांशे जातेः करणत्वे तदंशेऽशाब्दत्वोपगमसम्भवे तदकरणत्वेऽपि तत्सम्भवात् । जातेरकरणत्वे व्यक्त्यंशे कीदृशकरणस्य जन्यताऽवच्छेदकधर्मवत्त्वमिति चेद् ? न—कस्यापि, तावता क्षतिविरहात् ।

---

मञ्जूषा ।

श्रीकरमतमुत्थापयति-एतेनेति । अर्थापत्तीति । आनयनकर्मत्वस्य गवादिमत्त्वं विना गोत्वादिमत्त्वमनुपपन्नमिति ज्ञानेत्यर्थः । तावताऽऽधेयतासम्बन्धावच्छिन्नगवाद्यभावव्यापकतया स्वाश्रयवृत्तित्वसम्बन्धावच्छिन्नतादृशकर्मत्वाभावभानेऽपि शाब्दबोधस्यापक्षताऽवच्छेदकावच्छिन्नाविषयत्वादिति भावः । जातिरेवेति । अर्थापत्त्यादिकं तु सहकारीति भावः। तद्धेतुकेति । तदुपादानकेत्यर्थः । हेतुकेति । कारणकेत्यर्थः । अंशभेदेन शाब्दत्वौपादानिकत्वयोः समावेशमालम्ब्य शङ्कते-न चेति । तावता व्यक्त्यंशे कारणान्तरानपेक्षायाम् ।

माधवी ।

भट्टमताविशेषादिति । साध्यव्यतिरेकव्याप्तिविशिष्टहेतुमज्ज्ञानजन्यतया पूर्वोक्तदोषस्यैव जागरूकत्वादिति भावः । न तदपेक्षेतीति । न वृत्तिज्ञानजन्यव्यक्तिमतेरपेक्षा व्यक्तिभानांशे ।

जातेः करणत्व इति । गामानयेत्यादिशब्दाद् गोकर्मताकानयनानुकूलकृतिमानित्येव बोधः, तत्र गोत्वाद्यंशे जातिकरणकत्वमौपादानिकम्, अत्र गां शृणोमीत्यनुव्यवसायानङ्गीकार एव तदंशेऽशाब्दत्वोपगमे तत्प्रयोज्यशाब्दबोधविषयत्वोपरागेणैव शाब्दानुव्यवसायादिति श्रीकरमतं दूषितम् ।

तदकरणत्वेऽपीति । तत्सम्भवात्=गां शृणोमीत्यनुव्यवसायानङ्गीकाररूपशाब्दानुपगमसम्भवाद्, वृत्तिप्रयोज्यविषयत्वोपगमेनैव शाब्दानुव्यवसायस्वीकारादिति भावः । ननु जातेरकरणत्वे वृत्तिज्ञानजन्यताऽवच्छेदकमेव व्यक्तिविषयकत्वं वाच्यं; तथा च गां शृणोमीत्यनुव्यवसायापत्तिर्दुर्वारैवेति शङ्कते—जातेरकरणत्वइति । शक्यंशे व्यक्त्यंशज्ञाने क-

रणस्य जनकताऽवच्छेदकव्यक्तिविषयकत्वमित्यर्थः । न कस्यापीति । अयमभिप्रायः—श्रीकरादिमतेऽपि मातृविषयकत्वस्य वृत्तिज्ञानादिजन्यताऽवच्छेदकत्वेऽपि घटादिशाब्दबोधे तादृशशाब्दसामग्रीप्रयोज्यमितिमातृविषयकत्ववद् व्यक्तिविषयकत्वस्य वृत्तिज्ञानजन्यताऽनवच्छेदकत्वेऽपि तादृशसामग्र्या एव तत्प्रयोजकत्वसम्भवादिति ।

विनोदिनी ।

औपादानिकत्वमेवेति । जातिकरणकबोधविषयत्वमेवेत्यर्थः ।

---

व्यक्तेरपि बोधः शब्दादेव न त्वाक्षेपादितः, व्यक्तिशाब्दबोधे शक्तिविरहो नानुपपत्तिं प्रयोजयति लक्षणात एव तदुपपत्तेरिति मण्डनाचार्यमतं, तदुक्तम्—

जातेरस्तित्वनास्तित्वे न हि कश्चिद्विवक्षति ।
नित्यत्वाल्लक्ष्यमाणाया व्यक्तेस्ते हि विशेषणे इति ।

अस्तित्वनास्तित्वे=उत्पादविनाशौ, लक्षणा च जातिप्रकारेणैव व्यक्तिं बोधयति न तु व्यक्तित्वादिनेति नानुभवविरोधः, नीलादिपदस्य शक्यनीलादिगुणपुरस्कारेण लक्षणया बोधकत्ववच्छक्यजातिपुरस्कारेण लक्षणया गवादिपदस्य व्यक्तिबोधकत्वेऽविरोधात् । "स्वार्थादन्येन रूपेण ज्ञाते भवति लक्षणे" त्यत्र स्वार्थपदस्य शक्यताऽवच्छेदकपरत्वात् ।

अत्रेदं चिन्त्यम्—गवादिपदाल्लक्षणया गोत्वप्रकारकबोधोपगमे जातिशक्तिरन्वयबोधे नापेक्ष्येत—लक्ष्यताऽवच्छेदकताया एव जातिभाने प्रयोजकत्वसम्भवात् । न च शक्तिं विना शक्यसम्बन्धरूपलक्षणैव न निर्वहतीति शक्ते-

रुपयोगितेति वाच्यम्? लक्षणानिर्वाहार्थं जातिशक्तिकल्पने गवादिपदस्य द्रव्यत्वादावपि विनिगमनाविरहेण शक्तिकल्पनप्रसङ्गाद्, द्रव्यत्वादिसम्बन्धेनापि गवादौ लक्षणासम्भवात्, प्रयोगविरहस्य द्रव्यत्वादाविव स्वातन्त्र्येण गोत्वादावप्यविशिष्टत्वात्, लक्षणाघटकतया शक्तेरुपयोगितायां तस्या वृत्तित्वानुपपत्तेः स्वातन्त्र्येणातथात्वात् ।

मञ्जूषा ।

**मण्डनमतमुत्थापयति-व्यक्तेरपीति । उत्पादेति । तथा च गौर्जाता गौर्नष्टेति व्यवहारवारणाय व्यक्तौ लक्षणाऽऽवश्यकीत्यर्थः । अतथात्वाद्=अनुपयोगित्वात् शक्यार्थानुपस्थापकत्वादिति भावः ।**

माधवी ।

**प्रयोगविरहस्य=शक्त्या प्रयोगविरहस्य ।**

विनोदिनी ।

**मण्डनमिश्रमतं दर्शयति-व्यक्तेरपीति ।**

अथाकृतिविशिष्टायामेव व्यक्तौ लक्षणा—आकृतिप्रकारेण व्यक्तिबोधस्य नैयायिकानामप्यनुमतत्वात्तत्र शक्त्युपस्थापितजातेरन्वय उपगम्यते । न चाकृतावेव शक्तिर्जातिविशिष्टे लक्षणेति वैपरीत्यमेव किं न स्यादिति वाच्यम्? आकृतेरवयवसंयोगरूपाया आनन्त्यात्तदपेक्षयैकस्यां जातावेव शक्तिकल्पनौचित्यात । न चावयवसंयोगनिष्ठजातिरेव शक्या व्यक्तौ तदन्वयश्च स्वाश्रयघटितपरम्परासम्बन्धेन स्वीक्रियतामिति वाच्यम्? आकृतिप्रकारकबोधस्यानुभविकत्वात । लक्ष्यार्थानुपरक्ता-

या केवलजातौ प्रयोगविरहश्च न शक्त्यभावसाधकः अप्रयोजकत्वादिति प्रयोगमात्रविरहस्यैव तदशक्यत्वे बीजत्वाज् जातावप्रयोगस्यासिद्धत्वात्, तात्पर्यसत्त्वे च वृत्तिद्वयाधीनबोधोपगमे क्षतिविरहः।

न चैवं केवलमुख्यार्थतात्पर्येण गवि नित्यत्वमिति स्वारसिकप्रयोगापत्तिरिति वाच्यम्? शक्त्या स्वरूपत उपस्थिताया जातेः समानपदोपात्तधर्मिण्याश्रयतासम्बन्धेनान्वयस्यैव व्युत्पन्नत्वाद्, न चान्वयिताऽवच्छेदकरूपेणानुपस्थितताया जातेरन्वयो विरुध्यते? व्युत्पत्तिवैचित्र्येण प्रकारतया जातेरन्वयस्वीकारे क्षतिविरहादिति रीत्या चेन्मतमेतत्परिष्क्रियते; तथाऽपि स्वरूपतो गोत्वाद्यन्वयबोधस्य लक्ष्यार्थे गवादौ स्वीकारे तादृशान्वयबोधं प्रति योग्यताज्ञानादीनां कारणताकल्पनाऽऽधिक्याद् गोत्वादिविशिष्टव्यक्तिशाब्दधीसामग्रीप्रतिबन्धकतायां जातिव्यक्तिविषयकोपस्थितिद्वयस्य निवेशनीयतया प्रतिबन्धकताऽवच्छेदकशरीरगौरवाच्च जात्याकृतिविशिष्टव्यक्तिशक्तिपक्ष एव साधीयान्।

---

मञ्जूषा।

अथेति। लक्ष्यताऽवच्छेदकतया जातिभानासंभवे जातिशक्तिरावश्यकीत्याशयः। व्युत्पत्तीति। भिन्नपदोपस्थाप्यार्थेऽन्वयबोधे विषयिताऽवच्छेदकरूपेणोपस्थितिस्तन्त्रमित्याशयः।

विनोदिनी।

क्षतिविरहादिति। अन्वयिताऽवच्छेदकरूपेणानुपस्थितस्य विशेष्यतयाऽन्वयो विरुद्धो; न प्रकारतयेति भावः।

प्राभाकरास्तु—जातिशक्तिज्ञानादेव जातिप्रकारेण-व्यक्तेः स्मरणं शाब्दबोधश्च; न तु निर्विकल्पकरूपं जाति-स्मरणं, निर्विकल्पकानभ्युपगमाद् , व्यक्तिसम्बन्धज्ञानवि-रहेण तदंशानुद्बोधाद् व्यक्तिस्मरणासंभव इति तु नाशङ्क-नीयम्—व्यक्तिमविषयीकृत्य स्वरूपतो गोत्वादिज्ञानासंभवे-न गोत्वाद्युद्बोधकस्यैव व्यक्त्युद्बोधकत्वात् तदुद्बोधकस्य फलबलकल्प्यत्वात् , सम्बन्धिताऽवच्छेदकहस्तित्वादिसम्ब-न्धाग्रहेऽपि हस्त्यादिसम्बन्धिहस्तिपकादिज्ञानात्मकोद्बो-धकबलाद् हस्त्यादिस्मरणे हस्तित्वादेः प्रकारतया भान-वद् व्यक्तिसम्बन्धज्ञानमन्तरेणापि जातिसम्बन्धिपदज्ञा-नाज् जातेः स्मरणे व्यक्तेर्विशेष्यतया भाने विरोधविर-हात् , तद्धर्मप्रकारकस्मृतौ तद्धर्मावच्छिन्नसम्बन्धितया गृ-हीतवस्तुज्ञानस्य हेतुतायामदृष्टरूपोद्बोधकजनितस्मृतौ व्य-भिचारवारणाय कार्यताऽवच्छेदकसंकोचस्यावश्यकतया तत-एव प्रकृतव्यभिचारानवकाशात् । जातिशक्तिज्ञाने नियम-तो जातिप्रकारेण व्यक्त्यभानात् तज्जन्यसंस्कारादेव व्य-क्तिस्मरणसम्भवाद् ,नियमतो व्यक्तिस्मरणासम्भव इति चेत् ? का क्षतिः, व्यक्तिविषयकज्ञानान्तरस्यावश्यकतया तज्ज-न्यसंस्कारादेव व्यक्तिस्मरणसम्भवात् ।

---

मञ्जूषा ।

द्वयस्येति । न च भवन्मतेऽपि जातिप्रकारकत्वे सति व्यक्तिविशेष्य-कत्वेन व्यक्तिविशेष्यकत्वे सति जातिप्रकारेण विनिगमनाविरहाद्

हस्तिसंस्कारोद्बोधकहस्तिपकज्ञानस्य हस्तित्वोद्बोधकत्वे कुतो न द्रव्या-द्युद्बोधकत्वमित्यत्राह—उद्बोधकस्येति । कल्प्यत्वादित्यस्य विरोधविरहा-दित्यनेनान्वयः। संकोचः=कारणवैशिष्ट्यं निवेश्यम् । नियमत इति । पदं-गोमत् शक्तिर्वा गोमतीत्यादौ व्यक्तेर्भानेऽपि पदं गौः शक्तिर्गौरित्यादिज्ञाने तदभानात् । व्यक्तीति । गौरित्यनुभवस्येत्यर्थः । संस्कारादेवेति । जात्यु-द्बोधकबलादेवोद्बुद्धादिति शेषः ।

माधवी ।

कार्यताऽवच्छेदकं शङ्कते—कार्यताऽवच्छेदकसंकोचस्येति, अव्यव-हितोत्तरत्वघटिततया ।

विनोदिनी ।

कार्यताऽवच्छेदकसंकोचस्येति । तत्कुक्षावव्यहितोत्तरत्वनिवेशस्येति भावः । ज्ञानान्तरेति । प्रत्यक्षादीत्यर्थः ।

---

अथ भवतु जातिशक्तपदज्ञानाज्जातिप्रकारेण व्य-क्तिस्मरणं तथाऽपि तत्प्रकारकशाब्दबोधो न संभवति—तद्धर्मप्रकारकधर्मिविषयकशाब्दबोधे तद्धर्मप्रकारेण ध-र्मिगृहीतवृत्तिकपदज्ञानजन्यतद्धर्मप्रकारकव्यक्त्युपस्थिते-र्हेतुत्वात्, पदे गृहीतवृत्तिकत्वमात्रनिवेशे घटत्वादिगृही-तवृत्तिकपदे गोत्वाद्यवच्छिन्ननिरूपितसम्बन्धान्तरावगा-हिज्ञानजन्यगोत्वादिप्रकारकस्मरणाद् गोत्वादिप्रकारक-शाब्दबोधापत्तिः । तद्धर्मगृहीतवृत्तिकत्वनिवेशे पशुत्वादि-धर्मागृहीतशक्तिकविशिष्टवाचकपश्वादिपदात् पशुत्वादि-विशिष्टविषयकशाब्दबोधस्य गुरूणामनुमतस्यानुपपत्तिः ।

न च प्रकारीभूतधर्मभेदेन कार्यकारणभावभेदस्य यत्त्वतत्त्वाननुगमेनावश्यकत्वाज् जातिप्रकारकशाब्दबोध-एव जातिरूपधर्ममात्रगृहीतवृत्तिकपदज्ञानजन्यस्मरणस्य

हेतुत्वमङ्गीकार्यमिति वाच्यम् ? एवमपि जातिमल्लाक्षणिकपदज्ञानाज् जातिप्रकारकशाब्दबोधानुपपत्तेर्जागरूकत्वात्, लक्षणाज्ञानाधीनपदार्थोपस्थितेर्हेतुत्वान्तरकल्पने च गौरवात् ।

न च तन्मतेऽध्याहृतर्थस्यान्वयबोधाविषयतया पदजन्यपदार्थोपस्थितित्वेन हेतुत्वमेव नास्ति कथमुक्तानुपपत्त्यवसर इति वाच्यम् ? सर्वपदार्थाध्याहृतस्थलेऽन्वयबोधवारणाय तन्मतेऽपि तादृशहेतुताया व्यवस्थापितत्वात् ।

न च तथाऽपि पदज्ञानजन्यपदार्थोपस्थितित्वघटिकारणताऽवच्छेदकेन जातिमद्व्यक्तिलाक्षणिकपदजन्यव्यक्त्युपस्थितेरसंग्रहो न दोषाय; अध्याहृतपदार्थोपस्थितेर्येन रूपेण हेतुता व्यवस्थापिता लक्ष्यार्थोपस्थितेरपि तद्रूपाक्रान्ततयैवोपपत्तेः, शक्तपदस्यैवानुभावकतेति सिद्धान्तात्, सर्वलाक्षणिकस्थलेऽन्वयबोधानुपगमात्तत्स्थलीयसामग्रीबलात्सर्वाध्याहारस्थलेऽप्यन्वयबोधापत्तिरिति शङ्काऽनवकाशादिति वाच्यम् ? यत्र लाक्षणिकपश्वादिपदाद् गोत्वादिप्रकारिकोपस्थितिस्तदव्यवाहितोत्तरद्वितीयाऽऽदिविभक्तितः शक्त्या कर्मत्वाद्युपस्थितिस्ततश्च कर्मत्वादिविशेष्यको गोत्वाद्यवच्छिन्नप्रकारकः शाब्दबोधः; तत्स्थलीयसामग्री लक्षणाऽधीनपदार्थोपस्थितेरध्याहारात्मकोपस्थितिसाधारणरूपमात्रेण हेतुतामते कर्मत्वाद्युपस्थापकविभ-

क्तिप्रकृतिभूतपश्वादिपदाद्यत्र न गोत्वाद्यवच्छिन्नोपस्थितिरपि तु निराकाङ्क्षपदान्तरादनुमानादितो वा तत्राप्यक्षतैवेति तादृशबोधस्य तत्रापत्तेर्दुर्वारत्वात् । अर्थाध्याहारमतेऽपि यत्र साकाङ्क्षपदाद् न प्रकृतवाक्यार्थघटकस्य कस्याप्यर्थस्योपस्थितिस्तत्र शाब्दबोधोत्पत्तेरनिष्टत्वादिति चेद् ?

न—शक्तिलक्षणासाधारणस्यानतिप्रसक्तवृत्तित्वस्य दुर्वचतया शक्तित्वशक्यसम्बन्धत्वाभ्यामेव तयोर्निवेशनीयतया शक्तिलक्षणाऽधीनपदार्थोपस्थित्योः कारणताभेदस्य व्यक्तिशक्तिवादिनामप्यावश्यकतया शक्त्यधीनपदार्थोपस्थितेस्तद्धर्मगृहीतशक्तिकपदज्ञानजन्यतद्धर्मप्रकारकोपस्थितित्वेनैव तद्धर्मप्रकारकशाब्दबोधहेतुतायाः कल्पयितुमुचितत्वात् । न च तद्धर्मावच्छिन्नविषयतानिरूपितशक्तिविषयताशालिज्ञानत्वेन व्यक्तौ शक्तिलक्षणाग्रहयोर्व्यक्तिशक्तिवादिमतेऽनुगमः सम्भवति-गोसम्बन्धिशक्तं पदमित्याकारके पदशक्यसम्बन्धिनी गौरित्याकारके वा लक्षणाग्रहेऽपि गोत्वाद्यवच्छिन्नविषयतया समं परम्परया शक्तिविषयताया निरूप्यनिरूपकभावसत्त्वादिति वाच्यम् ! साक्षान्निरूपितत्वपरम्परानिरूपितत्वयोरनुगमकरूपाभावात् ।

---

मञ्जूषा

सम्बन्धान्तरम्=समानकालीनत्वादि। गुरूणामिति। तैः पश्वादिपदे धर्मिणि शक्तिस्वीकारात्। जागरूकत्वादिति। व्यक्तौ शक्तिस्वीकारे तद्विषयतायाः पदप्रयोज्यत्वासंभवाज् जातिप्रकारेण व्यक्तिभानं न संभवतीत्यर्थः।

ननु तत्र व्यक्तौ लक्षणाङ्गीकारात् तद्विषयता पदप्रयोज्या स्यादित्यत-आह-लक्षणाज्ञानेति। अध्याहारेति। अध्याहारात्मकार्थोपस्थितेरित्यर्थः। येन रूपेण=अर्थोपस्थितित्वेन। सिद्धान्तादित्यस्य। इति शङ्केत्यादिना-ऽन्वयः। उक्तसिद्धान्तोपगमे सर्वलाक्षणिकस्थलेऽन्वयबोधानुपपत्ति-मिष्टापत्त्या निराकुरुते-सर्वेति।

माधवी।

येन रूपेण हेतुता व्यवस्थापितेति। तद्धर्मप्रकारकशाब्दबोधे तद्धर्मा-वच्छिन्नान्वयिताऽवच्छेदकवृत्तिमत्पदजन्योपस्थितिविशिष्टतद्धर्मप्रकार-कोपस्थितित्वेनाधेयत्वरूपार्थोपस्थितिः श्रीकरादिभिर्व्यवस्थापिता, उप-स्थितिवैशिष्ट्यं च समवायघटितप्रत्यासत्त्या बोध्यमिति। लक्ष्यार्थोपस्थि तेरपि तद्रूपाक्रान्ततेति भावः। सर्वलाक्षणिकस्थलेऽन्वयबोधानु-रोधाद् नोक्तरूपेण लाक्षणिकपदार्थद्वयस्मृत्यादेर्हेतुतासम्भवः किन्तु रू-पान्तरेणैव तद्रूपसर्वाध्याहारस्थलेऽप्यध्याहृतपदार्थस्मृतौ सत्त्वात्, कुतो न सर्वाध्याहारस्थले तेषां युक्तः शाब्दबोध इत्यत आह—शक्त-पदस्यैवेति।

अर्थाध्याहारमतेऽपि यत्र साकाङ्क्षपदादिति। न चार्थाध्याहारमतेऽपि साकाङ्क्षपदजन्यार्थद्वयोपस्थितेरपेक्षणीयत्वेऽर्थाध्याहारमतपदाध्याहारम-तयोः को विशेषः पदाध्याहारमतेऽपि तादृशपदजन्यपदार्थोपस्थिते-रेव हेतुत्वादिति वाच्यम्? पदाध्याहारमते द्वारमित्यादिसाकाङ्क्षपदा-व्यवहितोत्तरत्वेनानुसन्धीयमानेऽपि पिधेहिपदादिसाकाङ्क्षवाक्यघटक-त्वे पिधेहिपदजन्यपिधानोपस्थितेरेव शाब्दजनकत्वं न तु तादृशपदाव्य-वहितोत्तरत्वेनानुसंधीयमानतादृशपदजन्यस्मृतेः; अर्थाध्याहारमते तु तादृशस्मृतेरपि शाब्दबोधजनकत्वमितिविशेषात्, तथा च तद्धर्म-प्रकारकबोधे तद्धर्मगृहीतवृत्तिकपदजन्यतद्धर्मप्रकारकोपस्थितित्वेन हेतु-त्वेन तु तथैवार्थाध्याहारस्थलेऽपि शाब्दबोधः, एवञ्च सर्वार्थाध्याहारस्थ-लेऽपि शाब्दबोध इष्ट एवेति तद्रूपेण लक्ष्यार्थोपस्थितेरहेतुत्वात्, लक्ष्या-र्थोपस्थितेः स्वातन्त्र्येण हेतुत्वमेव वाच्यमिति तन्मते गौरवं स्फुटमेव।

यत्तु—वृत्तिसंसर्गकपदप्रकारकज्ञानमेव शाब्दबोधोपयोगि, एवं च शक्तिसंसर्गतानिरूपकपदप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताशालिज्ञानत्वेन तद्धर्मावच्छिन्नविशेष्यकशक्तिलक्षणाज्ञानयोरनुगमः सम्भवत्येव—शक्यसम्बन्धेनार्थांशे पदप्रकारकग्रहस्यापि तथात्वात्, संसर्गताऽवच्छेदकीयविषयितायामपि संसर्गतात्वसत्त्वादिति, तदसत्—शक्तिकालीनत्वादिसम्बन्धावगाहिज्ञानवारणाय पदप्रकारत्वार्थविशेष्यत्वोभयनिरूपितशक्तिनिष्ठसांसर्गिकविषयतानिवेशस्यावश्यकतया शक्ति संसर्गकज्ञानसंग्राहकेण रूपेण लक्षणाग्रहासंग्रहात् ।

अथ धर्मशक्तपदस्य धर्मिस्मरणशाब्दबोधजनकत्वे लोमाद्यात्मकोपाध्यवच्छिन्नबोधकपशवादिपदस्यापि धर्मिशक्तिर्विलीयतां युक्तेः साम्यात् । न च निर्विकल्पकरूपस्य स्मरणस्य शाब्दबोधस्य चानभ्युपगमाज् जातिवाचकपदाद्व्यक्त्यविषयकस्मरणाद्यसम्भवेन तस्य व्यक्तिस्मरणादिजनकत्वं, धर्म्यविषयकस्यापि च लोमत्वाद्यवच्छिन्नविषयकस्य स्मरणादेः सम्भवात् पशवादिपदस्य लोमत्वाद्यवच्छिन्नवाचकत्वोपगमे न धर्मिधीः सम्भवतीति तस्य धर्मिवाचकतेति वाच्यम् ? उपाधेर्धर्मिविनिर्मोकेण भानसम्भवरूपस्य जात्यपेक्षया विशेषस्य सत्त्वेऽपि जातिशक्तपदज्ञानस्य जातिप्रकारिकायामिवोपाधिशक्तपद-

ज्ञानस्याप्युपाधिप्रकारकधर्मिविषयकबुद्धौ कारणताकल्पने बाधकाभावाद्, उपाधिमात्रशक्तादपि धर्मिधीसम्भवादिति चेद् ? न—लोमत्वाद्यवच्छिन्नसम्बन्धान्तरवत्तया गृहीतात् पशुत्वादिपदाल्लोमत्वादिना लोमादिमुख्यविशेष्यकस्यैव स्मरणस्य धर्मिस्मरणोद्बोधकान्तरविरहदशायामुत्पाददर्शनात् तद्रूपावच्छिन्नशक्तत्वेन गृहीतात् पदादपि तद्रूपावच्छिन्नमुख्यविशेष्यकस्मरणोत्पादस्यानुभाविकत्वात् ततस्तद्धर्मावच्छिन्नप्रकारकधर्मिस्मरणस्य नियमतः स्वीकारासम्भवाल्लोमादिमात्रशक्तत्वेन गृहीतपदान्नियमतस्तत्प्रकारकशाब्दबोधानिर्वाहाद, अविशेषितगोत्वादेः सम्बन्धान्तरज्ञानादपि तत्प्रकारकधर्मिस्मरणस्यैवोपगमेन तत्र तादृशशक्तिसम्बन्धज्ञानान्नियमतस्तत्प्रकारकधर्मिस्मरणोपगमेऽनुभवविरोधाभावाद्, अत्रेष्टापत्तेरपि सुकरत्वेन प्रतिबन्देर्वादिनिवर्त्तकत्वायोगाच्च ।

अथ गवादिपदस्य समवायेन गोत्वादिविशिष्टवाचकत्वानुपगमे तज्जन्यबोधे गोत्वादेः समवाय एव संसर्गतया भासते न तु सम्बन्धान्तरमित्यत्र किं नियामकं ? वाच्यानन्तर्भावस्य समवायसाधारण्येन सम्बन्धान्तराभानप्रयोजकत्वासम्भवाद् न हि जातिर्व्यक्तिं विना न भासत इतिवत् समवायं विनाऽपि न भासत इत्यपि नियमो येन जातिशक्तिज्ञान-

जन्यबोधे समवायभानस्याप्यावश्यकता न तु सम्बन्धान्तरभानामिति स्यात्, तद्वादिपदात् समवायमविषयीकृत्यापि सम्बन्धान्तरेण गोत्वादिविशिष्टविषयकबोधोदयादिति चेद् ? एवं सति ज्ञानशक्तिरेवादरणीया, तथा च गवादिपदस्य समवायेन गोत्वादिप्रकारकज्ञान एव शक्तेरुपगमात्ततो नाभ्रान्तानां सम्बन्धान्तरेण तत्प्रकारकधीः, तत्सम्बन्धेन तत्प्रकारकज्ञानशक्तिग्रहस्यैव तादृशबोधहेतुत्वादिति वाच्यानन्तर्भावस्य समवायासाधारण्येन सम्बन्धान्तरभानप्रयोजकत्वासम्भवादिति कृतं पल्लवितेन ॥

इति श्रीमत्समस्तविद्वन्मुकुटन्यायसिद्धान्तवागीशगदाधरभट्टाचार्यविरचितः शक्तिवादः समाप्तः ॥

शं भवतु ॥

---

मञ्जूषा ।

अत्रेति । अथेत्यादिशङ्कायामित्यर्थः । पश्वादिपदस्यापि लोमत्वादावेव शक्तिः लाघवात् फलबलाच्च, लोमत्वादिविशिष्टावच्छिन्नविषयकशाब्दबोधत्वं तज्ज्ञानकार्यताऽवच्छेदकं, न च लोमपदपशुपदयोः पर्यायत्वभ्रमदशायां लोमादिप्रकारकशाब्दबोधापत्तिरिति वाच्यं ? ज्ञानशक्तिस्वीकारेणादोषात् ।

यत्तु तादृशपर्यायत्वभ्रमदशायां लोमादिमुख्यविशेष्यकशाब्दबोधो न स्यादित्याशङ्क्यापर्यायता शक्त्यंशइति, यद्यपि शक्तिज्ञानस्य विशेष्यलोममुख्यविशेष्यकशाब्दबोधहेतुत्वोपगमात् तदभावस्य च लोमप्रकारकशाब्दबोधे हेतुत्वादिति, तच्छिष्यप्रतारणामात्रं; पर्यायताज्ञानस्य न्यायादिमते द्वयोः पदयोस्तद्धर्मावच्छिन्नशक्तिमत्त्वज्ञानादिपदत्वात्, कालीनस्य=वि-

शिष्टशक्तिज्ञानस्य, सर्वमते लोमवन्मुख्यविशेष्यकलोमप्रकारकफलजनकतया भवन्मते तदनुपपत्तेः; आशङ्काया एवाशुद्धत्वाच्च, पर्यायताभ्रमस्य पशुपदं लोमत्वशक्तमित्याकारकतया लोममुख्यविशेष्यकशाब्दबोधे बाधकाभावादिति ॥

इति श्रीरङ्गनाथसूरिसूनुनारायणानुजकृष्णभट्टविरचिता
शक्तिवादटीका मञ्जूषा सम्पूर्णा ॥

माधवी ।

शक्तिग्रहस्यैवेति । समवायसम्बन्धेन गोत्वप्रकारकज्ञानशक्तं पदमित्याकारकज्ञानस्यैवेत्यर्थः । तादृशबोधहेतुत्वात्=समवायसम्बन्धेन गोत्वप्रकारकशाब्दबोधहेतुत्वादित्यलम् ।

इति तर्कसिद्धान्तश्रीमाधवशर्म्मविरचिता शक्तिवादविवृत्तिः समाप्ता ॥

विनोदिनी ।

शक्तिलक्षणाज्ञानयोः कारणतामनुगमयति–यत्त्विति ।

सम्बन्धान्तरवत्तयेति । कालिकादिसम्बन्धवत्तयेत्यर्थः । एवं सतीति । जातिमात्रशक्तिमते नियमतो समवायाभाने सतीत्यर्थः । समवायासाधारण्येनेति । समवायस्य वाच्यान्तर्भावो, न कालिकस्य सम्बन्धादेरिति सर्वमवदातम् ॥

इति कलिजनपावनावतारभक्तजीवजीवातुपरमपुमर्थप्रेमवितरणपरायण-
भगवच्छ्रीश्रीकृष्णचैतन्यचरणोपदिष्टैकवीथीपथिकश्रीवृन्दावनस्थ-
स्वयंप्रकटश्रीश्रीराधारमणचरणपरिचरणैकसर्वस्व-
श्रीन्माध्वसम्प्रदायाचार्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्यतर्करत्नन्याय-
रत्न **गोस्वामिदामोदरशास्त्रिणा** रचिता शक्तिवादविनोदिनी संपूर्णा ।

